|| श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ||



श्रीमज्जयतीर्थयतिकृता

# श्रीमन्न्यायसुधा

परिमळाद्युपेता

संपुटम् ९ - प्रकृत्यधिकरणम् - भागः १

प्रकाशनम्

श्रीगुरुसार्वभौमसंस्कृतविद्यापीठम्

श्रीमन्मध्वाचार्यमूलमहासंस्थानम्, श्रीराघवेन्द्रस्वामिमठः, मन्त्रालयः



॥ श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ॥

श्रीमज्जयतीर्थयतिकृता

# श्रीमन्न्यायसुधा

परिमळाद्युपेता

सम्पुटम् – ९

प्रकृत्यधिकरणम् – भागः १


प्रकाशनम्

श्रीगुरुसार्वभौमसंस्कृतविद्यापीठम्

श्रीमन्मध्वाचार्यमूलमहासंस्थानम्

श्रीराघवेन्द्रस्वामिमठः, मन्त्रालयः




**श्रीमन्न्यायसुधा**

परिमळाद्युपेता

**सम्पुटम् – ९**

प्रथमं मुद्रणम् - ई.सन् २००५

**Śrīman-Nyāyasudhā**

Parimaḷādyupetā

**Volume - 9**

First Edition -2005 A.D.

पार्थिव संवत्सर, शके १९२७, ज्येष्ठ कृष्ण त्रयोदशी, सोमवासरः

श्री विजयीन्द्रतीर्थस्वामिनां आराधनामहोत्सवः

*Published by :*

**Śrī Gurusārvabhauma Saṁskṛt Vidyāpīṭham**

**Śrīman Madvāchārya Mūla Mahāsamsthāna**

**Śrī Rāghavendra Swāmy Mutt**

Mantrālayam - 518 345

India.

* मुद्रकः *

**धनंजयाचार्य बाळाचार्य वरखेडकरः**

**सुधा मुद्रणम्**

शंकरपुरम्, बेंगळूर - ५६० ००४

दूरवाणी– २६६७६९४२, ५७६० २८३६

**SUDHA MUDRANA**

Shankarpuram, Bangalore - 560 004

Phone : 2667 6942, 5760 2836



# समर्पणपत्रिका

श्रीमत्परमहंसपरिव्राजकाचार्यत्वाद्यमन्दबिरुदवृन्दविभूषित-
सर्वतन्त्रस्वतन्त्र-श्रीमद्वैष्णवसिद्धान्तस्थापनाचार्य-
षड्दर्शनाचार्यवर्य-नास्तिकदर्शननिराकरणधुरन्धर-
आस्तिकदर्शनमहाचार्य-
श्रीमन्मूलरघुपतिवेदव्यासदेवदिव्यश्रीपादपद्माराधक-

**श्रीमन्मध्वाचार्यसमलंकृतमूलमहासंस्थानाधिष्ठितानां**

श्रीमदद्वैतसाम्राज्यदिग्विजयविद्यासिंहासनाधीश्वराणां
परमपूज्यानां कामधेनुकल्पवृक्षसदृशानां

**श्रीश्रीमद्राघवेन्द्रतीर्थगुरुसार्वभौमानां**

हृत्कमलनिवासि-

**श्रीरामकृष्णवेदव्यासाभिन्न-**

**श्रीमूलरघुपतिपादकमलयोः**

समर्पितोऽयं ग्रन्थः ॥

सुजयीन्द्रकृपापूर्णसुशमीन्द्रयतीश्वरैः ।
श्रीमन्न्यायसुधाग्रन्थ अर्पितोऽयं मुदा हरेः ॥





॥ श्रीमन्मूलरामो विजयते ॥

श्रीमद्धंसनामकपरमात्मसमारब्धपरम्परागत-श्रीमत्परमहंसेत्यादिबिरुदभूषित-

श्रीमदानन्दतीर्थभगवत्पादाचार्य-मूलमहासंस्थानाधीश्वर-

**श्रीमद्राघवेन्द्रगुरुसार्वभौम-**

वेदान्तसाम्राज्यदिग्विजयविद्यासिंहासनाधीश्वर-

**श्रीमत्सुयमीन्द्रतीर्थश्रीपादकरकमलसञ्जात-**

**श्रीमत्सुजयीन्द्रतीर्थश्रीपादवरकुमारक-**

**श्री श्रीमत्सुशमीन्द्रतीर्थश्रीपादानाम्**

# अनुग्रहवचनम्

अस्मत्प्रियशिष्यान् तथैव अस्मन्मठीयान् नैकान् आस्थानविद्वज्जनान् वयं अस्मद्गुरुवराणां श्रीमत्सुजयीन्द्रतीर्थश्रीमच्चरणानामाज्ञामनुरुद्ध्य परिमलादि-बहुटिप्पणीभिर्युक्तां श्रीमन्न्यायसुधां संशोध्य प्रकाशयितुमादिष्टवन्तः स्मः।

अस्मदादेशमनुरुध्य ग्रन्थमिमं संशोध्य मुद्रणप्रतिमपि संशोधितवद्भ्यः प्रधानसम्पादकेभ्यः वैकुण्ठवासिभ्यः साणूरु भीमभट्टेभ्यः तथा ग्रन्थमिमं प्रकाशितवद्भ्यः श्रीगुरुसार्वभौमसंस्कृत-विद्यापीठीयेभ्यः एवं ग्रन्थसंशोधने तथा मुद्रणप्रतिसंशोधने सहायमाचरितवद्भ्यः अस्मद्विद्यापीठा-ध्यापकेभ्यः, तथाऽन्येभ्यो विद्वद्भ्यः, एवमल्पकाले सुष्ठु मुद्रणं कृतवद्भ्यः 'सुधा मुद्रण'नेतृभ्यः धनंजयाचार्येभ्यः तथा सर्वेभ्यः एतद्ग्रन्थाध्ययन-अध्यापनादिकर्तृभ्यः अस्मदुपास्यः श्री श्रीमद्राघवेन्द्र-तीर्थगुर्वन्तर्गत-श्रीभारतीरमण-मुख्यप्राणान्तर्गतः श्रीसीतापतिः श्रीमूलरामचन्द्रदेवः इतोऽप्यतिशयिता-युरारोग्यैश्वर्यादीनि, ज्ञानभक्तिवैराग्यादीनि च दत्वा अनुगृह्णातु इत्याशास्महे ।

*इति नारायणस्मृतिः।*

मन्त्रालयक्षेत्रम्,

पार्थिव संवत्सर

ज्येष्ठ शुक्ल तृतीया



श्रीमन्मध्वाचार्यमूलमहासंस्थान-श्रीराघवेन्द्रस्वामिमठाधीशानां
श्री श्री सुजयीन्द्रतीर्थश्रीपादानां वरकुमारकाणां
**श्री श्री सुशमीन्द्रतीर्थश्रीपादानां**
परमानुग्रहेण सम्पादितोऽयं ग्रन्थः ।

# सम्पादकविद्वन्मण्डली

**प्रधानसम्पादकाः**

**वैकुण्ठवासिनः श्री आचार्य साणूरु भीमभट्टाः**
आस्थानविद्वांसः, श्रीराघवेन्द्रस्वामिमठः, मन्त्रालयः

**सम्पादकाः**

विद्वान् श्री कु. सुशीलेन्द्राचार्याः, *प्रांशुपालाः श्री गु.सं.वि., मन्त्रालयः*

विद्वान् श्री एन्. वादिराजाचार्याः

विद्वान् श्री पुराणिक सुब्रह्मण्याचार्याः

विद्वान् आहिताग्नि श्री वरखेडकर भीमसेनाचार्याः

**निर्वाहकाः**

**श्रीपादपुत्राः राजा एस्. राजगोपालाचार्याः**
श्री श्री सुशमीन्द्रतीर्थश्रीपादानां आप्तकार्यदर्शिनः,
श्रीमन्मध्वाचार्यमूलमहासंस्थान-श्रीराघवेन्द्रस्वामिमठः,
मन्त्रालयः



# श्रीमन्न्यायसुधा

## परिमळाद्युपेता

### टिप्पणीनां क्रमः तथा सङ्क्षिप्तनामानि

| क्र.सं. | कर्तृनाम | टिप्पणीनाम | सङ्क्षिप्तनाम |
|---|---|---|---|
| १ | श्री विजयीन्द्रतीर्थाः | न्यायसुधाबिन्दुः | बिन्दुः— |
| २ | श्री राघवेन्द्रतीर्थाः | परिमळः | परि०— |
| ३ | श्री श्रीपादराजतीर्थाः | वाग्वज्रः | वाग्वज्रः— |
| ४ | श्री वादिराजतीर्थाः | गुर्वर्थदीपिका | गु०दी०— |
| ५ | श्री यदुपत्याचार्याः | टिप्पणी | यादु०— |
| ६ | श्री वंशपल्ली श्रीनिवासाचार्याः | वाक्यार्थविवृतिः | वं०प०— |
| ७ | श्री गलगली नरसिंहाचार्याः | आनन्दः | आनन्दः— |
| ८ | श्री कंबालूरु रामचन्द्रतीर्थाः | विवृतिः | कं०रा०— |
| ९ | श्री श्रीनिधितीर्थाः | टिप्पणी | श्रीनिधि०— |
| १० | श्री विद्याधीशतीर्थाः | वाक्यार्थचन्द्रिका | वा०चं०— |
| ११ | श्री पाण्डुरङ्गि केशवाचार्याः | शेषवाक्यार्थचन्द्रिका | शे०चं०— |
| १२ | श्री पाण्डुरङ्गि नरसिंहाचार्याः | वाक्यार्थरत्नमाला | वा०र०— |
| १३ | श्री सत्यव्रततीर्थाः | सुधाविवृतिः | स०व्र०— |
| १४ | श्री कुण्डलगिरिआचार्याः | रसकूलङ्कषः | कुण्डल०— |
| १५ | श्री सत्यनाथतीर्थाः | दुर्घटवाक्यार्थविचारः | स०ना०— |
| १६ | श्री विठ्ठलभट्टाः | टिप्पणी | विठ्ठ०— |
| १७ | श्री विष्णुतीर्थाः | रसरञ्जनी | रस०— |
| १८ | श्री अडवी कृष्णाचार्याः | लघुरसरञ्जनी | ल०र०— |
| १९ | श्री मन्नारी कृष्णाचार्याः | चषकः | चषकः— |
| २० | श्री एरी बाळाचार्याः | उपस्पर्शः | ए०बा०— |
| २१ | श्री काशी आचार्याः | काशी टिप्पणी | काशी०— |
| २२ | श्री गूढकर्तृकाचार्याः | गूढकर्तृका | गूढ०— |
| २३ | श्री प्रदीपकाराः | प्रदीपः | प्रदीपः— |
| २४ | श्री पांघ्री श्रीनिवासाचार्याः | टिप्पणी | पांघ्री०— |
| २५ | श्री कल्लापूर सत्याधिराजाचार्याः | हुग्गि | हुग्गि०— |



# टिप्पणीविषये स्पष्टीकरणम्

श्रीमज्जयतीर्थविरचितं महामेरुतुल्यं श्रीमन्न्यायसुधाग्रन्थमनेके व्याचख्युः। साम्प्रतमस्माभिः, उपलब्धाः श्रीमन्न्यायसुधाव्याख्याः सङ्गृह्यैकत्र मुद्रापयितव्याः इत्येकमात्रोद्देशेन अनेकव्याख्यासहिततया श्रीमन्न्यायसुधाग्रन्थः मुद्रापितः।

श्रीमद्विजयीन्द्रतीर्थश्रीपादानां श्रीमद्राघवेन्द्रतीर्थश्रीपादानां च सुधाव्याख्यानयोः इदानीं मुद्रापितायां यस्यां कस्याञ्चित् सुधाव्याख्यायां यस्मिन् कस्मिंश्चिद्विषये भिन्नाभिप्राये सति (विरुद्धाभिप्राये सति) सः तद्व्याख्यातॄणामभिप्राय एव। सः श्रीमद्विजयीन्द्रतीर्थश्रीपादानां वा परिमलकाराणां वा सम्पादकानां वा प्रकाशकानां वा सम्मत इति न मन्तव्यमिति एतन्मूलकतया स्पष्टीकुर्मः।

इत्थम्

**सम्पादकाः**



॥ श्रीमन्मूलरामो विजयते ॥

# प्रकाशकीयम्

द्वापरे श्रीगौतममहर्षिभिः शप्तेषु साधुजनेषु व्याकुलीभूतेषु श्रीब्रह्मरुद्रेन्द्रादिभिः प्रार्थितो भगवान्नारायणः श्रीवेदव्यासत्वेनावतीर्य राशीभूतान् वेदान् विभज्य, वेदार्थनिर्णायकानि (५६४) चतुःषष्ट्यधिकपञ्चशत-ब्रह्मसूत्राणि व्यरचयत्।

एषां ब्रह्मसूत्राणां श्रीवाय्ववतारिणः सर्वज्ञाः श्रीमदानन्दतीर्थभगवत्पादाः भाष्यं, श्रीमदनुव्याख्यानं, न्यायविवरणं, अणुभाष्यं चेति ग्रन्थचतुष्टयं विरचय्य महदुपाकुर्वन्।

श्रीमदाचार्याणां प्रियान्तेवासिनां श्रीत्रिविक्रमपण्डिताचार्याणां ''व्यक्ततर्कततिं कुरु'' इति प्रार्थनामनुरुध्य श्रीमदाचार्याः उपर्युक्तग्रन्थेष्वन्यतमं श्रीमदनुव्याख्यानग्रन्थं रचयामासुः।

अनुव्याख्यानस्यास्य इन्द्रांशसंभूताः श्रीमज्जयतीर्थश्रीमच्चरणाः श्रीमन्न्यायसुधानाम्नीं मेरुतुल्यामनुपमां टीकां व्यरचयन्।

ग्रन्थोऽयं चित्रपदपुञ्जमण्डितः, महागाम्भीर्यवान् महापण्डितवरेण्यानामपि महान्तं गर्वपर्वतं खण्डयितुं दक्षश्चकास्ति।

अस्यामोघस्य ग्रन्थस्य महत्त्वम् एतद्ग्रन्थस्य एतदीयानामनेकासां व्याख्यानां सङ्ख्यैव व्यञ्जयति।

| | **व्याख्यातारो महाभागाः** | **व्याख्यानस्य नाम** |
|---|---|---|
| १) | श्री श्रीपादराजतीर्थाः | वाग्वज्रम् |
| २) | श्री विजयीन्द्रतीर्थाः | न्यायसुधाबिन्दुः |
| ३) | श्री वादिराजतीर्थाः | गुर्वर्थदीपिका |
| ४) | श्री राघवेन्द्रतीर्थाः | परिमलः |
| ५) | श्री यदुपत्याचार्याः | टिप्पणी |
| ६) | श्री वंशपल्ली श्रीनिवासाचार्याः | वाक्यार्थविवृतिः |
| ७) | श्री गलगली नरसिंहाचार्याः | आनन्दः |
| ८) | श्री कंबालूरु रामचन्द्रतीर्थाः | विवृतिः |
| ९) | श्री श्रीनिधितीर्थाः | टिप्पणी |
| १०) | श्री विद्याधीशतीर्थाः | वाक्यार्थचन्द्रिका |



| | | |
|---|---|---|
| ११) | श्री पाण्डुरङ्गि नरसिंहाचार्याः | वाक्यार्थरत्नमाला |
| १२) | श्री पाण्डुरङ्गि केशवाचार्याः | शेषवाक्यार्थचन्द्रिका |
| १३) | श्री कुण्डलगिरि आचार्याः | रसकूलङ्कषः |
| १४) | श्री सत्यव्रततीर्थाः | सुधाविवृतिः |
| १५) | श्री सत्यनाथतीर्थाः | दुर्घटवाक्यार्थविचारः |
| १६) | श्री विठ्ठलभट्टाः | टिप्पणी |
| १७) | श्री कल्लापूर सत्याधिराजाचार्याः | हुग्गि |
| १८) | श्री विष्णुतीर्थाः | रसरञ्जनी |
| १९) | श्री अडवि कृष्णाचार्याः | लघुरसरञ्जनी |
| २०) | श्री मन्नारि कृष्णाचार्याः | चषकः |
| २१) | श्री एरी बाळाचार्याः | उपस्पर्शः |
| २२) | श्री काशी तिम्मण्णाचार्याः | काशी टिप्पणी |
| २३) | श्री गूढकर्तृकटिप्पणीकाराः | टिप्पणी |
| २४) | श्री प्रदीपकाराः | प्रदीपः |
| २५) | श्री पांग्री श्रीनिवासाचार्याः | टिप्पणी |
| २६) | श्री रोट्टि वेङ्कटभट्टाः | सुधाविवृतिः |
| २७) | श्री ताम्रपर्णी आचार्याः | टिप्पणी |
| २८) | श्री उमर्जी प्रह्लादकृष्णाचार्याः | उमर्जी |
| २९) | श्री व्यासतत्त्वज्ञतीर्थाः | कुलिशम् |
| ३०) | श्री महेश्वरसूरिः | टिप्पणी |
| ३१) | श्री पुट्ट तंबि आचार्याः | टिप्पणी |
| ३२) | श्री रत्नगर्भ ओडेयर् | टिप्पणी |
| ३३) | श्री अनन्तभट्टाः | टिप्पणी |
| ३४) | श्री सत्यनाथाचार्याः | टिप्पणी |
| ३५) | श्री जयवेङ्कटाचार्याः | टिप्पणी |
| ३६) | श्री गूढकर्तृकाचार्याः | सुधासारसङ्ग्रहः |
| ३७) | श्री गलगली गोविन्दाचार्याः | पञ्चरत्नस्तबकः |
| ३८) | श्री श्रीमुष्णाचार्याः | पञ्चाधिकरणी |
| ३९) | श्री लिङ्गेरि श्रीनिवासाचार्याः | सिद्धान्तप्रभा |
| ४०) | श्री पाण्डुरङ्गि केशवाचार्याः | सुधावाक्यार्थविनोदः |
| ४१) | श्री उडुपि राघवेन्द्रतीर्थाः (पुत्तिगे मठः) | टिप्पणी |



| | | |
|---|---|---|
| ४२) | श्री सत्यनाथाः | न्यायसुधापरशुः |
| ४३) | श्री सुमतीन्द्रतीर्थाः | भावरत्नकोशः |
| ४४) | श्री पाण्डुरङ्गि केशवाचार्याः | मञ्जरी |
| ४५) | श्री व्यासतत्त्वज्ञतीर्थाः | लघुरसरञ्जनी |
| ४६) | श्री व्यासतत्त्वज्ञतीर्थाः | गुरुरसरञ्जनी |
| ४७) | श्री भीमराव् कुलकर्णी कुम्बारगेरी | टिप्पणी |
| ४८) | श्री सत्यपराक्रमतीर्थाः | सुधाफक्किका |
| ४९) | श्री हुलिगि श्रीपत्याचार्याः | टिप्पणी |
| ५०) | श्री अहोबिलाचार्याः | टिप्पणी |
| ५१) | श्री सत्यप्रज्ञतीर्थाः | टिप्पणी |

एतादृशस्य अत्युत्तमग्रन्थस्य मुद्रणकार्यं श्रीमत्परमपूज्यानां प्रातःस्मरणीयानां श्रीमत्सुजयीन्द्रतीर्थ-श्रीमच्चरणानामादेशं सदिच्छां चानुरुध्य सम्प्रति श्रीराघवेन्द्रस्वामिमठीयपीठाधीश्वराः पूज्याः श्री १००८ श्रीमत्सुशमीन्द्रतीर्थश्रीपादाः कारयन्तीति अस्माकं परमं प्रमोदस्थानम् ।

अस्य ग्रन्थस्य संशोधनकार्ये अस्मद्विद्यापीठीयप्राच्यग्रन्थालयस्थाः अधोनिर्दिष्टाः टिप्पण्यः हस्तप्रति-कृतयोऽपि उपयोजिता इति निवेदयितुं नितान्तं तुष्यामः ।

संशोधनादिकार्येष्वनुकूलयितुं श्रीसुधाव्याख्यानं श्रीनिधितीर्थीयं तालपत्रस्थं अनुगृहीतवद्भ्यः परम-पूज्येभ्यः श्रीपुत्तिगेमठाधीश्वरेभ्यः सभक्ति प्रणामगणं समर्पयामः । एवमेव मुद्रणकार्येऽस्मिन् साक्षाद्वा परोक्षे वा सहकृतवद्भ्यः परमपूज्येभ्यः श्रीमठाधीश्वरेभ्यः सर्वेभ्यः सभक्तिप्रणामगणं कार्तज्ञ्यमाविष्कुर्मः । श्रीनिधितीर्थीयं व्याख्यानं तालपत्रस्थं तौलवलिपिगतं देवनागरिलिपिगतं कृतवतः विद्वान् श्री साणूरु भीमभट्टतनूजः श्री कृष्णमूर्ति महाशयान् सन्दर्भेऽस्मिन् सप्रश्रयं स्मरामः ।

ग्रन्थस्यास्य प्रधानसम्पादकेभ्यः विद्वद्भ्यः वैकुण्ठवासिभ्यः श्री आचार्य साणूरु भीमभट्टमहाशयेभ्यः तथा एतद्ग्रन्थसम्पादकेभ्यः विद्वद्भ्यः श्री कुरुडि सुशीलेन्द्राचार्येभ्यः, तथा विद्वद्भ्यः आहिताग्नि श्री वरखेडकर भीमसेनाचार्येभ्यः, एवं विठ्ठलभट्टीयां टिप्पणीं तथा एरी बाळाचार्याणां टिप्पणीं दत्तवद्भ्यः विद्वद्भ्यः श्री व्यासनकेरे प्रभञ्जनाचार्येभ्यः, तथा पांग्री श्रीनिवासाचार्याणां टिप्पणीं दत्तवद्भ्यः विद्वद्भ्यः श्री पांग्री लक्ष्मणाचार्येभ्यः, तथा वाक्यार्थरत्नमालां टिप्पणीं, सत्यनाथतीर्थीयां टिप्पणीं, हुग्गि टिप्पणीं च दत्वा उपकृतवद्भ्यः पंढरपुरीय पूर्णप्रज्ञमतोन्नाहिनीपाठशालाप्रांशुपालेभ्यः विद्वद्भ्यः श्री वरखेडकर भीमसेनाचार्येभ्यः, तथा वाक्यार्थरत्नमाला-टिप्पण्याः प्रतिकृत्यन्तरं दत्तवद्भ्यः विद्वद्भ्यः श्री के. टि. पाण्डुरङ्गि महाशयेभ्यः एवमेव प्रदीपटिप्पणीं दत्तवद्भ्यः मद्रपुरसर्वकारीयग्रन्थालयव्यवस्थापकेभ्यः श्रीमद्भ्यः, श्रीमन्न्यायसुधाबिन्दुनाम्नीं टिप्पणीं दत्तवद्भ्यः श्रीमद्भ्यः केरलराज्यीय तिरुवाङ्कूरु ग्रन्थभाण्डारव्यवस्थापकेभ्यः, तथा रसरञ्जनी-लघुरसरञ्जनीद्वयं दत्तवद्भ्यः विद्वद्भ्यः श्री गंगूरु



हनुमेशाचार्येभ्यः, एवं ग्रन्थस्यास्य प्रतिकृति-संशोधने श्रीमद्भिः सम्पादकैः सहकृतवद्भ्यः विद्वद्भ्यः श्री कडपा राघवेन्द्राचार्येभ्यः, विद्वद्भ्यः श्री पुराणिक सुब्रह्मण्याचार्येभ्यः, विद्वद्भ्यः श्री एन्. वादिराजाचार्येभ्यः, विद्वद्भ्यः श्री पुरोहित नरसिंहाचार्येभ्यः, विद्वद्भ्यः श्री अग्निहोत्री वादिराजाचार्येभ्यः, विद्वद्भ्यः श्री गंगूरु हनुमेशाचार्येभ्यः, विद्वद्भ्यः श्री गणाचारी रङ्गनाथाचार्येभ्यः, विद्वद्भ्यः श्री उंदारु पांडुरंग श्रीनिवासमूर्ती आचार्येभ्यः, एवं विशेषतः अल्पीयस्येव काले महता परिश्रमेण सश्रद्धं ग्रन्थानां प्रतिकृति-संशोधने श्रीमद्भिः सम्पादकैः सहकृतवद्भ्यः तथा सर्वाङ्गसौन्दर्येण मुद्राप्य दत्तवद्भ्यः 'सुधा मुद्रण'नेतृभ्यः विद्वद्भ्यः श्री वरखेडकर धनंजयाचार्येभ्यः, तथा ग्रन्थस्यास्य अध्ययनाध्यापनादिकर्तृभ्यः सर्वेभ्यः श्रीभगवान् सीताजानिः श्रीमूल-रघुपतिवेदव्यासः आयुरारोग्यैश्वर्यादीनि चानुगृह्य संरक्षत्विति अनन्यया भक्त्या सम्प्रार्थयामहे ।

अत्र मुद्रापितासु टिप्पणीषु काश्चन टिप्पण्यः प्राचीनहस्तप्रतिरूपेण शिथिलाः मध्ये मध्ये त्रुटिताः कदाचिदसमग्रा अपि तेनैव रूपेण पण्डितैः संशोध्य मुद्रापिताः । अत्र प्रकाशितभागे यदि कुत्रचित् स्खलितानि प्राज्ञैर्विद्वद्भिः विलोकितानि चेत् ते अस्मान्प्रति संसूचयेयुः । तेन वयं शुद्धिपत्रिकायां अग्रिमसम्पुटेषु वा तत्सर्वं समीकृत्य विदुषां पुरः उपस्थापयितुं शक्ष्यामः । येषां समीपे अस्माभिरमुद्रितटिप्पण्यः उपलभ्यन्ते ते कृपया तान् ग्रन्थान् अस्मभ्यं प्रेषयन्ति चेत् तत्सर्वमागामिसम्पुटेषु वयं सम्यक् संशोध्य मुद्रापयितुं महता सन्तोषेण स्वीकुर्मः ।

इत्थम् ।

भवदीयम्

**श्रीगुरुसार्वभौमसंस्कृतविद्यापीठम्,**

श्रीराघवेन्द्रस्वामिमठः, मन्त्रालयः

* * *



॥ श्रीमन्मूलरामो विजयते ॥

# प्रस्तावना

**यत्पदं वेदसंवेद्यं कटाक्षेणापि वीक्षितुम् ।**
**न क्षमन्ते विमतयः तमुपासे श्रियःपतिम् ॥**

भूर्भुवस्वरादिचतुर्दशभुवनात्मकसंख्यातिगब्रह्माण्डकोटीः रोमकूपे सन्निवेश्य सकललोकजनन्या श्रिया सह सर्पतल्पे शयानेन भगवता सृष्टेषु भूलोकखण्डेष्वन्यतमेऽस्मिन् भरतखण्डे जनिमतामस्माकं महद्भागधेयमिदं यदत्र भगवान् तत्तद्युगेष्ववतीर्य बलकार्यं ज्ञानकार्यं च सम्पाद्य स्वभक्तानन्वग्रहीत् । तत्रापीदमतिशयितं वक्तव्येष्वाद्यं वचनं यदत्र तद्भक्ताग्रणीः पावनः पवमानः अनेकधाऽवतीर्य तत्रापि तृतीयेऽवतारे श्रीमध्वनाम्नाऽत्र प्रकटीभूय सज्जनानुददीधरत् । तदीयभक्तानुग्रहकार्येषु आचन्द्रार्कं दीप्यमानानि बहूनि कार्याणि यद्यपि वक्तव्यानि सन्ति तथाऽपि समस्तशास्त्रार्थसारभूतानां श्रीबादरायणसंज्ञकेन श्रीवेदव्यासमहर्षिणा निर्मितानां ब्रह्मसूत्राणां भाष्य-अणुभाष्य-अनुभाष्य-न्यायविवरण-ग्रन्थानां निर्माणमतितरां सर्वैरपि अध्यात्मविद्यारसिकैः विचारविमर्शकैः प्रशंसनीयं सर्वदा स्मरणीयं कार्यमिति निश्चप्रचं दृढतरं वयं वक्तुं शक्नुमः ।

तत्र च सूत्रसंबन्धिग्रन्थचतुष्टये ब्रह्मसूत्र-अनुव्याख्यान-ग्रन्थराजः नभसि नक्षत्रपुञ्जमध्ये चन्द्रमा इव चकास्ति । तस्यास्य ग्रन्थराजस्य इन्द्रावतारभूतैः प्रातःस्मरणीयैः परमपूज्यश्रीजयतीर्थमस्करिवरैः रचितम् अनुव्याख्यानव्याख्यानं न्यायसुधानामकं नैकाभिष्टिप्पणीभिः समलंकृतं श्रीराघवेन्द्रतीर्थगुरुवर्याणां प्रेरणया अनुग्रहेण च इदानीं सम्प्रकाश्य हरिगुरुभक्तानां करकमलयोः समर्पयितुं मोमुद्यते अस्माकं चेतः ।

उपनिषत्प्रस्थान-गीताप्रस्थान-सूत्रप्रस्थाननामकप्रस्थानत्रये सूत्रप्रस्थानमेव अन्तिमं निर्णायकं समस्तैः शिरसा धारणीयं च भवति । किं बहुना समस्तेषु वेदेषु समस्तेषु पुराणेष्वन्यत्राप्यभ्यर्हणीयवैदिकवाङ्मयेषु च उक्तानामर्थानां निर्णयाय सूत्राण्येव अस्माकमवलम्बभूतानि महार्णवे तरतामाधारभूतनौकास्थानीयानि । तेषां सूत्राणां व्याख्यानभूतानुव्याख्यानस्य व्याख्यानरूपा इयं सुधा देवलोकीयसुधातोऽप्यभ्यर्हिततमा जन्ममृत्यु-जरादिकं सर्वमपहृत्य स्वरूपानन्दाविर्भावरूपं मोक्षं दापयितुं समर्था । अस्य ग्रन्थस्य प्रशंसा कथं कार्या, कियती कार्या इत्यादिविषयाः आलोच्यमानाः अस्माकं जिह्वां पुरःसर्तुमेव न मुञ्चन्ति । यतो हि ग्रन्थकाराः श्रीमज्जयतीर्थश्रीमच्चरणाः पूर्वाश्रमे नाममात्रेण गृहस्थाश्रमप्रवेशं लब्ध्वा केनापि अनालोचनीयेन केवलं भगवता क्लृप्तेन घटनाविशेषेण संसारमिमं तुच्छीकृत्य स्वीये तरुणे वयसि संन्यासाश्रमं प्रविश्य स्वगुरूणां विद्यारण्यारण्यछेदकानां श्रीमदक्षोभ्यतीर्थगुरुवर्याणां सविधे शुकवत् शिक्षिता भूत्वा स्वीयया अलौकिकप्रज्ञया आचार्याणां अनेकग्रन्थानां टीकाः विरचय्य प्रायः अन्ते इमां न्यायसुधां भक्तेभ्यः नाकीन्द्रः सुधां इव प्रादुः । अस्य ग्रन्थस्य माहात्म्यं शेषोऽपि वर्णयितुं नालम् । बाल्यादारभ्य यौवनपर्यन्तं प्रायः संस्कृतभाषायाः वेदादिशास्त्राणां च परिचयहीना अपि केवलं गुर्वनुग्रहेण शास्त्राण्यभ्यस्य अनन्तरं किञ्चित्समयपर्यन्तं सरस्वतीं संसेव्य तदनुग्रहेण घण्टां (लेखनीं) पूगं च लब्ध्वा



लेखनकार्यं प्रारभन्त जयतीर्थश्रीमच्चरणाः। तत्रापि गुहाया अन्तरुपविश्य पञ्चषशिष्यान् पाठयन्तः स्वयमेव वाणीकृपया लब्धया लेखन्या आचार्याणां ग्रन्थान् व्याख्यान्तः, अनन्तरं तदुपरि पूगेन सम्मार्जनमात्रेण तत्सर्वं त्रुटिलेशरहितं भगवत्कृपया आविर्भावयन्तः ते लोके टीकाचार्याः इत्येव निरुपपदगौरवनाम्ना प्रथिताः बभूवुः।

महानुभावाः जयतीर्थश्रीमच्चरणाः मठीयवैभवादीन् हित्वा शिष्यैः भिक्षया आनीतेन यावनालान्नेन (भक्करि) जीवनं निरवहन्।

महानुभावाः जयतीर्थश्रीमच्चरणाः गुरुभक्तिविषये अन्यादृशम् आदर्शम् अस्माकं पुरतः उपस्थापयामासुः। तद्यथा—

**न शब्दाब्धौ गाढा न च निगमचर्चासु चतुरा**
**न च न्याये प्रौढा न च विदितवेद्या अपि वयम्।**
**परं श्रीमत्पूर्णप्रमतिगुरुकारुण्यसरणिं**
**प्रपन्ना मान्याः स्मः किमपि च वदन्तोऽपि महताम्॥**

अनेन श्लोकेन प्रदर्शितः विनयः अनन्यसाधारणः लोकातिशायी सहृदयान् जिज्ञासून् रोमाञ्चयति। एतदपेक्षया अधिकः गुरुप्रवणः गुरोः दासानुदासः लोके यत्र कुत्रापि नोपलभ्येत इत्येवं सर्वैः सर्वथा अनुभूयते एव।

अल्पीयसा अनेहसा स्वकीयप्रखरबुद्धिवैभवेन निर्मितस्य अस्य सुधाग्रन्थस्य वैशिष्ट्यं वर्णयितुं सहस्रवदनः शेषोऽपि नालम्, किमुत अल्पप्रज्ञाः तृणकल्पाः वयम्। एतदीयग्रन्थस्य माहात्म्यं संवर्णयन् कविरेकः एवमुद्गिरति स्म। यथा—

**आमूलाग्रनिबद्धतर्कजटिलं शब्दैकजीवातुकं**
**मीमांसानुनयं च शङ्करवचो हुङ्कारभङ्गप्रदम्।**
**शास्त्रं तन्त्रचतुष्टयात्मकमिदं निस्स्वप्रतन्त्रान्तराः**
**व्याख्यास्यन्ति पठन्ति वा कथमहो किं वा कलौ दुर्घटम्॥**

'अध्यात्मविद्या विद्यानाम्' इति श्रीकृष्णोक्त्यनुसारेण अद्वितीयाध्यात्मविद्याख्य-सूत्रव्याख्यानरूपा इयं न्यायसुधा नैकाभिष्टिप्पणीभिः सह संयोज्य, संशोध्य, संमुद्रच्य अत्र प्रकाशं नीयते। महदिदं साहसकार्यं महापुरुषोत्तमस्य श्रीहरेः अविच्छिन्नभक्ताग्रेसर-श्रीमन्मुख्यप्राणावताराणां श्रीमदानन्दतीर्थभगवत्पादानां परमा-नुग्रहेणैव सम्पन्नः प्रह्लादावतारभूतानां श्रीमद्राघवेन्द्रतीर्थगुरुसार्वभौमानाम् आराधनसमये तत्करकमलाभ्यामेव श्रीमन्मूलरामचन्द्रदेवस्य पादकमलयोः तद्भक्तवृन्देन सप्रश्रयं सभक्ति समर्प्यतेतमाम्। श्रीकृष्णार्पणमस्तु॥

**आचार्याः साणूरु भीमभट्टाः**

प्रधानसम्पादकाः



॥ श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ॥

श्रीमज्जयतीर्थयतिकृता

# श्रीमन्न्यायसुधा

## संपुटम् – ९

## प्रकृत्यधिकरणम् (१-४-६) — भागः - १

### विषयानुक्रमणिका





*(प्रकृत्यधिकरणस्य अग्रिमभागः अग्रिमसंपुटे मुद्रितः)*





॥ श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ॥

## श्रीमज्जयतीर्थयतिकृता

# श्रीमन्न्यायसुधा

## अथ प्रथमाध्यायस्य चतुर्थपादे

## प्रकृत्यधिकरणम्

॥ १-४-६ ॥

॥ श्रीगुरुभ्यो नमः ॥ हरिः ॐ ॥

॥ ॐ प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ॐ ॥

॥ १-४-६-२४ ॥

**॥ अथ पादान्त्याधिकरणद्वयस्य (प्रकृत्यधिकरण-एतेनसर्वेव्याख्याताधिकरण-योः) सङ्क्षेपतस्तात्पर्यकथनम् ॥**

१ सु०— इदानीं 'प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्', 'एतेन सर्वे व्याख्याता व्याख्याता' इत्यधिकरणद्वयस्य सङ्क्षेपतस्तात्पर्यमाह **स्त्रीशब्दाश्चेति।**

अनु०— स्त्रीशब्दाश्च निषेधार्थाः सर्वेऽपि ब्रह्मवाचकाः।

स्त्रीलिङ्गाः प्रकृत्यादिशब्दाः **स्त्रीशब्दाः** ॥ निषेधनं निषेधः = अभावः, निषिद्ध्यत इति निषेधः = असत्; तदुभयार्थाः ॥ शब्दा इति (च) वर्तते।

यादु०— स्त्रीलिङ्ग इति। स्त्रीगतासाधारणधर्मनिमित्तका इत्यर्थः। तेन दारा इत्यादिशब्दसङ्ग्रह इत्यवधेयम्। एवमग्रेऽपि।

**आनन्दः**— ननु ज्योतिरादिशब्दसमन्वयमुपक्रम्य स्त्रीशब्दानामुपसंहरणमयुक्तम् । तथा सत्युपक्रमोपसंहारयोर्विरोधादित्यत आह **इदानीमिति** । नन्वेवं सति अभाववाचिशब्दसमन्वय एव सिद्ध्येत् तत्तु असद्वाचिशब्दसमन्वय इत्यत आह **निषेधनमिति**।

**श्रीनिधि०— वर्तते** अनुवर्तते।

**शे०वा०**— स्त्रीशब्दा इत्यनेन स्त्रीतिशब्दपरिग्रहोऽयुक्तः । तथा सति प्रकृत्यादिशब्दानामपरिग्रहप्रसङ्गात् । श्रुतिसूत्रयोः प्रकृतिशब्दश्रवणेऽपि स्त्रीतिशब्दस्याश्रवणात् भाष्यस्य श्रुतिसूत्रविसंवादापत्तिः । स्त्रीशब्दस्यैकत्वेन भाष्ये स्त्रीशब्द इत्येव वक्तव्यतया बहुवचनानुपपत्तिः । नापि स्त्रियः शब्दः स्त्रीशब्द इति स्त्रीवाचकशब्दपरिग्रहो युक्तः । तथा सति प्रकृत्यादिशब्दवत् दारकलत्रादिशब्दानामपि स्त्रीवाचितया अत्र विषयत्वप्रसङ्गेन तदंशे स्त्रीलिङ्गत्वादिति पूर्वपक्षन्यायस्य असिद्धिप्रसङ्गादित्यतः अत्र स्त्रीलिङ्गत्वमित्येतदधिकरणपूर्वपक्षन्यायोक्त्यनुरोधेन स्त्रीवाचिनां स्त्रीलिङ्गानां प्रकृत्यादिशब्दानामेव ग्रहणात् न काऽप्यनुपपत्तिरित्याह **स्त्रीलिङ्गा इति** । स्त्रीलिङ्गत्वं च अत्र नित्यस्त्रीलिङ्गत्वमेव विवक्षितम् । एवं च ये नियमेन स्त्रियमेवाचक्षते न कदाचिदपि पुन्नपुंसके, यद्वा शब्दान्तरसन्निधानमनपेक्ष्य ये स्वभावादेव स्त्रियां वर्तन्ते त एव स्त्रीवाचकाः शब्दा इह विषया इत्युक्तं भवति । निषेधशब्दस्य भावसाधनत्वेऽभावस्य, कर्मसाधनत्वे चाभावप्रतियोगिनः, लाभात् तदुभयलाभाय निषेधशब्द उभयसाधन इत्याह **निषेधनमित्यादिना** । **वर्तत इति** । स्त्रीशब्दा इत्यतो बुद्ध्या विवेकेन शब्दा इत्यनुवर्तनीयमित्यर्थः।

**वा०र०— अभावस्येति** । अलाभादित्युत्तरेणान्वयः । **भावसाधनत्वं** भावाभिधायकत्वम् । एवमुत्तरत्र ।

**स०व्र०— स्त्रीलिङ्गा इति** । स्त्रीगतासाधारणधर्मनिमित्तका इत्यर्थः । तेन दारादिशब्दसङ्ग्रह इत्यवधेयम् । एवमग्रेऽपि।

**विट्ठल०— प्रतिज्ञेति** । परमाख्यविद्यामितीति प्रतिज्ञेत्यर्थः।

**चषकः— स्त्रीलिङ्गा इति** । अथ 'स्त्री' इत्यधिकृत्य यानि लक्षणानि प्रणीतानि तदनुशिष्टनित्यस्त्रीलिङ्गत्वका इत्यर्थः । स्त्रीगतासाधारणधर्मनिमित्तका इत्यप्यार्थीथपन् । भावसाधनघञन्तताममभिप्रेत्य व्याचष्टे **निषेधोऽभाव इति** । कर्मसाधनतदन्तताामाश्रित्य व्याकुरुते **निषिद्ध्यत इतीति** ।

**॥ इति पादान्त्याधिकरणद्वयस्य (प्रकृत्यधिकरण-एतेनसर्वेव्याख्याताधिकरण-योः) सङ्क्षेपतस्तात्पर्यकथनम् ॥**

* * *





**॥ अथ एतत्पादगतसर्वाधिकरणविषयपूर्वपक्षसिद्धान्तयुक्तिकथनम् ॥**

**॥ तत्रादौ अधिकरणार्थोपाधिकथनम् ॥**

२ **सु०—** 'अत्र न सर्वाणि सूत्राणि व्याख्यातानि, ततः प्रतिज्ञा व्याहन्येते'त्यतो विषयादिकथनेन व्याख्याततां मन्वानः सर्वाधिकरणविषयपूर्वपक्षसिद्धान्तयुक्तीः आह **विरोधीति** ।

यद्वा (अत्र) आद्येन श्लोकेनाधिकर(णार्थो)णोपाधयः कथ्यन्ते ।

**अनु०—** विरोधिसर्वबाहुल्यकारणस्त्रीनिषेधिनाम् ॥
पृथक्समन्वयार्थानि स्थानान्येतानि सर्वशः ।

**विरोधीति** परमैश्वर्यविरोध्यर्थाः । **सर्वेति** उक्तवक्ष्यमाणव्यतिरिक्ताः । **बाहुल्येति** बाहुल्यविशिष्टार्थवाचिनः । **कारणेति** अवान्तरकारणवाचिनः । **स्त्रीति** स्त्रीलिङ्गाः । निषेधो वाच्यो येषामस्ति ते **निषेधिनः** । अथवा द्वन्द्वात्पर इन्प्रत्ययो द्रष्टव्यः, तथात्वे विरोध्यादयोऽर्था ग्राह्याः । शब्दानामिति शेषः । **एतानि** एतत्पादगतानि, **सर्वशः स्थानानि** अधिकरणानि, एषां शब्दानां समन्वयप्रयोजनानीत्युक्ते प्रत्येकं सर्वशब्दसमन्वय-(सिद्धिः) इत्यपि प्रतीयेत, अतः पृथगित्युक्तम् ।

**परि०— प्रतिज्ञेति** । 'व्याख्यां करोम्यन्वपि चाहमेव' इत्युक्तप्रतिज्ञा व्याहन्येतेत्यर्थः । पूर्वं विचारधर्मिस्वरूपोक्तिपरतया व्याख्यातम्, इदानीमधिकरणे समन्वीयमाना एवंजातीयका इत्येवंरूप-क्रोडीकारकैकधर्माक्रान्ततया तत्तदधिकरणसमन्वेतव्यशब्दराशिप्रदर्शनपरतया व्याचष्टे **यद्वेति** । **परमेति** । परमैश्वर्यविरोध्यर्थकाः दुःखिबद्धावरादिशब्दा इति आद्यनये ॥ १ ॥ **सर्वेति** ज्योतिर्नयो-पाधिः । **उक्तेति** । पूर्वत्रावरादिशब्दानाम् उत्तरत्र पञ्चजनादिशब्दानां येन वाक्यरूपेण विचार्यता न तेन रूपेण द्वितीये ज्योतिर्नये विचार्यता किन्तु पदवर्णस्वरादिरूपेणेति उक्तवक्ष्यमाणप्रकाराति-रिक्तप्रकारकसर्वशब्दत्वमुपाधिरित्यर्थः । अन्यथोक्तवक्ष्यमाणातिरिक्तसर्वविषयत्वस्य सर्वाधिकरण-साधारण्यात् विशिष्योक्तिः न स्यादित्युक्तं चन्द्रिकायाम् ॥ २ ॥ **बाहुल्येति** । 'न सङ्ख्योपसङ्ग्रहात्' इत्यस्योपाधिः 'पञ्चपञ्चजना' इत्येवमादिबाहुल्यविशिष्टार्थवाचिनः ॥ ३ ॥ 'कारणत्वेन चे'त्यस्योपाधिः **कारणेति** । कार्यत्वे सति कारणमवान्तरकारणं तद्वाचिनः । **आत्मनः** 'आकाशः सम्भूत' इत्यादयः





॥ ४ ॥ **स्त्रीलिङ्गा इति** 'प्रकृतिश्चे'ति षष्ठस्योपाधिः ॥ ५ ॥ 'एतेन सर्वे' इति सप्तमनयस्योपाधिः **निषेध इत्यादि** ॥ ६ ॥ एतानि इत्यस्य व्याख्या **एतत्पादगतानीति** । पूर्वार्धस्यार्थानुवादः **एषां शब्दानामिति** । समन्वयार्थानीत्यस्यार्थः **समन्वयप्रयोजनानीति** । बहुव्रीहिरयम् ।

**यादु०— प्रतिज्ञेति** । 'परमाख्यविद्याव्याख्यां करोमी'ति प्रतिज्ञेत्यर्थः । **सर्वेत्युक्तवक्ष्यमाणेति** । यद्यपि ज्योतिरधिकरणे योगवृत्त्या सर्वेषामपि पदवर्णादीनां समन्वय उक्तः तथाऽप्युक्तवक्ष्यमाणातिरिक्तग्रहणमवरादीनां लिङ्गानां पञ्चजनादिशब्दानां च येन वाक्यरूपेण पूर्वत्रोत्तरत्र च विचार्यता तेन रूपेण ज्योतिरधिकरणे न विचार्यता किन्तु पदादिरूपेणैवेत्यभिप्रेत्य । अन्यथोक्तवक्ष्यमाणातिरिक्तसर्वविषयत्वस्य सर्वाधिकरणसाधारण्यात् विशेषोक्तिः न स्यादिति ज्ञातव्यम् ।

**वं०प०— प्रतिज्ञेति** । 'परमाख्यविद्याव्याख्यां करोमी'ति प्रतिज्ञेत्यर्थः । **सर्वेति** । एतत्पादीयसर्वेत्यर्थः । विषयेत्युक्त्या तत्तदधिकरणसमन्वेतव्यतत्तच्छब्दमात्रमेव प्राप्तम्, न तत्समानजातीयशब्दान्तरसङ्ग्रहः । तत्सङ्ग्राहकानुक्तेरित्यत आह **यद्वेति** । **उपाधयः** समन्वेतव्यशब्दतावच्छेदकीभूता धर्मा इत्यर्थः । **द्वन्द्वात्पर इति** । पूर्वं विरोधिनश्च सर्वे च बाहुल्याश्च कारणाश्च स्त्रियश्च निषेधिनश्च ये शब्दाः तेषामिति द्वन्द्वसमास एव कृतः, इदानीं तु विरोधि च सर्वं च बाहुल्यं च कारणं च स्त्री च निषेधश्च विरोधिसर्वबाहुल्यकारणस्त्रीनिषेधा इति द्वन्द्वं कृत्वा पश्चाद्विरोध्यादयो निषेधान्ता अर्थाः येषां शब्दानां ते शब्दाः तथा तेषामित्यर्थो ज्ञेयः । **प्रत्येकमिति** । एकैकस्मिन्नधिकरणे सर्वेषां विरोध्यादिशब्दानां समन्वयः सिद्ध्यतीति प्रतीतिः स्यादित्यर्थः ।

**आनन्दः— तथात्व इति** । विरोधिलक्षणोऽर्थो येषां तेषामित्यर्थः । ननु विरोधीत्येतद्विशेषणस्य विशेष्यसाकाङ्क्षत्वात् तस्य चाप्रतीयमाणत्वापूर्णवाक्यमन्वयाबोधकमप्रमाणं स्यादतः शेषपूरणेन व्याख्याति **शब्दानामिति शेष इति** ।

**श्रीनिधि०— प्रतिज्ञा** परमाख्याविद्याव्याख्यां करोमीति प्रतिज्ञा । **अधिकरणार्थोपाधय इति** । अधिकरणार्थानां अधिकरणप्रतिपाद्यानाम् । **उपाधयः** अवच्छेदकधर्माः । **अथवेति** । पूर्वं निषेधशब्दादेरित्याशयेन निषेधो वाच्यो येषामिति व्याख्यानमिति भावः ।

**शे०वा०— न सर्वाणीति** । 'न सङ्ख्ये'त्यस्य 'कारणत्वेने'त्यस्य च अव्याख्यानादिति भावः । **प्रतिज्ञेति** । 'परमाख्यविद्याख्यायां करोमी'ति प्रतिज्ञेत्यर्थः । 'विषयादी'त्यादिपदेन पूर्वपक्षसिद्धान्तन्यायसङ्ग्रहः । **अधिकरणार्थोपाधय इति** । अयमाशयः । नात्र तत्तदधिकरणे तत्तच्छब्दसमन्वय एव प्रतिपाद्यते । तथा सति एतत्पादीयाधिकरणसप्तकेन सप्तानां शब्दानां समन्वयसिद्ध्यापत्त्या अन्यत्रैवप्रसिद्धनामलिङ्गात्मकाशेषशब्दसमन्वयासिद्धिप्रसङ्गेन पादस्यैव व्यर्थत्वप्रसङ्गात्, किं नाम एकैकत्राधिकरणे समानन्यायानामनेकशब्दराशीनामेव





निर्णयो वाच्यः । न च निर्णेतव्यशब्दावच्छेदकोपाध्यकथनेऽसौ युज्यत इत्यावश्यकमवच्छेदकोपाधिकथनमिति । **परमैश्वर्यविरोध्यर्था इति** । परमैश्वर्यविरोध्यवरत्वाद्यर्था इत्यर्थः । **उक्तवक्ष्यमाणव्यतिरिक्ता इति** । नन्वेवमुक्तवक्ष्यमाणव्यतिरिक्तसर्वविषयकत्वस्य सर्वाधिकरणसाधारणत्वाद्विशेषोक्त्यनुपपत्तिः । अनुव्याख्याने व्युत्पत्तेरशक्यत्वस्य द्वितीये पूर्वपक्षहेतुत्वेनोक्त्यनुपपत्तिश्च । ज्योत्याद्यवयवानामब्रह्मत्वेन ज्योतिरित्यादिसमुदायस्य ब्रह्मणि व्युत्पत्तिसम्भवादिति चेन्न । अवरादिशब्दानां पञ्चजनादिशब्दानां चेह विचार्यत्वेऽपि येन वाक्यरूपेण पूर्वत्रोत्तरत्र च विचार्यता तेन रूपेण द्वितीये न विचार्यता किन्तु पदादिरूपेणैवेत्यभिप्रायकत्वेनोक्तवक्ष्यमाणातिरिक्तग्रहणस्य ज्योतिरधिकरणे तेषामविचार्यत्वाभिप्रायकत्वाभावेनोक्तदोषानवकाशात् । **बाहुल्यविशिष्टेति** । बहुत्वविशिष्टेत्यर्थः । विरोधीत्यादेः परमैश्वर्यविरोध्यर्थकशब्दपर्यन्तत्वाश्रयणात् विरोध्यवरत्वाद्यर्थपरत्वे लाघवं मनसि निधाय पक्षान्तरमाह **अथवेति** । पक्षद्वयेऽपि विशेष्यानुक्त्या प्रसक्तां वाक्याऽऽभासतां तत्पूरणेन परिहरति **शब्दानामिति** । **शेष इति** । अन्यपदार्थतयेति भावः । सर्वश इत्युक्तत्वात् पूर्वपादीयाधिकरणानामपि विरोधीत्याद्युक्तशब्दसमन्वयपरत्वमिति भ्रान्तिनिरासार्थमेतानीत्युक्तमिति भावेन तन्निरासोपयोगितया एतानीति व्याचष्टे **एतत्पादगतानीति** । **एषामिति** । विरोधिसर्वेत्याद्युक्तानामित्यर्थः । **प्रत्येकमिति** । प्रत्यधिकरणमित्यर्थः ।

**वा०र०— समन्वय एव प्रतिपाद्यत इति** । प्रतिपाद्यत इत्यङ्गीकर्तुं शक्यमित्यर्थः । **निर्णयो वाच्य इति** । वक्ष्यमाणानुसारात् । आद्येऽधिकरणे परमैश्वर्यविरोध्यवरत्वेत्यादिचन्द्रिकानुसारेण व्याचष्टे **अपरत्वाद्यर्था इति** । अत्र परमैश्वर्यविरोधिभूता अर्था येषां ते इति शब्दानामेव ग्रहणं मूले । विरोधिपदस्य विरोध्यर्थकत्वे लक्षणाश्रयणात् टीकायामपि विरोधिभूतं यदवरत्वादि तदर्थो येषामिति बहुव्रीहिरेवेति ज्ञेयम् । यद्वक्ष्यति मूलकारः । तथात्वे विरोध्यादयो अर्थाग्राह्य इति । **उक्तवक्ष्यमाणव्यतिरिक्ता** इति मूलेऽपि शब्दानामेव ग्रहणमिति स्पष्टमेव । द्वन्द्वात्पर इत्यन्प्रत्यय इति पक्षे तु सर्वशब्देन तदर्थग्रहणमिति द्रष्टव्यम् । अन्यथोक्तवक्ष्यमाणातिरिक्तेत्यादिचन्द्रिकानुसारेणाक्षिप्य सुधायामुक्तवक्ष्यमाणेत्यादि चन्द्रिकानुसारेण समाधत्ते **नन्वेवमुक्तवक्ष्यमाणेत्यादिना** । **सर्वाधिकरणेति** । सर्वेष्वपि अधिकरणेषु सापेक्षया पूर्वोत्तराधिकरणयोः समन्वेतव्यतयोक्ताः वक्ष्यमाणाश्च ये शब्दाः तदतिरिक्तशब्दविषयतायाः सत्त्वेन विशिष्य अत्रैवोक्तवक्ष्यमाणातिरिक्तशब्दत्वस्योपाधिताय अभिधानानुपपत्तेरित्यर्थः । ननु उक्तवक्ष्यमाणशब्दयोः समभिव्याहृतपरत्वे उक्तातिप्रसङ्गप्राप्तावपि तयोः ज्योतिरधिकरणापेक्षया पूर्वोत्तराधिकरणोक्तवक्ष्यमाणावरादि पञ्चजनादिशब्दातिरिक्तज्योतिरादिशब्दरूपविशेषपरत्वाङ्गीकारे नानुपपत्तेरित्यतो नेदं शक्यते वक्तुं तथा सति अनुव्याख्याने ज्योतिरादिशब्देषु पूर्वपक्षन्यायतया व्युत्पत्तेरशक्यत्वस्य अवरादिपञ्चजनादिसाधारणतया अभिधानानुपपत्तेः । अतः अस्याधिकरणस्योक्तवक्ष्यमाणशब्दविशेषस्यापि भावादुक्तमनुपपन्नमेवेत्याह **अनुव्याख्यान इति** । अथवा उक्तवक्ष्यमाणशब्दातिरिक्तशब्दविषयत्वम् अस्याधिकरणस्याङ्गीकृत्य अयं दोष उक्तः । वस्तुतः तस्य न उक्तवक्ष्यमाणातिरिक्तेति सङ्कोचः सम्भवति । अस्य ज्योतिरादिशब्दविषयत्ववदुक्तवक्ष्यमाणावरादिपञ्चजनादि-





शब्दविषयताया अपि सत्त्वात् । अत एव अनुभाष्ये व्युत्पत्तेरशक्यत्वरूपसर्वशब्दसाधारणन्यायस्य पूर्वपक्षहेतुत्वेनोक्तिः । अन्यथा तदनुपपत्तिः स्यादित्यत आह **अनुव्याख्यान इति** । ननु नोक्तन्यायस्य साधारणत्वं अवरादिशब्देषु प्रकृत्यादेरन्यपरत्वमङ्गीकृत्य व्युत्पत्तेः सम्भवादित्यतः तर्हि ज्योतिरादिशब्देष्वपि उक्तरीत्या व्युत्पत्तिसम्भवेन तन्न्यायस्यासम्भवापत्तेत्याह **ज्योत्याद्यवयवानामिति** । समुदायस्येत्यतःपरं अपिशब्दोऽध्याहार्यः । ततश्च सर्वाधिकरणसाङ्कर्यमिति भावः । सत्यं अनुव्याख्याने पूर्वपक्षहेतुतयोक्तन्यायस्य सर्वाधिकरणस्थशब्दसाधारणत्वमिति । न च तावता अत्र दोषः । विचार्यरूपभेदेनासङ्करोपपत्तेः । उक्तवक्ष्यमाणातिरिक्तत्वमपि न सर्वथोक्तवक्ष्यमाणातिरिक्तत्वमेव । किं तर्हि येन रूपेण पूर्वोत्तराधिकरणयोः समन्वयो विहितः तदाकारव्यतिरेकेण समन्वीयमानत्वमपि, अतो नानुपपत्तिरित्याशयेन समाधत्ते **अवरादिशब्दानामित्यादिना** । इति परामर्शेन व्याख्यानान्न असङ्गत्यादि शङ्क्यम् ।

**स०व्र०— सर्वेत्युक्तवक्ष्यमाणव्यतिरिक्ता इति** । यद्यप्युक्ता वक्ष्यमाणाः सर्वेऽपि शब्दाः समाकर्षादित्यधिकरणे निर्णेयाः तथापि अन्यत्रैवप्रसिद्धशब्दानां अत्र निर्णेतव्यत्वाभिप्रायेणेदमिति बोध्यम् ।

**विठ्ठल०—** पूर्वं विचारधर्मिस्वरूपोक्तिपरतया व्याख्यातमिदानीं अधिकरणे समन्वीयमाना एवंजातीयका इत्येवंरूपक्रोडीकारकैकधर्माक्रान्ततया तत्तदधिकरणसमन्वेतव्यशब्दराशिप्रदर्शनपरतया व्याचष्टे **यद्वेति** । **परमेति** । परमैश्वर्यविरोध्यर्थकाः दुःखिबद्धावरादिशब्दाः । आद्यनये **सर्वेति** ज्योतिर्नयोपाधिः उक्तेति पूर्वत्र अवरादिशब्दानाम् उत्तरत्र पञ्चजनादिशब्दानां एकवाक्यरूपेण विचार्यता । न तेन रूपेण द्वितीये ज्योतिर्नये विचार्यता किं तु पदवर्णादिरूपेणेति उक्तवक्ष्यमाणप्रकारातिरिक्तप्रकारकसर्वशब्दत्वमुपाधिरित्यर्थः । अन्यथा उक्तवक्ष्यमाणातिरिक्तसर्वविषयत्वस्य सर्वाधिकरणसाधारण्यात् विशिष्योक्तिः न स्यादित्युक्तं चन्द्रिकायाम् । **बाहुल्येति** । न सङ्ख्योपसङ्ग्रहादित्यस्योपाधिः पञ्चपञ्चजना इत्येवमादयः । कारणत्वेन चेत्यस्योपाधिः **कारणेति** । कार्यत्वे सति कारणत्वमवान्तरकारणत्वम् । **तद्वाचिनः** आत्मन आकाशस्सम्भूत इत्यादयः । **स्त्रीलिङ्गा इति** । **प्रकृतिश्चेति** षष्ठस्योपाधिः । एतेन सर्व इति सप्तमनयस्योपाधिः **निषेध** इत्यादि । एतानीत्यस्य व्याख्या **एतत्पादगतानीति** । पूर्वार्धस्यार्थानुवादः **एषां शब्दानामिति** ।

**चषकः—** परमैश्वर्यविरोध्यर्थकशब्दपरत्वाश्रयणादपि तद्विरोध्यवरत्वाद्यर्थपरत्वोपगतिरेव ज्यायसी लाघवादित्यपि प्रतिसन्दधानः कल्पान्तरमाश्रयते **अथवेति** । विशेष्यवाचकानिर्देशनियन्त्रितां न्यूनतां प्रतिविधत्ते **शब्दानामितीति** ।

**॥ इति अधिकरणार्थोपाधिकथनम् ॥**

* * *





**॥ अथ एतत्पादगतसर्वाधिकरणविषयपूर्वपक्षसिद्धान्तयुक्तिकथने पूर्वपक्षसिद्धान्तयुक्तिकथनम् ॥**

३　**सु०—**

**अनु०—** सर्वमानैर्विरोधश्च व्युत्पत्तेरप्यशक्यता ॥
परस्परविरोधश्च विरोधः कार्यतद्वतोः ।
स्त्रीलिङ्गत्वं निषेधश्च पूर्वपक्षेषु युक्तयः ॥

दोषात्यस्पृष्टिनियमः शब्दार्थाऽनेकता तथा ।
बहुरूपत्वमीशस्य व्यक्त्यव्यक्तिविशेषिता ॥

उत्पादनं स्वदेहाच्च दुर्जनाव्यक्तता तथा ।
इत्यादियुक्तयः साक्षात्सिद्धान्तस्थापिका इह ॥

**सर्वेत्यनेनैव समाकर्षाधिकरणार्थोऽपि सङ्गृहीतः । तस्य ज्योतिरधिकरणार्थाक्षेपपरिहारार्थत्वात् । 'सर्वमानैर्विरोधश्चे'त्याद्यर्थो न्यायविवरणादाववगन्तव्यः ।**

**परि०—** नन्वत्र पादे सप्ताधिकरणानि भाष्यटीकायां प्रतीयन्ते । अत्र च षडुपाधय एव कथमुक्ता इत्यत आह **सर्वे इत्यनेनैवेति** । **ज्योतिरधिकरणार्थाक्षेपपरिहारार्थत्वादिति** । तत्र हि कल्पनोपदेशादिति गुणसूत्रेण निगमनिघण्टुव्याकरणादिसिद्धरूढ्यादिवृत्तेर्लोके, महायोग(व)तोऽन्यत्रापीत्यर्थद्वयाङ्गीकारेण कर्मक्रमादिलोपो लोके व्युत्पत्त्ययोगो वा नेत्युक्तिरयुक्ता । तथात्वे अक्षादिशब्दानामनेकार्थेष्विव सर्वशब्दानां ब्रह्मण्यन्यत्र च तुल्या वृत्तिः स्यात् । एवं च समन्वयसूत्रस्थावधारणायोगः । अतोऽन्यत्र रूढ्याद्युक्तिः कल्पनासूत्रीया न युक्तेत्याक्षेपे सति, हरावधिका वृत्तिरन्यत्र हीनेति परिहारार्थत्वादित्यर्थः । चन्द्रिकायां समाकर्षादिति पञ्चमस्योपाध्यनुक्तिस्तु पञ्चमस्यापि द्वितीयवत् सर्वविषयत्वेन तदुपाधितः पृथगुपाध्यभावात् केवलन्यायभेदमात्रेण अधिकरणभेद इत्युक्तम् । **सर्वेति** । आनुमानिकनये सर्वमानविरोधः पूर्वपक्षस्य युक्तिः । दोषात्यस्पृष्टिनियमः सिद्धान्तस्य ॥ १ ॥





ज्योतिर्नये व्युत्पत्तेरप्यशक्यता । शब्दार्थनिकतावर्णनम् ॥ २ ॥ नसङ्ख्येतिनये परस्परविरोधः । ईशस्य बहुरूपत्वम् ॥ ३ ॥ कारणत्वेनेत्यत्र एकस्यैव कार्यकारणभावविरोधः । व्यक्तयव्यक्तिविशेषता ॥ ४ ॥ प्रकृतिश्चेत्यत्र स्त्रीलिङ्गत्वम् । उत्पादनं स्वदेहात् ॥ ५ ॥ एतेनेत्यत्र निषिद्धात्मकत्वं दुर्जनाव्यक्तता ।

**गु०दी०**— यद्यपि न्यायविवरणे पूर्वपक्षनिराकरणमात्रं क्रियते तथापि निषेध्यतया पूर्वपक्षाणामपि दर्शितत्वात् सर्वव्याख्यानं द्रष्टव्यमितिभावेनोक्तं **न्यायविवरणात्** इति । **'सर्वमानैर्विरोधश्च'** इत्यादिसार्धश्लोकत्रयस्यायमर्थः । **सर्वमानैर्विरोधः** 'आनुमानिकमप्येकेषामि'त्यधिकरणे परमात्मनो दुःखिबद्धावरादिशब्दवाच्यत्वे 'न तत्समश्चाभ्यधिकश्च दृश्यते', 'निरनिष्टो निरवद्यः', 'योऽविद्ययाऽन्धः स तु नित्यबद्धो विद्यामयो यः स तु नित्यमुक्तः', 'शुभं पिबत्यसौ नित्यं नाशुभं स हरिः पिबेत् । पूर्णानन्दमयस्यास्य चेष्टा न ज्ञायते क्वचिदि'त्यादि सर्वमानविरोधाख्ययुक्तिः पूर्वपक्षहेतुः । **व्युत्पत्तेरप्यशक्यता** 'ज्योतिरुपक्रमात्तु तथा ह्यधीयत एके' इत्यधिकरणे ज्योतिषां स्तोमः ज्योतिष्टोमः । जि ओतमित्यादिव्युत्पत्तेः ज्योतिरादिपदानामन्यपरत्वानभ्युपगमे भगवन्नामावृत्तिमात्रत्वापातेन व्युत्पत्तेरशक्यता पूर्वपक्षयुक्तिः । **परस्परविरोधः** 'न सङ्ख्योपसङ्ग्रहादपि नानाभावादतिरेकाच्चे'त्यधिकरणे 'यस्मिन् पञ्चपञ्चजना आकाशश्च प्रतिष्ठितः' इति वाक्ये यस्मिन्नित्याधारत्वेनोक्तस्य विष्णुत्वे आधेयत्वेनोक्तपञ्चजनाकाशानां न परमात्मत्वं, एकस्यैवाधाराधेयभावायोगात् परस्परविरोधः पूर्वपक्षप्रापकः । 'आकाशादिषु यथा व्यपदिष्टोक्तेः' इत्यधिकरणे **कार्यतद्वतोर्विरोधः** भगवत एवावान्तरकारणत्वे कार्यस्याकाशाद्याख्यरूपस्य तद्वतः तदाख्यकार्यवतः आत्माख्यरूपस्य चैकत्वात् कार्यतद्वतोर्विरोधः पूर्वपक्षप्रापकः । **स्त्रीलिङ्गत्वं** 'प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधादि'त्यधिकरणे 'नैनं वाचा स्त्रियं ब्रुवन्नि'ति परमात्मनः स्त्रीत्वनिषेधात् स्त्रीलिङ्गत्वं पूर्वपक्षप्रापकम् । **निषेधः** 'एतेन सर्वे व्याख्याता व्याख्याता' इत्यधिकरणे असदभावादिशब्दानां निषेधनिषेध्यवाचित्वात् परमात्मनश्च भावरूपत्वेन नीरूपनिषेधरूपत्वाद्ययोगान्निषेधः पूर्वपक्षहेतुरित्यर्थः । **दोषात्यस्पृष्टिनियमः** 'निरनिष्टो निरवद्य' इत्यादिश्रुतेः परमात्मनो दोषात्यस्पृष्टिनियमात् दुःखिबद्धत्वाद्ययोगात् दुःखिबद्धावरादिनियन्तृत्वमेव तच्छब्दवाच्यत्वे नियामकमिति दोषात्यस्पृष्टिनियमः सिद्धान्तस्थापकः । **उत्पादनं स्वदेहाच्च** इत्यस्य स्वदेहात्स्वमुखपाण्यादेरेव ब्राह्मणादीनामुत्पादकादव्यवधानेन प्रसूतिकर्तृत्वाख्यमपि स्त्रीत्वं भगवतो युज्यत इत्यर्थः ।

**आनन्दः**— ननु समाकर्षाधिकरणस्योपाध्यनुक्तिः कुत इत्यत आह **सर्वेत्यनेनेति** । तर्हि ज्योतिरधिकरणे न पुनरुक्ततेत्यत आह **तस्येति** ।

**शे०वा०**— नन्वेतत्पादीयाधिकरणार्थोपाधिकथनपरतया नैतच्छ्लोकव्याख्यानं युज्यते । समाकर्षादिति सूत्राष्टकस्य कारणत्वेनेति चतुर्थाधिकरणशेषत्वमिति चिरन्तनमते एतत्पादीयाधिकरणानामपि षट्त्वेन विरोधीत्याद्युपाधिषट्कोक्तेरुपपन्नत्वेऽपि टीकाकृता सूत्राष्टकस्य पृथगधिकरणत्वाङ्गीकारेण एतत्पादीयाधिकरणानां





सप्तत्वेनोपाधिषट्कोक्तेरयुक्तत्वादित्यतो ज्योतिरधिकरणवत्समाकर्षाधिकरणस्यापि सर्वशब्दविषयत्वेन तदुपाधेरेव समाकर्षाधिकरणोपाधित्वेन तदुपाधितः पृथगुपाध्यभावाभिप्रायेणोपाधिषट्कोक्तिः स्वमतेऽपि सम्भवतीत्याह **सर्वेत्यनेनैवेति** । नन्वेवं ज्योतिरधिकरणेनैव समाकर्षाधिकरणप्रयोजनसिद्धेः तद्वैयर्थमित्यतस्तत्र प्राप्ताक्षेप-परिहारार्थत्वान्न तदित्याशयेनाह **तस्येति** । अत्र यद्यप्यनुव्याख्याने विरोधीत्याद्युपाधिकथनदशायां पृथगुपा-ध्यनुक्तेः 'सर्वमानैर्विरोधश्चे'त्यादिपूर्वपक्षसिद्धान्तयुक्तिसङ्ग्रहदशायां पृथग्युक्त्यनुक्तेः, भाष्ये समन्वेतव्यशब्दा-न्तरानुक्तेः तत्त्वप्रदीपानुसाराच्च समाकर्षादित्यादिसूत्राष्टकस्य पूर्वाधिकरणशेषत्वमेव युक्तम् । तथाऽपि पूर्वतन्त्रे 'हेतुदर्शनाच्चे'ति गुणसूत्रस्य विरोधाधिकरणशेषत्वेऽपि पृथङ्न्यायसूचकत्ववत् अस्यापि तदस्तीति दर्शयितुं ग्रन्थकृताऽधिकरणान्तरं कृतमिति ध्येयम् ।

**वा०र०**— चन्द्रिकानुसारेणाह **नन्वेतत्पादीयेत्यादिना** । समाकर्षादित्यधिकरणीयचन्द्रिकानुसारेण आक्षिप्य समाधत्ते **अत्र यद्यप्यनुव्याख्यान इत्यादिना** । व्याख्यानेऽनवशेषादिति पाठः ।

**विट्ठल०**— नन्वत्र पादे सप्ताधिकरणानि भाष्यटीकयोः प्रतीयन्ते । अत्र च षडुपाधय एव कथमुक्ता इत्यत आह **सर्वेत्यनेनैवेति । ज्योतिरधिकरणार्थाक्षेपपरिहारार्थत्वादिति** । गुणसूत्रेण निगमनिरुक्तव्याकरणादि-सिद्धरूढादिवृत्तेरन्यत्राप्यर्थेऽङ्गीकारेण न कर्मक्रमादिलोपो व्युत्पत्त्ययोगो वा नेत्युक्तिरयुक्ता । तथात्वे अक्षादि-शब्दानामनेकार्थेष्विव शब्दानां ब्रह्मण्यन्यत्र च तुल्या वृत्तिः स्यात् । एवं समन्वयसूत्रस्यावधारणायोगः । अतो-ऽन्यत्र रूढ्याद्युक्तिकल्पना सूत्रीया न युक्तेत्याक्षेपे सति हरावधिका वृत्तिरन्यत्र हीनेति परिहारार्थत्वादित्यर्थः ।

**॥ इति एतत्पादगतसर्वाधिकरणविषयपूर्वपक्षसिद्धान्तयुक्तिकथने पूर्वपक्षसिद्धान्तयुक्तिकथनम् ॥**

**॥ इति एतत्पादगतसर्वाधिकरणविषयपूर्वपक्षसिद्धान्तयुक्तिकथनम् ॥**

* * *

**॥ अथ प्रकृत्यधिकरणे समाकर्षाधिकरण-ज्योतिरधिकरण (पञ्चम-द्वितीयाधिकरण) योः सिंहावलोकनन्यायेन किञ्चिद्विवरणम् ॥**

**॥ तत्रादौ समाकर्षाधिकरणस्य किञ्चिद्विवरणम् ॥**

**॥ तत्राप्यादौ प्रतिपदान्वय-प्रतिवाक्यान्वययोरपि सूत्रकाराभिमतत्वं सहेतुकम् ॥**

४ **सु०**— एवमानुमानिकमित्यादीनि सूत्राणि सङ्क्षेपतो व्याख्याय सिंहावलोकनन्यायेन समाकर्षाधिकरणं ज्योतिरधिकरणं 'चान्वय' इत्यादिना किञ्चिद्विवृणोति ।

तथा हि । ''समाकर्षाधिकरणे प्रतिपाद्यमानो वाक्यान्वयः सूत्रकारस्याभिमतो न वा ।





आद्ये वक्तव्यम्, प्रागुक्तप्रतिपदान्वयो युक्तो न वेति । नेति पक्षे न वक्तव्यः । युक्तत्वे तु मुख्ये तस्मिन्विद्यमानेऽस्य वैयर्थ्यम् ॥ किञ्च वाक्यान्वयस्य स्वमतत्वे 'अन्यार्थं तु जैमिनिरि'त्यादिसूत्रेषु जैमिन्यादिग्रहणं व्यर्थं स्यात् ॥ अपि च **प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः, उत्क्रमिष्यत एवंभावादित्यौडुलोमिः, अवस्थितेरिति काशकृत्स्नः,** इति वाक्यान्वयः त्रिप्रकारोऽभिहितः । तस्य परस्परमविरोधे मतभेदो न स्यात् । विरोधे तु कथं सूत्रकाराभिमतत्वम् ।

अथ सूत्रकारस्य अनभिमतो वाक्यान्वयः तदा (तन्नि)निराकरणसूत्रेण भाव्यम् । न चैतदस्ति ।

तत्कथमेतदि''त्यत आह **अन्वय इति** ।

**अनु०— ॥ ॐ समाकर्षात् ॐ ॥ १-४-५-१६ ॥**

**अन्वयः सर्वशब्दानामशक्यो ज्ञातुमञ्जसा ।**
**इति यल्लोकवैमुख्यं जैमिन्यादिमते वदन् ॥**

**विद्याऽधिनाथो भगवानपाचक्रे स्वयं प्रभुः ।**

प्रतिपदान्वयेऽभिहिते (हि) मन्दाधिकारिणां मोक्षमार्गवैमुख्यं स्यात् । सर्वशब्दानां ब्रह्मणि अञ्जसा = मुख्यया वृत्त्या अन्वयस्तावज्ज्ञातुमशक्यः, 'कश्छन्दसामिति' श्रुतेः । न च तज्ज्ञानेन विना मोक्षः । न चाशक्ये प्रवृत्तिर्युक्ता, आकाशरोमन्थनादौ प्रवृत्त्यदर्शनात् । तथा चाहुः, 'व्यसनानि दुरन्तानि समव्ययफलानि च । अशक्यानि च वस्तूनि नारभेत विचक्षणः' इति । तस्मादास्तामयं मोक्षः, शक्यानुष्ठानसाधनधर्माद्यर्थमेव प्र(वृत्ते)वर्तेमहीति ।

एवं मन्दलोकस्य मोक्षमार्गवैमुख्यं भगवान् सूत्रकारः स्वयमेव जैमिन्यादिमतमेतदिति वदन् वाक्यान्वयप्रदर्शनेन निराकृतवान् । अनेन स्वाभिमत एव वाक्यान्वयः अतो





**न निराकरणसूत्राभावो दोषाय । प्रतिपदान्वयश्च युक्त एवेति तद्व्युत्पादनमुपपन्नमेव । तथाऽपि प्रतिपदमन्वये सामर्थ्यवैकल्येन मोक्षमार्गाद्विमुखानां मन्दाधिकारिणामुपायान्तर-प्रदर्शनेन समाश्वासार्थं वाक्यान्वयकथनं चोपपन्नमित्युक्तं भवति ।**

**परि०—** विवरणाकरणे काऽनुपपत्तिः प्राप्तेत्यतः समाकर्षाधिकरणे तावत् तामाह **तथा हीति** । ज्योतिरधिकरणे तु तेषु तेष्वित्येतद्ग्रमनिकायां वक्ष्यति **प्रागुक्तेति** । ज्योतिर्निर्णयोक्तेत्यर्थः । **त्रिप्रकार इति** । अल्पास्थिरफलादिपरिकरयुक्तकर्मदेवतादौ वैराग्योत्पादनद्वारा ब्रह्मज्ञानोपयुक्तत्वेन । मुमुक्षोर्ज्ञानहेतुकर्मानुष्ठापकत्वेन । सर्वाधारत्वप्रकारकब्रह्मज्ञाने प्रकारभूताधेयकर्मदेवताद्यर्पकत्वेनेत्येवं त्रिप्रकारेण ब्रह्मण्यन्वेतीत्युक्तत्वात् वाक्यान्वयः त्रिप्रकार उक्त इत्युक्तम् । **निराकरणसूत्रेणेति** । व्याकरणे 'लुपि युक्तवद्व्यक्तिवचने' इत्यादिनोक्तमतान्तरस्य स्वानभिमतस्य 'तदशिष्यं संज्ञा-प्रमाणत्वात्' इत्यादिसूत्रे निरासदर्शनादिति भावः । **आकाशरोमन्थनादाविति** । **रोमन्थनं** चर्वित-चर्वणम् । आकाशभक्षणादावित्यर्थः । शक्यानुष्ठानसाधनेति बहुव्रीहिगर्भबहुव्रीहिः । धर्मादीत्यादि-पदेन अर्थकामौ द्वावेव गृह्येते । **तथापीति** । मुख्ये पदसमन्वये सत्यपीत्यर्थः ।

**गु०दी०—** **वाक्यान्वयस्य** इत्यत्र अन्यार्थमित्युक्तजैमिनिमतस्य चेति शेषः । वाक्यान्वयस्य **'प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः' 'उत्क्रमिष्यत एवं भावादित्यौडुलोमिः' 'अवस्थितेरिति काशकृत्स्नः' इति वाक्यान्वयः त्रिप्रकारोऽभिहित** इत्यत्रोक्तं त्रित्वं कथं घटते । 'अन्यार्थं तु जैमिनिरि'ति सूत्रस्यापि 'परमात्म-ज्ञानार्थं कर्मादिकमपि वदती'ति भाष्येऽर्थकथनात् तस्यापि वाक्यान्वयपरत्वप्रतीतेः । यदि च 'उत्क्रमिष्यत' इत्यनेनैवास्यापि सङ्गृहीतत्वात् त्रित्वमुच्यते तदा अस्य सूत्रस्य वैयर्थ्यप्रसङ्ग इति चेन्न भाष्यकृतस्तात्पर्यस्य भवताऽनवबोधात् । 'समाकर्षादि'ति सूत्रोक्तार्थे तावदियमाशङ्का प्राप्नोति । भगवद्वाचकज्योतिरादिपदानां कर्मादौ समाकर्षो व्यर्थः । न च कर्मादिज्ञानार्थं स इति वाच्यम् । कर्मादिज्ञानस्यापि व्यर्थत्वात् । न हि 'तेषां दुःख-प्रहाणाय श्रुतिरेषा प्रवर्तत' इति श्रुतेः मोक्षसाधनबोधनाय प्रवृत्तो वेदः काम्यकर्मादिकं ब्रूते इति शङ्का-निरासार्थं जैमिनिरिति सूत्रस्य प्रवृत्तिः । तर्हि परमात्मज्ञानार्थमिति कथं भाष्यमिति चेन्न । भगवज्ज्ञाने परविद्यात्वाख्यातिशयज्ञापनार्थमित्यङ्गीकारात् । तस्मिन्नतिशयकथनमपि तदुद्देशेनैव । परापरा चेति 'द्वे विद्ये वेदितव्ये' इति तस्यामेव श्रुतौ श्रवणात् । एवं च काम्यफलकत्वेन कर्मकाण्डस्यापरविद्यात्वं प्रदर्शयितुं कर्मा-दिकमपि वक्तव्यम् । अतस्तत्र शब्दानां समाकर्षोऽपि न्यायप्राप्तः । विष्णौ पदसमन्वयोऽप्यावश्यक इति सूत्र-तात्पर्यम् । अत एव 'यथा सौम्यैकेने'ति दृष्टान्तोऽपि मृण्मयज्ञाने तत्तन्मात्रज्ञानम् । मृज्ज्ञाने तु सकलमृण्मय-ज्ञानात् यथा मृज्ज्ञानं प्रधानम् । तथा मोक्षाख्यपरमपुरुषार्थसाधकत्वात् ब्रह्मज्ञानं परविद्या । कर्मादिज्ञानं तु काम्यफलमात्रहेतुत्वात् अपरविद्येति सुतरां युज्यते । एवं च ब्रह्मविद्यायाः परविद्यात्वसमर्थनाय पदसमन्वयस्य





कर्मविद्याया अपरविद्यात्वसमर्थनाय काम्यकर्मप्रतिपादनस्य च अस्मिन् सूत्रे प्रस्तुतत्वात् नेदं वाक्यान्वयपरं नापि व्यर्थमिति हि भाष्यकृतो गूढाभिसन्धिरिति सर्वसामञ्जस्यात् ।

**यादु०— आकाशरोमन्थनादाविति** । यद्यपि रोमन्थनशब्दः पशूनां चर्वितचर्वणे प्रसिद्धः, 'रोमन्थस्तु वृषादीनां यत्स्याच्चर्वितचर्वणमि'त्यभिधानात्, तथाऽप्यत्र चर्वणमात्रोपलक्षकः । तथा च आकाशचर्वणादावित्यर्थः ।

**आनन्दः—** न च य इत्यादिना समाकर्षज्योतिरधिकरणयोर्विवरणं क्रियते तदयुक्तम् । तद्व्याख्यानसमये तद्विवरणमकृत्वा प्रकृत्याद्यधिकरणतात्पर्यमभिधाय पुनरिदानीं विवरणस्यायुक्तत्वादित्यत आह **एवमानुमानिकेति** । नन्वस्तु ज्ञातुमशक्यत्वं ततः किमत आह **न चेति** । ननु ज्ञातुमशक्यत्वेऽपि तत्र प्रवृत्तिः किं न स्यादित्यत आह **न चाशक्य इति** । **व्यसनानीति** । यत्र दुरन्तानि व्यसनानि यानि च समन्वयफलानि चाशक्यानि वस्तूनि तानिव भेदेति प्रत्येकसमन्वयः । शक्यानुष्ठानं साधनं यस्य एवं तद्धर्मादि तदर्थमित्यर्थः । कथमनेनोक्तदोषपरिहार इत्यत आह **अनेनेति** ।

**शे०वा०—** व्याख्यानेऽनवशेषात् किमुत्तरग्रन्थेनेत्यत आह **एवमिति** । एतत्सूत्रीयसङ्क्षेपव्याख्यानानन्तर्यमेव तद्विवरणस्यौचित्यं तत्कथं व्यवधानमित्यत आह **सिंहेति** । यद्यप्यत्र पौर्वापर्यक्रमेण ज्योतिरधिकरणं समाकर्षाधिकरणं चेति वक्तव्यम् । तथाऽपि सूचीकटाहन्यायेन प्रवृत्ततत्तत्सूत्रविवरणपरोत्तरग्रन्थपौर्वापर्यक्रममनुरुद्ध्यायं निर्देश इति ध्येयम् । उक्तेऽर्थेऽनुपपत्त्यभावात् किं विवरणेनापि प्रयोजनमित्यतोऽधिकरणद्वयार्थेऽनुपपत्तिं दर्शयितुं प्रतिजानीते **तथा हीति** । तत्कथमित्यतः तावत्समाकर्षाधिकरणविवरणपरेणान्वय इत्युत्तरानुव्याख्यानेन व्यावर्त्य शङ्कामुत्थापयति **समाकर्षाधिकरण इति** । **युक्त इति** । तेषु तेष्वित्युत्तरानुव्याख्यानोक्तरीत्येति शेषः । **न वेतीति** । प्रकृत्यादेरन्यपरत्वाभावे निर्वचनानुपपत्तेरिति वक्ष्यमाणन्यायेनेति शेषः । वैपरीत्येन वैयर्थ्यशङ्कापरिहारायोक्तम् **मुख्यत इति** । **वैयर्थ्यमिति** । प्रतिपदान्वयज्ञानेनैव ब्रह्मज्ञानसिद्धेरन्यस्य प्रयोजनस्य च अभावादिति भावः । स्वशिष्याणामित्युत्तरानुव्याख्याननिरसनीयां शङ्कामाह **किञ्चेति** । तारतम्यमित्याद्यनुव्याख्यानव्यावर्त्यां तामाह **अपि चेति** । **कथमिति** । न हि सूत्रकारो विरुद्धभाषीति भावः । **रोमन्थनादाविति** । यद्यपि 'रोमन्थस्तु वृषादीनां यत्स्याच्चर्वितचर्वणमि'त्यभिधानात् रोमन्थशब्दः पशुकर्तृकचर्वितचर्वणे प्रसिद्धः । तथाप्यत्र लक्षणया चर्वणमात्रपरो द्रष्टव्यः । आदिपदेन चन्द्रमण्डलाहरणादेः सङ्ग्रहः । उक्तेऽर्थे नीतिशास्त्रमुदाहरति **तथा चाहुरिति** । **दुरन्तानि** दुःखोत्तराणि । समे व्ययफले येषां तानि **समव्ययफलानि** । **अशक्यानि** साधकप्रयत्नासाध्यानि । **शक्येति** । शक्यानुष्ठानं साधनं यागादिरूपं यस्येति बहुव्रीहिः । अनेनेत्यस्य व्यवहितेन 'उक्तं भवति' इत्यनेन सम्बन्धो बोध्यः ।





**वा०र०**— रोमन्थरोमन्थनशब्दयोः पर्यायत्वाशयेनाक्षिपति **यद्यपि रोमन्थस्त्विति** । उक्तं हि व्यसनानि दुरन्तानीत्येतन्न्यायमकरन्दव्याख्यानरूपोक्तेऽर्थे नीतिशास्त्रमुदाहरतीत्यादि चित्सुखोक्त्यनुसारेण अवतारयति **उक्तेऽर्थ इत्यादिना** । **समे व्ययफले इति** । एतद्विचारस्तु .........कृतो ज्ञेयः ।

**स०व्र०**— **आकाशरोमन्थनादाविति** । आकाशचर्वणादावित्यर्थः ।

**विठ्ठल०**— ननु विवरणं किमर्थं कर्तव्यमित्यतः प्राप्तानुपपत्तिसमाधानार्थमित्याशयेन समाकर्षाधिकरणे तावदनुपपत्तिं दर्शयति **तथा हीति** । **त्रिप्रकार इति** । कमदिरल्पास्थिरफलकत्वज्ञापनेन तत्र वैराग्यजननद्वारा ब्रह्मज्ञानोपयुक्तत्वं कर्मकाण्डस्यैकः प्रकारः मोक्षसाधनब्रह्मज्ञानसाधनत्वात् कर्मणां तदुक्तिरित्यन्यः कर्मदेवतादिसर्वाधारतया ब्रह्मज्ञानार्थमाधेयकर्मादिज्ञानस्याप्यावश्यकत्वात् तदुक्तिरित्यपरः एवं त्रिःप्रकार इत्यर्थः । **आकाशरोमन्थनादाविति** । आकाशभक्षणादावित्यर्थः । यद्यपि रोमन्थनशब्दः चर्वितमुद्गीर्य पुनश्चर्वणे प्रसिद्धः 'रोमन्थस्तु वृषादीनां स्याच्चर्वितचर्वणमि'त्यभिधानात् । तथाप्यत्र चर्वणमात्रस्योपलक्षणक इति ज्ञेयम् । प्रतिपदान्वयस्य युक्तत्वे तेनैवालं किं वाक्यान्वयप्रतिपादनेनेत्यत आह **तथापीति** ।

**चषकः**— **आकाशरोमन्थनादाविति** । 'कर्मणो रोमन्थतपोभ्यां वर्तिचरोरि'ति सूत्रे रोमन्थायते चर्वितस्य आकृष्य पुनश्चर्वणमित्यर्थः । नेह कीटो रोमन्थं वर्तयति । अपानप्रदेशान्निस्सृतं द्रव्यमिह रोमन्थस्तदत्तीत्यर्थ इति कैयटादयः । वर्तुलं करोतीत्यर्थ इति न्यासकारहरदत्ताविति पाणिनीयैरभिहिततया 'रोमन्थस्तु वृषादीनां यत्स्याच्चर्वितचर्वणमि'त्यभिधानव्युत्पादिताभिधावृत्तिकार्यस्य प्रकृते बाधाल्लक्षणया चर्वणमात्रार्थो रोमन्थनशब्दः तथा च आकाशचर्वणादावित्यर्थः । आदिपदं चन्द्रमण्डलाहरणादिसङ्ग्राहकम् ।

**॥ इति प्रतिपदान्वय-प्रतिवाक्यान्वययोरपि**
**सूत्रकाराभिमतत्वं सहेतुकम् ॥**

* * *

**॥ अथ समाकर्षाधिकरणस्य किञ्चिद्विवरणे**
**जैमिन्यादिपदग्रहणवैयर्थ्यपरिहारः ॥**

५ **सु०**— तर्हि जैमिन्यादिग्रहणं व्यर्थमित्युक्तमित्यत आह **स्वशिष्याणामिति** ।

**अनु०— स्वशिष्याणां प्रसिद्ध्यर्थं मतमात्मीयमंशतः ।**
**विज्ञातं तैर्जगादात्र**





जैमिन्यादीनामिति शेषः । नात्र जैमिन्यादिग्रहणेन तदीयमेवैत(दिति विज्ञायते)-न्मतमित्युच्यते । किन्तु मदीयमेव मतमेकदेशतो जैमिन्यादिभिर्विज्ञातमिति । एतच्च तेषां ख्यात्यर्थम् । गुरुणा श्लाघिता हि शिष्या लोके ख्यातिं लभन्ते ।

ननु (च) वाक्यान्वयस्य प्रकारत्रयं परस्परविरुद्धं कथं सूत्रकाराभिमतं स्यादित्यत आह **तारतम्यमिति** ।

**तारतम्यं नृणां वदन् ॥ ५ ॥**

**नृणाम्** अल्पाधिकारिणाम् **अवस्थातारतम्यं वदन्** इत्यनेन अवस्थातारतम्य-व्यवस्थया मतभेदो न विरोधेन इत्युक्तं भवति । एतेनाङ्गीकृ(त्येद्या)तेऽपीत्याद्युक्तं विवृतं वेदितव्यम् ॥ ५ ॥

**परि०**— 'नृणामि'त्यनुवादः, 'अल्पाधिकारिणामि'ति व्याख्या । **अवस्थातारतम्यमिति** । अमुमुक्षाऽवस्थोपेतं मन्दं प्रत्याद्यं मतम् । ततोऽधिकं मुमुक्षाऽवस्थं प्रति द्वितीयम् । ततोऽप्यधिकं ज्ञानित्वावस्थं प्रति तृतीयं मतमिति एवम् अमुमुक्षामुमुक्षाज्ञानित्वदशारूपावस्थात्रयस्योत्तरोत्तराधिक्यं वदन्नित्यर्थः । प्रपञ्चयिष्यते चैतदिति प्रागुक्तं दर्शयति **एतेनेति** ।

**गु०दी०**— **नृणामल्पाधिकारिणामवस्थातारतम्यम्** इत्यत्र मन्दाधिकारिष्वपि तत्तदधिकारियोग्यता-नुसारेण तेषां ज्ञानसिद्ध्यर्थं मतभेदमनुसृत्य त्रिप्रकारेण वाक्यान्वयनिरूपणमिति भावः ।

**यादु०**— **प्रकारत्रयमिति** । प्रतिज्ञासिद्धेरित्यादिसूत्रत्रयोक्तमिति शेषः । **अवस्थातारतम्यमिति** । अल्पाधिकारिणां प्रथमं तावत् यस्मात् कर्मादिकमनित्यफलम् अतो ज्ञानमेव मुक्तिसाधनमिति ज्ञानस्य मोक्षहेतुतानिश्चयवत्त्वावस्था । तदनन्तरं तादृशज्ञानसाधनाय कर्मादिना भाव्यमिति कर्मानुष्ठानवत्त्वावस्था । अनन्तरं कर्मणा प्रक्षीणान्तःकरणमलानां तेषां सर्वं परमात्मन्यवस्थितमित्येवंरूपज्ञानमुत्पद्यत इति ज्ञानित्वाव-स्थेत्येवम् उत्तरोत्तरावस्थानाम् उत्तमतातारतम्यं वदन्नित्यर्थः । प्रथममल्पाधिकारिणां ब्रह्मज्ञानार्थित्वाभावेन स्वर्गाद्यर्थित्वावस्था, अनन्तरं ब्रह्मजिज्ञासुत्वावस्था, तदनन्तरं ज्ञानित्वावस्थेत्येवं वा अवस्थातारतम्यं भाव-बोधोक्तं द्रष्टव्यम् । न च एवमधिकारिभेदेनेति तत्त्वप्रकाशिकाविरोधः । तत्राप्यधिकारिणोऽवस्थाभेदेनेत्यर्थस्य विवक्षितत्वात् ।





**शे०वा०— तर्हीति** । वाक्यान्वयस्य स्वमतत्व इत्यर्थः । तर्हि स्वशिष्यग्रहणमेव कार्यम् । किं जैमिन्यादिग्रहणेनेत्यतः तेषामेव स्वशिष्यत्वादिति भावेन शेषं पूरयति **जैमिन्यादीनामिति शेष इति** । इतीत्यस्य जैमिन्यादिग्रहणेनोच्यत इत्यनेन सम्बन्धः । किमेतत्कथनेनापीत्यत आह **एतच्चेति** । **प्रकारत्रयमिति** । प्रतिज्ञासिद्धेरित्यादिसूत्रत्रयोक्तमित्यर्थः । अल्पबुद्धय इति पूर्वानुव्याख्यानं मनसि निधाय नृणामित्येतद्व्याख्याति **अल्पाधिकारिणामिति** । कथमनेन प्रकारत्रयस्य परस्परविरोधपरिहार इत्यत आह **अनेनेति** । **अवस्थेति** । सपरिकरं कर्मोक्त्वा 'अमृतो वा व सोमपो भवती'ति तस्य दुःखसम्भिन्नं विनाशिफलमुच्यते । तत्परामृश्य यस्मादेवं कर्माद्यनित्यफलं तस्मान्न तन्मोक्षसाधनं किन्तु ज्ञानमेवेति ज्ञानमेव मया आपाद्यमिति जिज्ञासुत्वावस्था, अल्पाधिकारिणां प्रथमं जायते, ततस्तादृशज्ञानस्य कर्मादिसाध्यतया कमदिरपि भाव्यत्वात् कर्मानुष्ठानवत्त्वावस्था, भवति । अनन्तरं कर्मणा प्रक्षीणान्तःकरणमलानां तेषां सर्वं परमात्मन्यवस्थितमिति ज्ञानं भवतीति तादृशज्ञानवत्त्वावस्था जायत इत्युत्तरोत्तरावस्थानां पूर्वपूर्वावस्थात उत्तमत्वतारतम्यव्यवस्थयेत्यर्थः । अत्र आश्मरथ्यमतम् आद्यावस्थाविषयकम्, औडुलोमिमतं द्वितीयावस्थाविषयकं, काशत्कृत्स्नमतं तृतीयावस्थाविषयकमिति विवेको द्रष्टव्यः ॥ न च अनेकाधिकारिविषयत्वान्न विरोध इति टीकाविरोधः । तत्राधिकारिभेदेनैव मतभेदस्योपपादितत्वादिति वाच्यम् । तत्राप्यधिकारिनिष्ठानेकावस्थाविषयकत्व एव तात्पर्यात् । अवस्थात्रयरूपविशेषणभेदेन विशिष्टभेदविवक्षया तत्प्रवृत्तेरिति वा ।

**वा०र०—** किमेतत्कथनेनापीत्यत आहेति पाठः । इत्याहेति पाठेऽपि इतीत्यस्य इत्यत इत्यर्थः । प्रतिज्ञासिद्धेर्लिङ्गमित्यादिसूत्रीयतत्त्वप्रकाशिकानुसारेणाह **सपरिकरं कर्मोक्त्येत्यादिना** । **सोमपो भवतीति** । तस्येति सोमपो भवति यावदिन्द्रमित्यादिनेत्यर्थः । तेन विविक्षितसिद्धिरिति ज्ञातव्यम् ।

**स०व्र०— अवस्थातारतम्यव्यवस्थयेति** । प्रतिज्ञासिद्धेरित्यत्र कथं कर्मज्ञानार्थमित्याशङ्कायां क्षुद्रफलार्थिनं प्रति तत्फलाय तत्कर्म विदधदपि कर्मवाक्यं मुमुक्षं प्रति क्षुद्रफलकत्वात् कर्मणो तद्धानेन अक्षुद्रफलकं ज्ञानमेवोपादेयमिति वैराग्यजननद्वारा ज्ञानार्थमित्युक्तम् । उत्क्रमिष्यत इत्यत्र तु अन्तःकरणशुद्धिद्वारा कर्मण उपादेयताज्ञानार्थमित्युक्तम् । अवस्थितेरित्यत्र कथं ब्रह्मज्ञानमिति जिज्ञासायां स्वेतरसर्वाधारत्वेनेति साक्षाज्ज्ञानापेक्षितप्रकारसमर्पणायेतरोक्तिः । मतत्रयस्याप्यवस्थातारतम्यव्यवस्थया एकविषयत्वान्न विरोधः । अधिकारभेदेनेति तत्त्वप्रकाशिकाया अप्ययमेवाभिप्राय इति न तद्विरोध इति ध्येयम् । अन्ये तु प्रथमं तावत् यस्मात् कर्मादिकमनित्यफलम्, अतो ज्ञानमेव मुक्तिसाधनमिति ज्ञानस्य मोक्षहेतुतानिश्चयावस्था । तदनन्तरमेवं निश्चयवतां तादृशज्ञानसाधनाय कर्मादिना भाव्यमिति कर्मानुष्ठानावस्था । अनन्तरं कर्मणा प्रक्षीणान्तःकरणमलानां तेषां सर्वं परमात्मन्यवस्थितमित्येवंरूपं ज्ञानमुत्पद्यत इति ज्ञानित्वावस्था । इत्येवमुत्तरोत्तरावस्थोत्तमताभिप्रायेण वाक्यान्वयः सूत्रकृता क्रमेण प्रकारत्रयेणोपपादित इति भाव इत्याहुः । भावबोधे ब्रह्मज्ञानार्थित्वाभावेन स्वर्गाद्यर्थित्वावस्थाविशिष्टाधिकारिविवक्षया आश्मरथ्यमतम् । ब्रह्मजिज्ञासुत्वावस्थाविशिष्ट-





रूपाधिकारिविवक्षया औडुलोमिमतम् । ज्ञानत्वावस्थाविशिष्टाधिकारिविवक्षया काशकृत्स्नमतम् इति व्यवस्थातारतम्यं प्रदर्शितम् ।

**विट्ठल०— अवस्थातारतम्यमिति** । प्रथमं तावत् यस्मात् कर्मादिकमनित्यफलं अतो ज्ञानमेव मुख्यसाधनमिति ज्ञानस्य मोक्षसाधनता निश्चितावस्था । तदनन्तरमेवं निश्चयवतां तादृशज्ञानसाधनाय कर्मादिना भवितव्यमिति कर्मानुष्ठानावस्था । अनन्तरं कर्मणा प्रक्षीणान्तःकरणमलानां तेषां सर्वं परमात्मन्यवस्थितमित्येवंरूपज्ञानमुत्पद्यत इति एवमुत्तरोत्तरावस्थोत्तमताभिप्रायेण सूत्रकृता क्रमेण प्रकारत्रयेणोपादित इति भावः । यद्वा ब्रह्मज्ञानाद्यर्थित्वाभावेन स्वर्गाद्यर्थित्वावस्थाविशिष्टाल्पाधिकारिणं प्रत्याद्यं मतम् । मुमुक्षावस्थाविशिष्टं ततोऽप्यधिकाधिकारिणं प्रति द्वितीयम् । ततोऽप्यधिकं ज्ञानित्वावस्थाविशिष्टं प्रति तृतीयम् इति । एवं अमुमुक्षामुमुक्षाज्ञानित्वाख्यावस्थातारतम्यमित्यर्थः । प्रपञ्चयिष्यते चैतदिति प्रागुक्तं दर्शयति **एतेनेति** ।

**चषकः— प्रकारत्रयमिति** । प्रतिज्ञासिद्धेरित्यादिसूत्रत्रयाभिहितमित्यादि । **अवस्थातारतम्यमिति** । प्रथममल्पाधिकारिणां ब्रह्मज्ञानार्थित्वाभावेन स्वर्गाद्यर्थित्वावस्था, अनन्तरं ब्रह्मजिज्ञासुत्वावस्था, तदनन्तरं ज्ञानित्वावस्थेति एवम् अवस्थातारतम्यं वदन्नित्यादिदिशा अर्थापयन्ति ।

**॥ इति समाकर्षाधिकरणस्य किञ्चिद्विवरणे जैमिन्यादिपदग्रहणवैयर्थ्यपरिहारः ॥**

**॥ इति समाकर्षाधिकरणस्य किञ्चिद्विवरणम् ॥**

* * *

**॥ अथ प्रकृत्यधिकरणे ज्योतिरधिकरणस्य किञ्चिद्विवरणम् ॥**

**॥ तत्रादौ उक्तस्य 'योगवृत्त्या परमेश्वरेऽखिलशब्दसमन्वय'स्य उपपादनम् ॥**

**॥ तत्राप्यादौ सर्वशब्दानामुभयार्थत्वम् ॥**

६ **सु०—** "ज्योतिरधिकरणे योगवृत्त्या परमेश्वरेऽखिल(पदानां) शब्दसमन्वयोऽभिहितः, नासौ युज्यते, प्रकृत्यादेरन्यपरत्वाभावे निर्वचनानुपपत्तेः । न हि जातादिपदानामन्यपरत्वानङ्गीकारे 'जातमोतं यस्मिन्' इति व्युत्पत्तिः सम्भवति । प्रकृत्यादेरन्यपरत्वे तु सर्वशब्दानां भगवद्वाचित्वमिति गतः पक्षः । किञ्च वसन्त इत्यादीनां भगवत्परत्वे कर्मानुष्ठानलोपो लोकव्यवहारविलोपश्च प्रसज्येतेत्युक्तमि"त्यत आह **तेष्विति** ।

## अनु०— ॥ उँ॰ कल्पनोपदेशाच्च मध्वादिवदविरोधः ॥ उँ॰ ॥

## ॥ १-४-२-११ ॥





तेषु तेषु पदार्थेषु रूढिरङ्गीकृता यतः ॥

प्रयोजनबहुत्वेन तस्य तस्याविरोधतः ।
उपदेशादिसामर्थ्याद्विष्णौ शक्तिश्च गृह्यते ॥

व्युत्पत्त्युपपत्तिः, कर्मानुष्ठानसम्भवो, लोकव्यवहारानुच्छेदश्चेत्येवं, प्रयोजनानां बहुत्वेन कारणेन, **तेषु तेषु** तत्तच्छब्दवाच्यतया (प्र)सिद्धेष्वर्थेषु, तत्तच्छब्दानां, **रूढिः** इत्युपलक्षणं, वृत्तिः **अङ्गीकृता यतः** तस्मात् **त(स्य त)स्याविरोधतः** तं तमर्थमपरित्यज्य, उपदेशलिङ्गप्रकरणादिबलेन, सर्वशब्दानां **विष्णौ च शक्तिर्गृह्यते**। यद्यपि अत्र एतावदेव वक्तव्यम्, "नैष दोषः, सर्वशब्दानां भगवद्वाचिनामपि प्रसिद्धार्थान्तरवाचकत्वस्यापि स्वीकारात् । ज्योतिरादिशब्दानां (हि) ज्योतिष्टोमाद्यर्थत्वस्याङ्गीकृतत्वान्नानुष्ठानलोकव्यवहारविलोपः । जातमोतमित्यवयववृत्त्या परमेश्वरे वृत्तौ जातादिपदानामन्यपरत्वमङ्गीक्रियत इति व्युत्पत्त्युपपत्तिः । पुनस्तदवयवस्याप्यन्यपरत्वमुपादाय परमेश्वरे जातपदव्युत्पत्तिसम्भव" इति; तथाऽपि 'स्यादेतदेवम्, यदि शब्दानामनेकार्थत्वं स्यात्, तदेव कुत' इति शङ्कानिरासार्थमिदमुक्तमिति ज्ञातव्यम् । तथा हि । पदा(नाम)र्थान्तरवाचित्वं तावदुक्तप्रयोजनसिद्धयेऽङ्गीकरणीयम् । परमेश्वरवाचित्वं च (तु) सर्वशब्दानां, 'नामानि सर्वाणि यमाविशन्ति', 'ता वा एताः सर्वा ऋच' इत्याद्युपदेशबलाच्छ्रुतिलिङ्गादिसामर्थ्याच्च तत्तच्छब्दानामवश्यमङ्गीकरणीयमिति ।

अनेन 'कल्पनोपदेशाच्च मध्वादिवदविरोध' इति सूत्रस्य तात्पर्यमुक्तं भवति ।

**परि०**— प्रागुक्तामप्यनुपपत्तिं व्यवहितत्वात्पुनरनुवदति **ज्योतिरित्यादिना** । ल्यब्लोपे पञ्चमीत्युपेत्याह **तं तमर्थमपरित्यज्येति** । उपदेशादीत्यस्यार्थः **उपदेशलिङ्गप्रकरणादिबलेनेति** । विवरिष्यते चैतदनुपदं तेषु तेष्वित्यादिसार्धश्लोके । अन्यत्र रूढ्यादिवृत्त्यङ्गीकारे प्रयोजनबहुत्वेनेति यन्नियामकमुक्तं यच्च विष्णौ शक्त्यङ्गीकारे उपदेशादिसामर्थ्यादिति नियामकमुक्तं, तदुभयं व्यर्थम् । अवशिष्टैनैव प्रकृतशङ्कानिरासादिति भावेनाक्षिपति **यद्यप्यत्रैतावदेवेति**। एतावदेवेत्युक्तं तन्नियामकद्वयं विना कृतावशिष्टमूलमर्थतोऽनुवदन् व्यनक्ति **नैष दोष** इत्यादिना **तथापीत्यतः** प्रागुक्तेन ग्रन्थेन ।





इतिशब्दस्य इत्येतावदेव वक्तव्यमिति पूर्वेणान्वयः । इदमुक्तमित्युक्तं नियामकद्वयं व्यनक्ति **तथा हीति** । 'चमसवदविशेषादिति' सूत्रोपात्तश्रुतिमाह **नामानीति** । ज्योतिःसूत्रे 'तथा ह्यधीयत' इत्यंशोपात्तमाह **ता वा इति** । आदिपदेन प्रकृतिसूत्रे प्रतिज्ञादृष्टान्तेत्याद्यंशोपात्तग्रहः । **श्रुतीति** । 'अस्ति ब्रह्मेति चेत्' इत्यादि ब्रह्मादिशब्दबलात् 'को ह्येवान्यात्क' इत्युक्तजगच्चेष्टकत्वादिलिङ्ग-बलात् । आदिपदोक्तमान्त्रवर्णिकादिप्रकरणभृगुवल्ल्यादिसमाख्यादिग्रहः । इतिशब्दस्येतीदमुक्तमिति पूर्वेणान्वयः । **अनेनेति** । तेषु तेष्वित्यादिसार्धश्लोकेन ।

**गु०दी०— जातपदव्युत्पत्तिसम्भव** इत्यत्र जे जन्मवति वस्तुनि आ समन्तात् तं व्याप्तमिति व्युत्पत्तिसम्भव इत्यर्थः । एवं जमितिपदव्युत्पत्तावपेक्षितायां जनी प्रादुर्भावे अवतारेऽपि अं सर्वविलक्षणं 'अत सातत्यगमन' इति धातोः व्याप्तेर्निमित्तात् अं अणुभ्यः सकलजीवेभ्यो विलक्षणमिति द्रष्टव्यम् ।

**यादु०— इदमुक्तमिति** । 'प्रयोजनबहुत्वेनोपदेशादिसामर्थ्यादि'ति पदद्वयमुक्तमित्यर्थः ।

**वं०प०— वृत्तिरिति** । तथा चैवं व्याख्याने जगति क्वचिद्गौण्यादिवृत्तिस्वीकारेण तत्सङ्ग्रहो भवति । न चेन्नेति द्रष्टव्यम् । **एष दोषः** कर्मानुष्ठानलोपादिरूपः । **जातमोतमिति** इत्यत्र ज्योतिःशब्दस्येति शेषः । नैष दोष इत्यारभ्य जातपदव्युत्पत्तिसम्भव इत्येतावदेव वक्तव्यमित्यन्वयः । **अनेकार्थत्वम्** ईश्वरतदितररूपा-नेकार्थत्वमित्यर्थः । उपदेशबलादित्यत्रोपदेशपदेन श्रुत्यादिषट्कान्तरगतं वाक्यं ग्राह्यम् । न श्रुतिः । तथात्वे श्रुतिलिङ्गादीत्यत्र पुनः श्रुतिग्रहणायोगादिति ध्येयम् । 'ज्योतिरुपक्रमात्तु तथा ह्यधीयत एक' इत्यत्रोपदेश-बलात् । 'शब्दादेव प्रमित' इत्यादौ रूढशब्दरूपश्रुतिबलात् । 'आकाशस्तल्लिङ्गादि'त्यत्र लिङ्गबलात् । आदिपदेन 'आत्मा प्रकरणादि'त्यादौ प्रकरणादिबलादित्यादि द्रष्टव्यम् ।

**आनन्दः— इदमुक्तमिति** । प्रयोजनबहुत्वेनेत्यादिकमित्यर्थः ।

**शे०वा०—** अस्तु उक्ताक्षेपपरिहारार्थं समाकर्षाधिकरणविवरणम्, तथाऽपि ज्योतिरधिकरणविवरण-मनर्थकमित्यतः तत्रोक्तार्थानुवादपूर्वकं तत्राप्यनुपपत्तिमाशङ्कते **ज्योतिरधिकरण इति** । **न हीति** । भगव-न्नामावृत्तिप्रसङ्गादिति भावः । **अन्यपरत्वे त्विति** । अन्यत्रप्रसिद्धत्वेनेति शेषः । उपलक्षणं चैतत् । अन्यत्रप्रसिद्धेः समुदायेऽप्यविशेषात् तस्याप्यन्यपरत्वापत्तेरित्यपि द्रष्टव्यम् । **अनुष्ठानलोप इति** । अनुष्ठापकप्रमाणान्तराभावा-दिति भावः । **लोकेति** । सर्वशब्दानां भगवत्परत्वेन तद्वाचकशब्दाभावादिति भावः । **रूढिरित्युपलक्षणमिति** । कल्पनेति सूत्रे अन्यत्र सप्तवृत्तीनामप्यङ्गीकारादिति भावः । अत एव तावत्साधारण्याय वृत्तिरिति सामान्य-निर्देशः । **उपदेशेति** । 'नामानि सर्वाणी'त्याद्युपदेशबलादित्यर्थः । **लिङ्गेति** । श्रुतिलिङ्गेत्यर्थः । अत एव वक्ष्यति **श्रुतिलिङ्गादिसामर्थ्याच्चेति** । प्रयोजनबहुत्वेनोपदेशादिसामर्थ्यादित्यस्य वैयर्थ्यमाशङ्क्य परिहरति **यद्यप्यत्रे-**





**त्यादिना । इदमुक्तमिति** । प्रयोजनबहुत्वेनेत्यादिकमुक्तमित्यर्थः । तेषु तेषु पदार्थेष्वित्यादेरभाष्यत्वशङ्कां परिहरति **अनेनेति** ।

**वा०र०— तद्वाचकशब्दाभावादिति** । लोकवाचकशब्दाभावादित्यर्थः । लोकशब्दो हि प्रसिद्धार्थान्तरपरः उत्तरमूले प्रसिद्धार्थान्तरवाचकत्वस्यापीति वक्ष्यमाणत्वात् । तथा च सर्वशब्दानां भगवन्मात्रवाचकत्वे प्रसिद्धार्थवाचकपदाभावात् तदर्थविषयकव्यवहारलोपश्च प्रसज्येतीति फलितं भवति । **अन्यत्र सप्तवृत्तीनामिति** । 'रूढिर्योग' इत्यादि न्यायविवरणे निरूपिताववृत्तिषु महायोगमहारूढियोगौ विना रूढिर्योगो रूढियोगो रूढोपचारो रूढलक्षणोपचारो लक्षणेति सप्तवृत्तीनां जगत्यङ्गीकारादित्यर्थः । तावत्साधारण्यायेति पाठः । मूले **तच्छब्दानामिति** पदं सिद्धये तच्छब्दानामङ्गीकरणीयमित्येवं पूर्ववाक्ये शेषभूतम् । लेखकदोषेण तु परमेश्वरेत्युत्तरवाक्ये प्राप्तमिति न पूर्ववाक्ये न्यूनता । नाप्युत्तरवाक्ये पुनरुक्तिः प्रसज्यत इति ज्ञेयम् । **अभाष्यत्वशङ्कामिति** । सूत्रव्याख्यानरूपत्वाभावशङ्कानिमित्तिकामिति शेषः ।

**स०व्र०**— एतावदेव वक्तव्यमित्युक्तं कियद्वक्तव्यमित्यत आह **नैष दोष इत्यादिना । पुनस्तदवयवस्याप्यन्यपरत्वमुपादायेति** । एकवर्णपर्यन्तं अन्यपरत्वमङ्गीकृत्य तेन भगवत्परत्वमुपपाद्य एकवर्णात्मकस्य रूढ्या भगवत्परत्वं उपपादनीयमिति भावः । न च सर्वेऽपि शब्दा योगेन भगवत्परा इति गतमिति वाच्यम् । यावन्तः सावयवाः शब्दाः ते सर्वेऽपि योगेन भगवत्परा इत्यभिप्रेतत्वात् । अत एव टीकाकाराः अन्ततः प्रकृतिप्रत्यययोस्तदर्थे रूढेराश्रयणीयत्वाच्चेत्यवदन् । **तथाऽपीति** समाधानम् । **इदमुक्तमिति** । प्रयोजनबहुत्वतः उपदेशादिसामर्थ्याच्चेत्यत उक्तमिति भावः ।

**विट्ठल०**— ज्योतिरधिकरणेऽपि विवरणप्रयोजकामनुपपत्तिं दर्शयति **ज्योतिरधिकरण इति** । यद्यपीयमनुपपत्तिः प्राग्दर्शिता तथाप्येतदंशस्य प्रागसमाहितत्वात् पुनः प्रदर्शित इति ज्ञेयम् । **अविरोधत** इत्यत्र ल्यब्लोपनिमित्ता पञ्चमीत्यभिप्रेत्याह **तं तमर्थमपरित्यज्येति** । एतावदेव वक्तव्यमित्युक्तं कियद्वक्तव्यमित्यत आह **नैष दोष इत्यादिना । व्युत्पत्तिः सम्भवती**त्यन्तेन जातपदव्युत्पत्तिसम्भव इति । जे जन्मनि वस्तुनि आसमन्तात् ततं व्याप्तमिति व्युत्पत्तिसम्भव इत्यर्थः । इदमुक्तमित्युक्तं नियामकद्वयं व्यनक्ति **तथा हीति** ।

**॥ इति सर्वशब्दानामुभयार्थत्वम् ॥**

* * *

**॥ ततः परमेश्वरपरत्वविरोधे अन्यपरत्वमपोद्यते ॥**

७ **सु०— यदि सर्वशब्दानामुभयार्थत्वं तर्हि 'विश्वस्मादिन्द्र उत्तरः', 'असदेवेदमग्र आसीदि'त्यादौ कथम्, उभयोः सर्वोत्तमत्वादेर्विरुद्धत्वेनात्र उभयार्थत्वानुपपत्तेः । पदाना-**





**मुभय(ार्थ)वाचित्वेऽपि तत्र विरोधः । तत्र अन्यतरमात्रे तात्पर्यमङ्गीकार्यमिति चेत्, तत्रापि किमुपादाय(देयं) किं परित्याज्यमिति न ज्ञायत इत्यत आह तथाऽपीति ।**

**अनु०— तथाऽप्येतद्विरोधे तु तद्वाचित्वमपोद्यते ।**

**यद्यप्युभयार्थाः शब्दा इति सामान्येनोक्तम्, तथाऽपि परमेश्वरपरत्वविरोधे अन्य-परत्वम् अपोद्यते । तुशब्दो विशेषद्योतनार्थः । उभयपरत्वं तावद्विरुद्धमिति परेणैवोक्तम् । अन्यतरपरित्यागे च परमेश्वरपरित्यागो न युक्तः, निश्चिततात्पर्यवाक्यान्तरविरोधात् । अतः परिशेषादितरपरित्याग (एवोचित) इति ।**

**परि०—** कथमित्याक्षेपे हेतुमाह **उभयोरिति** । तुशब्दद्योतितविशेषमाह **उभयपरत्वमिति** । **निश्चिततात्पर्यकवाक्यान्तरेति** । 'नामानि सर्वाणि' इति प्रागुक्तश्रुतिवाक्यैर्विरोधादित्यर्थः । प्राबल्यद्योतनाय निश्चिततात्पर्येत्युक्तम् । वृद्धसम्मतियुक्त्यादिबलेन निश्चितेत्यर्थः । इतिशब्दस्येति विशेषद्योतनार्थमिति पूर्वेणान्वयः ।

**वं०प०—** शङ्कते **पदानामिति** । **तत्रापि** अर्थद्वयमध्येऽपि । तमेव विशेषं व्यनक्ति **उभयेत्यादि** । वाक्यान्तरं 'नामानि सर्वाणी'त्यादि ।

**आनन्दः—** शङ्कते **पदानामिति** । तुशब्दद्योतितं विशेषमाह **उभयपरत्वमिति** ।

**श्रीनिधि०—** **निश्चिततात्पर्याद्वाक्यान्तरादिति** । ता वा एता सर्वा ऋचः । 'नामानि सर्वाणि यमाविशन्ति यो देवानां नामधा एक एव' इत्यादि वाक्यविरोधादित्यर्थः ।

**शे०वा०—** **उभयोरिति** । 'उभयोरपि पराधीनत्वप्राप्तेरन्योन्यानुरोधे । अननुरोधे तु न सर्वैश्वर्यमि'ति न्यायविवरणोक्तेरिति भावः । **तत्रापीति** । नियामकाभावेऽपि ब्रह्मैवोपादाय अन्यपरित्यागाङ्गीकारे अन्यदेवोपादाय ब्रह्म परित्याज्यमित्यपि स्यादिति भावः । **परमेश्वरपरत्वविरोध इति** । परमेश्वरपरत्वपरित्यागे निश्चिततात्पर्यवाक्यान्तरविरोधः परमेश्वरपरत्वविरोधः तस्मिन्नित्यर्थः । ननु नियामकाभावात् कथमुक्तविशेषावधारणमित्यतो नियामकसमर्पकतया तुशब्दं व्याचष्टे **तुशब्द इति** । तुशब्दद्योतितं विशेषमेव दर्शयति **उभयपरत्वमित्यादिना** ।





**वा०र०— न्यायविवरणोक्तेरिति** । वियत्पाद इति शेषः ।

**स०व्र०— निश्चिततात्पर्यवाक्यान्तरविरोधादिति** । 'परो मात्रये'त्यादि सर्वोत्तमत्वप्रतिपादकवाक्य-विरोधादित्यर्थः । अन्ये 'नामानि सर्वाणि यमाविशन्ती'त्यादि वाक्यविरोधादित्याहुः ।

**विट्ठल०—** तुशब्दद्योतितविशेषमाह **उभयपरत्वमिति** । **निश्चिततात्पर्यवाक्यान्तरेति** । 'नामानि सर्वाणि यमाविशन्ती'ति वाक्यान्तर इत्यर्थः ।

**॥ इति परमेश्वरपरत्वविरोधे अन्यपरत्वमपोद्यते ॥**

* * *

**॥ ततः अविरोधे एव उभयार्थत्वम् ॥**

८ **सु०— तर्हि कल्पनोपदेशादित्यादिविरोधः, तत्र सर्वशब्दानामुभयपरत्वस्योक्तत्वा-दिति चेन्न; निरपवादस्थ(ले)पर्यवसायित्वात् तस्येत्याह अविरोध इति ।**

## अनु०— अविरोधे तु बह्वर्था एतन्मूलतया मताः ॥

**बहुशब्दोऽनेकार्थः । मताः = तत्र तत्र सूत्रेऽभिमताः ।**

**वं०प०—** ननु यस्मिन्वाक्ये विरोधाभावदशायामर्थद्वयमेव सम्भावितं तत्र कथं बह्वर्थत्वमित्यत आह **बह्विति** ।

**शे०वा०—** अविरोधे बह्वर्थत्वाभिधानमनर्थकमित्यतः सूत्रविरोधपरिहारार्थं तदिति भावेन तद्व्याव-र्त्यतया विरोधशङ्कामुत्थापयति **तर्हीति** । ब्रह्मपरत्वमङ्गीकृत्य अन्यपरत्वपरित्याग इत्यर्थः । अविरोधे सर्वत्र बह्वर्थत्वस्य न नियमः क्वचिदुभयार्थत्वस्य दर्शनादित्यत आह **बहुशब्दोऽनेकार्थ इति** ।

**विट्ठल०—** हिरण्यगर्भादिसूक्तेषु बह्वर्थसम्भवेति लक्ष्मीसूक्तेषु तदसम्भवादाह **बहुशब्दोऽनेकार्थ इति** ।

**॥ इति अविरोधे एव उभयार्थत्वम् ॥**

* * *





**॥ अथ च हरिसन्निधानादिनैव शब्दानां हर्यन्यत्र वृत्तिः ॥**
**॥ तत्रादौ परमेश्वरमुख्यतया शब्दानां बह्वर्थता ॥**

९ **सु०— नन्वविरोधेऽप्युभयार्थत्वाङ्गीकारो न युक्तः, तत्तु समन्वयादित्यवधार-(णविरोधा)णादित्यत उक्तम् एतन्मूलतयेति । एष परमेश्वरः, मूलं मुख्यः, येषां ते तथोक्ताः, तेषां भावः तत्ता, तयेति इत्थम्भूतलक्षणे तृतीया । मुख्या(म)र्थान्तरं वारयितुमवधारणम्, न त्वर्थान्तरमात्रम्, उक्तप्रयोजनव्याघातादिति भावः । एतेन अन्या(य्य)यश्चा(य्यं चा)नेकार्थत्वमित्यपि समाहितम्, मुख्यार्थस्यैकत्वात् ।**

**परि०— इत्थम्भूतलक्षण इति** । वाक्यबोध्यत्वरूपकञ्चित्प्रकारं प्राप्तस्य अर्थान्तरस्य मुख्यवृत्त्या वाक्यबोध्यो भगवान् लक्षणज्ञापकः, परममुख्यवृत्त्या भगवान् प्रतिपाद्यतया अवगतश्चेत् तत्सम्बन्धादन्योऽपि ततः किञ्चिद्धीनवृत्त्या प्रतिपाद्य इति ज्ञायत इति भगवत्सम्बन्धायत्तवृत्ति-हेतुत्वात् अर्थान्तरस्येति भावः । इत्थम्भूतस्य मुख्यार्थत्वप्रकारं प्राप्तस्य विष्णोर्लक्षणमर्थान्तरम् । अर्थान्तरे सत्येव योगवृत्त्या भगवतो मुख्यार्थत्वज्ञानादित्येके । **उक्तेति** । 'तथा हि । पदार्थान्तरवाचित्वमि'त्यादिनोक्तेत्यर्थः ।

**यादु०— इत्थम्भूतलक्षण इति** । बह्वर्थत्वरूपं प्रकारं प्राप्तानामेतन्मूलकत्वं लक्षणं तत्र तृतीयेत्यर्थः । **अवधारणमिति** । तत्त्वित्यवधारणमित्यर्थः । **एतेनान्यायश्चेति** । अनेकार्थत्वमिति यत्सोऽन्याय इत्यर्थः । **मुख्यार्थस्येति** । यद्यपि प्रमाणसद्भावेऽक्षादिशब्दवदनेकार्थत्वे न दोषः । तथाऽपि मुख्यार्थैक्येनैव दोषपरिहार-सम्भवे किं प्रमाणपर्यन्तगमनेनेत्यभिप्रेत्य इदमुक्तमिति ज्ञातव्यम् ।

**वं०प०—** ननु बह्वर्थाङ्गीकारे तत्त्विति सौत्रावधारणविरोध इत्यत आह **मुख्यमिति** । अर्थान्तरमात्र-मित्यत्र, वारयितुमिति वर्तते । कुत इत्यत आह **उक्तेति** । प्रयोजनबहुत्वेनेत्यनेनेत्यर्थः ।

**आनन्दः— इत्थंभूतलक्षणे तृतीयेति** । एतन्मूलत्वेन रूपेणेत्यर्थः । एतेनेत्यस्यार्थमाह **मुख्यार्थस्येति** ।

**शे०वा०—** तथाऽप्येतन्मूलतयेति भगवति शब्दानां मुख्यत्ववर्णनमनर्थकमित्यतः तत्प्रयोजनमाह **नन्विति** । कर्तृत्वकरणत्वयोरभावात् कथं तृतीयेत्यतः प्रकारे तृतीयेत्याह **इत्थंभूतेति** । एतन्मुख्यत्वप्रकारं प्राप्ता बह्वर्था इति भावः । तथाऽपि कथं सौत्रावधारणाविरोधसिद्धिरित्यतो भावमाह **मुख्येति** । अवधारणं तत्त्वि-त्येतत् । किं मुख्यार्थान्तरवाचकत्वकल्पनया अर्थान्तरमात्रवाचकत्वमेव किं न स्यादित्यत आह **उक्तेति** । व्युत्पत्त्याद्युपपत्तिरूपेत्यर्थः । तत्त्विति सौत्रावधारणविरोधपरिहारार्थत्वात् एतन्मूलत्वाभिधानस्य सार्थक्य-





मभिहितम्, इदानीं सकृत्प्रयुक्तस्यानेकार्थत्वमन्याय्यमित्याशङ्कापरिहारार्थत्वाच्च न तदभिधानानर्थक्यमित्याह **एतेनेति** । **मुख्यार्थस्येति** । यद्यपि नानार्थविवक्षयाऽपि अक्षमानयेत्यादिप्रयोगदर्शनात् सकृत्प्रयुक्तस्यापि अनेकार्थत्वमुपपादयितुं शक्यम्; प्रमाणाभावे सकृत्प्रयुक्तस्य अनेकार्थत्वाभावस्यैव उक्तन्यायविषयतया सति प्रमाणे अनेकार्थतायाः तदविरुद्धत्वात् तथाऽपि प्रकृते मुख्यामुख्यभेदेनैवोक्तविरोधपरिहारसम्भवे किं प्रमाण-पर्यन्तधावनेनेत्याशयेन एवमुक्तमित्यवधेयम् ।

**वा०र०— कथं तृतीयेत्यत** इत्यनन्तरं प्रकारवल्लक्षणे तृतीयेत्याहेति पाठः । **अत्रेत्थंभूतलक्षणे** इति वक्तव्ये प्रकारवल्लक्षण इत्युक्तिः । इत्थंभूतपदार्थकथनार्थं **तथाहि** शब्दं शब्दात्सन्निहितवाचिनः प्रकारेऽभिधेये 'प्रकारवचने थालि'तिसूत्रेण प्राप्तथालोपवादेन 'इदमस्थमुरि'ति सूत्रेण प्रकारेऽर्थेऽथमुप्रत्यये 'एतेतौ रथोरि'ति सूत्रेण रेफादौ थकारादौ चप्रत्यये परत इदम एत इदित्यादेशविधायकेनेदित्यादेशे च सति 'अयं प्रकार' इत्थमिति सिद्धे तृतीयाविधिप्रकरणे सन्निहितकस्यचिदर्थस्याभावे, तस्येत्थंशब्दस्य सन्निहितांशपरित्यागेन प्रकारमात्रवाचितायां समासविषयेऽपि द्वितीयान्तेत्थंशब्दस्येममित्यंशत्यागेन प्रकारमित्येवार्थ इत्यादेः मञ्जर्याद्युक्तदिशा गीताभाष्य-व्याख्याने प्रतिपादनादत्र इत्थं भूतः इत्थंभूत इति गम्यादीनामुपसङ्ख्यानेन द्वितीयासमासः । दोषं मन्यत इति दोषं मन्यामह इति तद्वृत्तिविषयेऽव्ययार्थस्यापि कर्मतया कर्मणि द्वितीयोपपत्तिः । प्रमाणभूत आचार्यो दर्भपवित्रपाणिरिति वृद्धिसूत्रीयभाष्यवाक्यव्याख्यावसरे भूत इत्यस्य प्राप्त इत्यर्थकताया उपपादनात् कञ्चित्प्रकारं प्राप्त इत्थंभूत इत्यपि लभ्यत इति क्वचित्प्रकारे तृतीयेत्याहेति पाठः तत्रापि प्रकारे लक्ष्ये तृतीयेत्यर्थः । तृतीयाया लक्षणार्थत्वात् प्रकारलक्षण इत्यर्थः फलति प्रकारवतो लक्षण इति वक्तव्येऽपि प्राप्ताप्राप्तविवेकेन प्रकारस्यैव गम्यत्वे पर्यवसानात् प्रकारग्रहणोपपत्तिः । प्रकारो लक्ष्यतया अस्यास्तीति मत्वर्थे प्रत्ययान्ततया प्रकारपदमेव प्रकार-लक्षणपरमिति वा प्रकारपदप्रयोगप्रयोजनं तूक्तमेवेति ज्ञेयम् । कोऽत्र प्रकारः । कथं तं प्राप्तो यल्लक्षणमेत-न्मुख्यकत्वमित्यत आह **एतन्मुख्यकत्वेति** । अत्रैतन्मुख्यकत्वलक्षणकाभिमतत्वं प्रकारं प्राप्ता इति पाठः । अनेनेदमुक्तं भवति । बह्वर्थानां सूत्राभिमतत्वं प्रकारं प्राप्तानां लक्षणमेतन्मुख्यकत्वमिति इत्थंभूतलक्षणपदार्थादि-निरूपणपूर्वकं सूत्रविषयविचारादिकं लेशत इति प्रथमगीताभाष्यपद्यस्थपदे इत्थंभूतलक्षणे तृतीयेति जयतीर्थोक्तस्य व्याख्यावसरे टीकाकृता कृतमस्ति । तत्प्रपञ्चोऽपि तद्व्याख्यावसरेऽस्माभिः कृतोऽस्ति तदनुसारेण अत्रापि सोदाहरणसूत्रविचारादिकमवधेयम् । आद्यादिभ्य उपसङ्ख्यानात् तृतीयेति व्याख्यानमित्थंभूतलक्षणस्थले वैय्या-करणानामस्ति तदत्र लेख्यमस्ति । क्वचित्पुस्तके एतन्मुख्यकत्वप्रकारं प्राप्ता इति पाठः तत्रापि प्रक्रियते ज्ञाप्यते-ऽनेनेति करणे घञन्तप्रकारशब्देन ज्ञापकं लक्षणमेवोक्तम् । तथा च मूलोक्ताभिमतत्वं प्राप्त इति फलति । एतन्मुख्य-कत्वेन प्रक्रियमाणतया कर्मणि घञन्तप्रकारशब्देन वाच्यमभिमतत्वं प्राप्ता इति वा एतन्मुख्यकत्वलक्षणकः प्रकार इति मध्यमपदलोपीसमासः । शाकपार्थिवादित्वादिति वा एतन्मुख्यकत्वरूपं प्रकारं प्राप्ता इति लक्षणप्राप्तिवचनं तु लक्ष्येऽभिमतत्वस्यैव लक्षणस्यापि समवेततास्ति । ननु व्यधिकरणत्वं छात्रादेरिवेति दर्शयितुं अत एवाच्छाव-दातनेति तृतीयाध्याये ऋग्भाष्ये जरायै ब्रह्मण इत्यत्रत्यचतुर्थ्ये वेत्थंभूतलक्षण इत्येतत्प्रतिपाद्यसंस्तुतिरूपत





इत्युक्तस्य व्याख्यावसरे संस्तुतित्वरूपेणोपेत एतल्लक्षणस्यापि लक्ष्यगतत्वमुक्तम् । तत्र ह्यच्छावदेत्युक्त-यथावद्वक्तव्यत्वमेव ज्ञाप्यः प्रकारः टीकापि वक्तव्यत्वप्रकारमिति । एतद्विस्तरस्तु गीताभाष्यसम्बन्ध्युक्तस्थल एव संस्तुतित्वस्य ज्ञाप्यप्रकारत्ववदल्पत्वं लेशपदोक्तं प्रकार इति व्याचक्षाणानामचातुर्ी प्रकटयद्भिरस्माभिः कृतोऽस्ति तत्रैवानुसन्धेयः ।

अयमाशयः । अभिमतत्वरूपं प्रकारं प्राप्तानां बह्वर्थानामेतन्मुख्यत्वं लक्षणं तथा च छात्रेणोपाध्याय-मद्राक्षीत् कमण्डलुना छात्रमद्राक्षीदित्यादावुपाध्यायत्वछात्रत्वरूपप्रकारप्राप्तयोरुपाध्यायछात्रयोः छात्रकमण्डलु-लक्षणं छात्रं दृष्ट्वा उपाध्यायोऽयं इति जानन्ति । कमण्डलुं दृष्ट्वा चायं छात्र इति जानन्तीत्येवंरूपेण तेन लक्षणेन तत्प्रकारस्य ज्ञानं यथा भवति एवं बह्वर्थानामपि एतन्मुख्यकत्वं विज्ञायैव अभिमतत्वं विज्ञायत इतीत्यभिमत-त्वप्रकारं प्राप्तानां बह्वर्थानामेतन्मुख्यकत्वं लक्षणं भवति यस्य हस्ते कमण्डलुः स छात्र इति । यस्य च पृष्ठभागे छात्रः स पुरोगामी उपाध्याय इति ज्ञानवत् येषां बह्वर्थानामेतन्मुख्यकत्वं ते अभिमता इति ज्ञानस्य जायमान-त्वादिति इत्थंभूतलक्षणतृतीयेति । एतेन वाक्यबोध्यत्वरूपकञ्चित्प्रकारंप्राप्तस्यार्थान्तरस्य मुख्यबोध्यो भगवान् लक्षणमित्यादि टीकान्तरस्थव्याख्यानमपि निरस्तम् । एतन्मुख्यतया बह्वर्था 'कल्पनोपदेशादि'ति सूत्रे अभिमता इति वाक्यविन्यासस्य सिद्धत्वात् तत्र तृतीयोपपादनावसरे वाक्यबोध्यत्वमित्यादि व्युत्पादितस्य मूलासंस्पर्शात् । भगवतो लक्षणत्वे छात्रेणेतिवत् एतेनेति तृतीयापत्तेश्च विष्णोर्लक्षणमर्थान्तरमित्यादि तत्रानुदितमप्यसदेव । अन्यथा-ख्यातौ तु बह्वर्थत्वप्रकार इत्युक्तं तन्न । एतन्मुख्यत्वस्य बह्वर्थगताभिमतत्वलक्षणत्वेऽपि बह्वर्थत्वलक्षणत्वा-भावात् । न हि एतेन तन्मुख्यकत्वेन बह्वर्थत्वं ज्ञाप्यते किन्तु तेषां अभिमतत्वमेवेति स्पष्टमवेति यत्किञ्चिदेतत् । **सार्थक्यमभिहितमिति** । सार्थक्यमित्यभिहितमित्यर्थः । इदानीमित्युत्तरानुसारात् पूर्वमिति लभ्यत इति ज्ञेयम् । आनन्त्यवाचकः शब्दो द्विधानन्त्येऽपि मानतामिति वैशेषिकाधिकरणानुभाष्यमूलोक्तरीत्या अन्यायश्चानेकार्थत्व-मित्येतदुपपादनं ज्ञेयम् । नानार्थेत्युक्तरीत्या समाधानं त्वभ्युच्चयेनेति सूचयितुमाह **यद्यपि नानेति** ।

**स०व्र०**— नन्वेकस्यैव वाक्यस्योभयार्थत्वे अन्यायश्च अनेकार्थत्वमित्युक्तदोषं परिहरति **एतेनेति** । यद्यपि एकस्यैव अनेकमुख्यार्थत्वमपि सम्भवति, अक्षादिशब्देषु तथा दर्शनात्, अन्यायश्च अनेकार्थत्वमित्यस्य च प्रमाणाभावे अनेकार्थत्वस्य दोषत्वाभिधायकत्वोपपत्तेः । तथापि प्रकृते मुख्यामुख्यभेदेनैव अन्यायश्च अनेका-र्थत्वम् इत्यसम्भवे किं प्रमाणपर्यन्तगमनेनेत्यभिप्रायेण एतदुक्तम्, न तु तस्यासाधकत्वाभिप्रायेणेदमिति बोध्यम् ।

**स०ना०**— 'अविरोधे तु बह्वर्था एतन्मूलतया मता' इत्यनुव्याख्यानसुधायां **इत्थंभूतलक्षणे तृतीयेति** । सर्वशब्दानां भगवन्मुखार्थत्वलक्षणं बह्वर्थत्वं शब्दगतप्रकारः । एवं च तज्ज्ञापकत्वविवक्षासद्भावात् एतन्मूलतयेत्यत्र तृतीयेत्यर्थः । जटाभिस्तापस इति यथेति भावः । प्राप्ता शब्दाः इत्थंभूताः । 'प्रवृत्तिहेतोर्बाहुल्यं ज्ञेयं परममुख्यता' इत्यादिमूलसुधायां महारूढिस्तु न सम्भवतीति अखण्डावृत्तिः न सम्भवतीत्यर्थः । सा योगादेव लभ्यत इत्युक्तत्वादिति ल्यब्लोपनिमित्ता पञ्चमीयोगात्मकत्वमविहाय योगात्मनैव उपलभ्यते इत्यर्थः । अन्यतरमात्रेणेतरव्यावृत्तिसिद्धेरिति ।





**विट्ठल०— इत्थंभूतलक्षण इति** । बह्वर्थत्वरूपप्रकारं प्राप्तानां यदेतन्मूलत्वं तल्लक्षणे तदज्ञापने तृतीयेत्यर्थः । एतन्मूलत्वप्रकारं प्राप्ताः बह्वर्थाः तदज्ञापने तृतीयेत्यर्थः । 'गीतार्थं वक्ष्यामि लेशत' इतिवदुपपद्यत इति ज्ञेयमित्याहुः । **अवधारणमिति** । तुशब्दलब्धस्यावधारणार्थत्वादित्यर्थः ।

**चषकः—** कर्तृकरणत्वयोरभावेऽप्यर्थान्तरे तृतीयां सङ्घटयति **इत्थम्भूतलक्षण इति** । परमेश्वरप्रधानकत्वज्ञाप्यबह्वर्थत्वरूपप्रकारविशेषिता इत्यर्थः । **अवधारणमिति** । समन्वयसूत्रघटकसर्वनामसमभिव्याहृतावधारणार्थकस्तुशब्द इत्यर्थः । **अन्यायश्चेति** । यद्यपि नानार्थतात्पर्यकेषु सैन्धवमानयेत्यादिषु सकृत्प्रयुक्तस्यापि प्रमाणसद्भावेन नानार्थता न दुष्यतीति तद्राहित्यस्थल एवायं न्यायः सञ्चरितः तथापि मुख्यार्थैक्येन क्षत्यपनुत्तौ प्रमाणराहित्यपर्यन्तानुधावनं मन्दप्रयोजनमित्याशयेनेयमुक्तिरित्यवसेयम् ।

**॥ इति परमेश्वरमुख्यतया शब्दानां बह्वर्थता ॥**

* * *

**॥ तत्र इन्द्रादिशब्देषु परमेश्वरस्यैवोपजीव्यत्वान्मुख्यार्थत्वम् ॥**

१० **सु०—** 'ननु पुरन्दरादिष्वपीन्द्रादिशब्दा रूढियोगाभ्यां प्रवृत्ताः । रूढियोगौ च मुख्यवृत्ती कथ्येते । अतः अक्षादिशब्दानामिव इन्द्रादिशब्दानाम् उभयं मुख्याभिधेयं युक्तम्, नेश्वर एवे'त्यत आह **इतो हीति** ।

## अनु०— इतो हि रूढताऽन्येषामुपजीव्यत्वमत्र हि ।

सत्यमस्ति पुरन्दरादीनामपीन्द्रादिशब्दरूढिविषयता, तथाऽपि सा **इतः** परमेश्वरादेव **हि** यस्मात्, यस्माच्च **अत्र** (प्र)योगविषयत्वे परमेश्वरस्यैव उपजीव्यत्वं, तस्मात् स एव मुख्यार्थो न पुरन्दरादयः । स्वत एव अनवधिकैश्वर्यादिमति ईश्वर एव इन्द्रादिशब्दानां योगरूढी, तत्सन्निधानात् तदायत्त(तत्प्र)प्रवृत्तिनिमित्तत्वादेव च पुरन्दरादिषु । प्रसिद्धं चैतत्, 'यद्यत्सन्निधानात् यच्छब्दप्रतिपाद्यं तदमुख्यम् अन्यन्मुख्यमि'ति, यथा दग्धृशब्दस्य अयोऽग्निश्च । न चाक्षादिशब्दार्थानामित(रेत)रापेक्षाऽस्तीति वैषम्यमिति ।

**गु०दी०— शब्दानां योगरूढी तत्सन्निधानात्** इत्यत्र इन्द्रान्तर्यामिणि भगवद्रूपे इन्द्रादिपदानां योगरूढी । तत्सन्निधानादिन्द्रावपि योगरूढी । अत एवातीतकल्पे न तत्र रूढिरिति भावः ।

**आनन्दः**— मुख्यार्थान्तरं वारयितुमवधारणमिति यदुक्तं तदाक्षिपति **ननु पुरन्दरादीष्वपीति** । इतो हीत्यत्र पदद्वयस्यैकार्थत्वं प्रतीयते । ततश्च पौनरुक्त्यं साध्यं च न प्रतीयते अतः व्याख्याति **सत्यमस्तीति** । द्वितीय-हिशब्दस्य यस्माच्चेति व्याख्यानम् । ननूभयत्र प्रवृत्तिनिमित्तसद्भावात् कथं मुख्यत्वामुख्यत्वे इत्यत आह **प्रसिद्धं चेति । यथा दग्धृशब्दस्येति** । सामान्यमात्रे दृष्टान्तोऽयम् । अन्यथा दग्धशब्दस्यापसिद्धान्त-लक्षणावदिन्द्रादिशब्दानामपि पुरन्दरादिषु लक्षणा स्यादिति भावः । अत्रादिशब्दानामिवेन्द्रादिशब्दानामपि उभयं मुख्याभिधेयमिति यदुक्तं तत्र दृष्टान्तवैषम्येण विघटयति **न चाक्षादीति** । तथा च इन्द्रादिशब्दप्रवृत्तिनिमित्तस्य ऐश्वर्यादेः परमात्माधीनत्वेन प्रकृते इतरापेक्षत्ववदक्षादिशब्दार्थभूतया अंशेन्द्रियाणामन्योन्याक्षेपकत्वाभावाद्वैषम्य-मित्यर्थः ।

**शे०वा०**— ननु भगवत्सन्निधानादिना अन्यत्र शब्दवृत्त्युत्पादकमुत्तरवाक्यमनर्थकमित्यतः सौत्राव-धारणाद्यविरोध्यमुख्यत्वसमर्थनार्थत्वान्न वैयर्थ्यमिति भावेन तद्व्यावर्त्यां शङ्कामुत्थापयति **नन्विति** । **रूढि-योगाभ्यामिति** । रूढेरभिधानादिसिद्धत्वात् योगनिमित्तस्य परमैश्वर्यादेः तत्र सत्त्वादिति भावः । अक्षादिशब्दाना-मिवेति दृष्टान्तोपादानम्, अन्यथा अक्षादिशब्दानामपि मुख्यानेकार्थत्वं न स्यादित्यतिप्रसङ्गसूचनार्थम् । **उभयं मुख्याभिधेयमिति** । तथा च मुख्यार्थस्यानेकतया मुख्यार्थान्तरव्यावर्तकावधारणविरोधः । तदनेकत्वप्रयुक्तोक्त-न्यायविरोधश्च तदवस्थ इति भावः । अक्षादिशब्दानामिवेति सूचितां प्रतिबन्दीं वैषम्योपदर्शनेन परिहरति **न चेति** ।

**वा०र०**— **सन्निधानादिनेति** । आदिपदेन प्रवृत्तिनिमित्तस्य भगवदधीनतायाः परिग्रहः । **अवधारणा-दीति** । आदिपदेन अन्यायश्चानेकार्थत्वमिति न्यायपरिग्रहः ।

**विट्ठल०**— अक्षादिशब्दानामिवेत्युक्तदृष्टान्तं वैषम्योक्त्या विघटयति **स्वत एवानवधिकेति** । पुरन्दरा-दिष्वित्यतः परं तस्मात् तेषां शब्दानां पुरन्दरादिषु अमुख्यत्वं परमेश्वरे तु मुख्यत्वमिति शेषः । तत्र व्याप्तिं दर्शयति **प्रसिद्धं चैतदिति** ।

**॥ इति इन्द्रादिशब्देषु परमेश्वरस्यैवोपजीव्यत्वान्मुख्यार्थत्वम् ॥**

* * *

**॥ तत्र हरीच्छयैव शब्दानामन्यपरत्वम् ॥**

**११ सु०— नन्वेवं चेदीश्वरस्याप्यमुख्यत्वं प्रसक्तम्, अर्थान्तरापेक्षयैव तत्र शब्द-प्रवृत्तेः । न खलु जातादिशब्दानामन्यार्थतामनपेक्ष्य ज्योतिषेत्यादिशब्दानां भगवति प्रवृत्तिः सम्भवतीत्यत आह तत्सिद्धिरिति ।**

## अनु०— तत्सिद्धिस्तदपेक्षा च

**चशब्दोऽवधारणे । नायमस्ति दोषः, यतः परमपुरुषे तत्तच्छब्दप्रवृत्तिप्रतीतिरेव अर्थान्तरापेक्षा न तु प्रवृत्तिः । न हि घटस्य रूपं प्रदीपापेक्षया प्रतीयत इत्येतावता तदायत्तं भवति । यथाऽन्यत्र शब्दप्रवृत्तिरेव परमेश्वरापेक्षा । नैवं परमात्मनि वृत्तावितरापेक्षां कामपीक्षामह इति ।**

**आनन्दः— अन्यत्र शब्दप्रवृत्तिरिति** । इन्द्रादिशब्दानां शक्तिरूपांशवृत्तिशक्यतावच्छेदकस्य परमात्माधीनत्वात् तत्सापेक्षेत्यर्थः ।

**शे०वा०—** ननु शब्दप्रवृत्तिप्रतीतेः अन्यापेक्षत्वप्रतिपादकं तत्सिद्धिरित्याद्युत्तरभाष्यमनर्थकमित्यतः अमुख्यत्वसाधकस्य सापेक्षत्वस्य भगवत्यसिद्धिव्युत्पादनार्थत्वान्नानर्थक्यमित्याशयेन तद्व्यावर्त्यतया सापेक्षतया अमुख्यत्वशङ्कामुत्थापयति **नन्विति** । यथास्थितचशब्दयोजनायां चशब्दानर्थक्यं तत्सिद्धिश्चेति योजनायामपि शब्दप्रवृत्तेरपि तत्सापेक्षत्वलाभात् न अमुख्यत्वशङ्कानिवर्तकत्वमित्यतः अवधारणार्थतया तं व्याचष्टे **चशब्द इति** । तथाऽपि प्रवृत्तिप्रतीतेरन्यापेक्षत्वमात्रेणैव प्रवृत्तेरन्यायत्तत्वसिद्ध्या अमुख्यत्वमेवेत्यतः तथा सति अतिप्रसङ्गः स्यादित्याह **न हीति** ।

**विठ्ठल०—** परमात्मापेक्षेत्यत्र बहुव्रीहिः पूर्वं ज्ञप्तावेवार्थान्तरापेक्षामुपेत्य हरावमुख्यत्वदोषो निरस्तः ।

१२ **सु०— इतश्च नायं दोष इत्याह साऽपेक्षा चेति ।**

## अनु०— साऽपेक्षा च हरीच्छया ।

**या परमेश्वरे शब्दानां वृत्तावर्थान्तरापेक्षा सा च भगवदिच्छानिबन्धनैव न त्वनन्यगतिकतयेत्यतो न तस्यामुख्यार्थताप्राप्तिः । न हीच्छया प्रकृत्यादिकमुपाददानस्य सृष्टिः परायत्ता, नापि पटुकरणो लीलानिमित्तमिच्छया दण्डमवष्टभ्य गच्छन्दण्डायत्तगतिर्भव(ती)ति ।**

**परि०—** पूर्वं ज्ञप्तावेवार्थान्तरापेक्षामुपेत्य हरावमुख्यत्वदोषो निरस्तः । अधुना शब्दवृत्तावेवान्यापेक्षामुपेत्य उक्तदोषं निराह **इतश्च नायं दोष इत्याहेति** ।

**आनन्दः— शब्दानां वृत्ताविति** । शब्दानां प्रवृत्तिप्रतीतावित्यर्थः ।





**शे०वा०**— अमुख्यत्वसाधकस्य सापेक्षत्वहेतोरसिद्धिव्युत्पादनेन भगवत्यमुख्यत्वशङ्कायाः परिहारात् किमुत्तरेणेत्यत आह **इतश्चेति** । ततश्च भगवति शब्दप्रवृत्तेरमुख्यत्वाभावे युक्त्यन्तराभिधायकत्वात् न तस्य आनर्थक्यमिति भावः । **इच्छानिबन्धनैवेति** । अनेन चशब्दोऽवधारणे, स च हरीच्छयेत्यनेन सम्बद्ध्यत इत्युक्तं भवति । अवधारणव्यावर्त्यप्रदर्शनम् **न त्विति** । स्वेच्छया परापेक्षया अप्यस्तु परायत्तत्वापादकत्वमित्यतो वैदिकमतिप्रसङ्गं सूचयन्नुक्तमुपपादयति **न हीति** । तत्रापि विप्रतिपद्यमानं प्रति लोकसिद्धमतिप्रसङ्गमाह **नापीति** । अनन्यगतिकतयैव दण्डोपादानादस्त्येव दण्डायत्तगतित्वमित्याशङ्कापरिहारायोक्तम् **पटुकरणोऽपीति** ।

**विट्ठल०**— अधुना शब्दवृत्तावेव अन्यापेक्षामुपेत्य अर्थान्तरापेक्षयैव भगवति शब्दवृत्तिप्रसक्तेः तस्या-मुख्यार्थत्वमिति दोषं निराकरोति **इतश्च नायं दोष इति** ।

**॥ इति हरीच्छयैव शब्दानामन्यपरत्वम् ॥**

* * *

**॥ तत्र च परममुख्य-मुख्य-भेदेन अर्थान्तरभेदव्यवस्था ॥**

**१३ सु०— 'यद्येवं हरिसन्निधानादिना शब्दानामन्यत्र वृत्तिः तत्किमयसीव दग्धृ-शब्दस्य लोके सर्वशब्दानां लक्षणैव । तथा सति गङ्गातीरयोरविशेषप्रसङ्गः । ईक्षत्यधि-करणोक्तार्थस्य मूले निहितः कुठार' इत्याशङ्कां परिहरन्नेतन्मूलतयेत्यादिनोक्तमर्थमुपसंहरति तस्मादिति ।**

## अनु०— तस्मात्परममुख्यत्वं विष्णावन्यत्र मुख्यता ।

**नायसि दग्धृशब्दस्येवेन्द्रादिशब्दानां पुरन्दरादिषु लक्षणैव, रूढेरभिधानादिसिद्ध-त्वात्, योगनिमित्तस्य च परमैश्वर्यादेः सद्भावात्; किन्तु परमेश्वरविषययो रूढियोगयो-रपराधीनत्वनिरंकुशत्वाभ्याम्, अन्यत्र तदधीनत्वाल्पत्वाभ्यां, मुख्यार्थतायामेवायं मुख्या-मुख्य(योः)विभागोऽभिहित इति । तदिदमुक्तं परममुख्यत्वमिति मुख्यतेति च ।**

**परि०**— अस्तु को दोष इत्यत आह **ईक्षतीति** । सर्वशब्दावाच्यस्य लक्ष्यत्वं न क्वापि दृष्ट-मिति ईक्षत्यधिकरणोक्तार्थस्येत्यर्थः । सर्वस्यापि शब्दराशेर्विष्णुवाचित्वेन लोके कस्यापि वाचकस्य अभावादिति भावः ।





**गु०दी०— ईक्षत्यधिकरणोक्तार्थस्य** इत्यत्र ईक्षत्यधिकरणे हि सर्वशब्दावाच्यस्य लक्षणाऽयुक्तेरिति ब्रह्मणस्सर्वशब्दावाच्यत्वे लक्षणैव न युज्यत इत्युक्तम् । अत्रान्यत्र मुख्यवृत्त्यभावेनावाच्यत्वमङ्गीकृत्य लक्षणैवेति स्वीकारे ईक्षत्यधिकरणोक्तार्थहानिरिति भावः ।

**यादु०— ईक्षत्यधिकरणोक्तार्थस्येति**। 'ईक्षणीयत्वतो विष्णुर्वाच्य एव' इति ईक्षत्यधिकरणार्थो यः तस्य यन्मूलं 'न चान्यथा । लक्ष्यत्वं क्वापि दृष्टं हि' इत्यादिनोक्तं तत्रेत्यर्थः । तत्र हि 'केनचित् तीरादिपदेन वाच्यस्यैव तीरादेर्गङ्गादिपदलक्ष्यत्वं दृष्टम् । न केनापि पदेन अवाच्यस्य, येन ब्रह्मणो लक्ष्यत्वं स्यात्' इति मूलमुक्तम् । अत्र च लोके वाचकपदाभावेन लक्षणामात्राङ्गीकारे तद्भग्नं स्यादित्यर्थः । अन्ये तु लोके सर्वपदानां लक्षणाङ्गीकारे तन्न्यायेनैव परेणाप्यवाच्ये ब्रह्मणि लक्षणया वैदिकपदेभ्य ईक्षणस्याङ्गीकर्तुं शक्यत्वेन नेक्षणान्यथाऽनुपपत्त्या वाच्यत्वसिद्धिः सम्भवतीति 'ईक्षणीयत्वतो विष्णुर्वाच्य एवे'ति यत्तदधिकरणप्रमेयं तदुन्मूलितं स्यादित्यर्थ इत्याहुः ।

**आनन्दः— तथा सतीति** । उभयोरपि गङ्गापदलक्ष्यत्वादिति भावः । **ईक्षत्यधिकरणोक्तार्थस्येति** । यद्धि केनापि शब्देन न वाच्यं तत्र लक्षणैव न सम्भवतीति ईक्षत्यधिकरणोक्तार्थस्य मूले कुठारो निहितः कथयन्नेकैकस्यापि वाचकस्य पदस्याभावेऽपि लक्षणा स्वीकृता । एवं च ब्रह्मण्यपि कस्यापि वाचकस्याभावेऽपि लक्षणाऽस्त्वित्ययुक्तं समन्वयसूत्रं स्यादिति भावः । ननूभयत्र प्रवृत्तिनिमित्तसद्भावे मुख्यामुख्यविभागो न युज्यत इत्यत आह **किन्त्विति** ।

**श्रीनिधि०— निरंकुशत्वं** निरवधिकत्वम् ।

**शे०वा०—** ननु तस्मादिति उत्तरभाष्यमनर्थकम् । न च उपसंहारार्थत्वात् सार्थक्यमिति वाच्यम् । तथा सति उपपादनानुसारेण विष्णौ मुख्यत्वस्य अन्यत्र अमुख्यत्वस्यैव वक्तव्यतया अनुपपादितस्य विष्णौ परममुख्यत्वस्य अन्यत्र मुख्यत्वस्य चाभिधानानर्थक्यादित्यतः एतन्मूलतयेत्यादिनोक्तस्य अन्यत्र अमुख्यत्वस्य भगवति मुख्यत्वस्य चेदं तात्पर्यनिरूपणमिति नानर्थक्यमित्याशयेनोक्तेऽर्थे अनुपपत्त्यभावात् किमेवं तात्पर्यनिरूपणेनेत्यतो यथाश्रुतार्थे अनुपपत्तिशङ्कामुत्थापयति **यद्येवमिति** । इष्टापत्तिं परिहरति **तथा सतीति** । गङ्गातीरयोरुभयोरपि गङ्गाशब्दलक्ष्यतया गङ्गाया गङ्गाशब्दमुख्यार्थत्वं तीरस्य च अमुख्यार्थत्वमिति सर्वसम्मतो विशेषो न स्यादिति भावः । **ईक्षत्यधिकरणार्थस्येति** । 'ईक्षणीयत्वतो विष्णुर्वाच्य एवे'ति य ईक्षत्यधिकरणार्थः तस्य यन्मूलं 'न चान्यथा । लक्ष्यत्वं क्वापि दृष्टं ही'त्यादिनोक्तं तत्रेत्यर्थः । तत्र हि केनचित् तीरादिपदेन वाच्यमेव, तीरादिकं गङ्गादिपदेन लक्ष्यं दृष्टम्, न तु केनापि पदेन अवाच्यं किमपि लक्ष्यं दृष्टम् । तस्मादवाच्यत्वे ब्रह्मणो लक्ष्यत्वायोगान्न लक्षणयाऽपीक्षणीयत्वमिति मूलमुक्तम् । तच्चात्र लोके वाचकपदाभावेन लक्षणामात्राङ्गीकारे भग्नं स्यादित्यर्थः ।





**वा०र०**— तथा सत्युपपादनानुसारेणेति वाक्ये अन्यत्रामुख्यत्वस्यैव चेति चशब्दयुक्तः पाठः । **आनर्थक्यादिति** । अभिधानस्यासङ्गतत्वादित्यर्थः । एवमुत्तरत्र ।

**स०व्र०**— **ईक्षत्यधिकरणोक्तार्थस्य चेति** । 'न चान्यथा । लक्ष्यत्वं क्वापि दृष्टं ही'त्यादिनोक्तार्थस्ये-त्यर्थः । तत्र हि 'केनचित् तीरादिपदेन वाच्यस्यैव तीरादेः गङ्गादिपदलक्ष्यत्वं दृष्टम् । न केनापि पदेन अवाच्यस्य येन ब्रह्मणो लक्ष्यत्वं स्या'दित्युक्तत्वेन तद्धानिः स्यादिति भावः ।

**विट्ठल०**— **गङ्गातीरयोरिति** । तीरवद्गङ्गाया अपि लक्ष्यार्थत्वप्राप्तेरित्यर्थः । **ईक्षत्यधिकरणोक्तार्थ-स्येति** । 'न चान्यथा । लक्ष्यत्वं क्वापि दृष्टं ही'त्यादिना उक्तो योऽयमर्थः केनचिच्छब्देन लक्ष्यत इत्यादिरूप-स्तस्येत्यर्थः ।

**चषकः**— **ईक्षत्यधिकरणोक्तेति** । 'ईक्षणीयत्वतो विष्णुर्वाच्य एवे'ति ईक्षतिनयाभिहितार्थस्य 'न चान्यथा । लक्ष्यत्वं क्वापि दृष्टं ही'त्यादिना यन्मूलमभिहितं तत्रेत्यर्थः ।

**॥ तत्रादौ शब्दवृत्तीनां त्रैविध्यम् ॥**

१४ **सु०— गौणी(चे)त्यतःपरमितिशब्दोऽध्याहार्यः ।**

## अनु०— उपलक्षणा च गौणी च तिस्रः शब्दस्य वृत्तयः ॥

**परि०**— भगवतोऽन्यत्र तिस्रो वृत्तय इत्यन्वयमभिप्रेत्य प्रत्येकं त्रित्वमिति भ्रमनिरासायाह **गौणीत्यतःपरमितिशब्द इति** ।

**आनन्दः**— **गौणीति** । अन्यथा प्रत्येकं त्रित्वं प्रतीयेत इति भावः ।

**शे०वा०**— अन्यत्र मुख्यतादेरेव वृत्तितालाभायाह **गौणी चेत्यतःपरमितिशब्द इति** ।

**वा०र०**— **मुख्यतादेरेव वृत्तितेति** । मुख्यतादिसमकक्ष्यतया तिस्रो वृत्तय इति प्रतिपादने मुख्यता-दिवद्वृत्तित्रयमात्रसद्भावप्रतिपादनलाभेऽपि मुख्यतादेरेव वृत्तित्वलाभाभावात् तल्लाभायेतिशब्दं पूरयतीत्यर्थः ।

**विट्ठल०**— प्रत्येकं त्रित्वभ्रमनिरासायाह **गौणी चेत्यतःपरमितिशब्द इति** । तथा चैवं मूलयोजना ।

**॥ इति शब्दवृत्तीनां त्रैविध्यम् ॥**

* * *





**॥ तत्र परममुख्यादिवृत्तिलक्षणानि ॥**

१५ **सु०— एतदेव दर्शयन् परम(मुख्यवृत्ति)मुख्यादिवृत्तिलक्षणान्याह प्रवृत्तीत्यादिना ।**

**आनन्दः**— **एतदेवेति** । मुख्यार्थतायामेवायं मुख्यामुख्यत्वविभाग इति एतदेवेत्यर्थः ।

**शे०वा०**— परममुख्यतादिवृत्तिलक्षणकथनपरोत्तरग्रन्थानर्थक्यं परिहरति **एतदेवेति** । विष्णौ परममुख्यत्वं तदन्यत्र मुख्यत्वादीत्येतदेवेत्यर्थः ।

**विठ्ठल०**— विष्णोरन्यत्र शब्दस्य मुख्यता उपलक्षणा च गौणी चेति तिस्रो वृत्तय इति ।

**॥ इति परममुख्यादिवृत्तिलक्षणानि ॥**

* * *

**॥ तत्र परममुख्यवृत्तिद्वैविध्यम् ॥**

१६ **सु०— तत्र परममुख्यवृत्तिर्द्वेधा । महायोगो महायोगरूढिश्चेति । महारूढिस्तु न सम्भवति, 'सा योगादेव लभ्यत' इत्युक्तत्वात् ।**

**परि०**— न्यायविवरणोक्तविभागमाह **तत्र परममुख्यवृत्तिर्द्वेधेति** । हरितदन्यत्रविद्यमानवृत्तिमध्य इत्यर्थः । ननु लोके योग-रूढि-योगरूढि-रूपमुख्यवृत्तित्रयवत् हरावपि महायोग-महारूढि-महायोगरूढि-भेदेन त्रैविध्यं कुतो नोक्तम् । न्यायविवरणे, अत्र लक्षणोक्तिप्रस्तावे च कुतस्तल्लक्षणमपि नोक्तमित्यत आह **महारूढिस्त्विति** । **इत्युक्तत्वादिति** । आनन्दमयनयान्ते ब्रह्मणि विद्वद्रूढेर्योगं विना अभावस्योक्तत्वादित्यर्थः । वृत्तिसामान्यलक्षणं च शब्दस्यार्थप्रतिपादकत्वमिति भावः ।

**यादु०**— **सा योगादेवेति** । योगमविहायैवेत्यर्थः ।

**आनन्दः**— ननु प्रवृत्तिहेतुबाहुल्यरूपं लक्षणमाह योगरूढावव्याप्तं तत्र प्रवृत्तिहेतोर्निरवधिकत्वस्यैवाभावादित्यतो नेदं महायोगं रूढलक्षणं किं तु योगस्येति भावेन परममुख्यवृत्तिविभागमाह **तत्र परमेति** । **सा योगादेवेति** । रूढेर्महत्त्वस्य योगाविनाभूतत्वात् महायोगेनैव तस्यागतत्वान्न पृथग्गणनमित्यर्थः ।

**शे०वा०**— एकेनैव वाक्येन परममुख्यतावृत्तेर्लक्षितत्वात् द्वितीयवैयर्थ्यमित्यतः परममुख्यतावृत्तेः द्विविधत्वात् द्विरूपतद्वृत्तिलक्षकतया न कस्यापि वैयर्थ्यमिति भावेन तत्तद्विशेषलक्षकतया वाक्यं योजयितुं





तद्विभागमाह **तत्रेति** । के ते द्वे विधे इत्यतो न्यायविवरणानुसारेण ते दर्शयति **महायोग इति** । यद्यपि महायोगापेक्षया महायोगरूढेः प्राधान्यात् तस्या एवादौ निर्देश उचितः तथापि तदेकमात्रप्रसिद्धनारायणादिशब्दमात्रनिष्ठमहायोगरूढ्यपेक्षया भगवदेकप्रसिद्धतदन्यमात्रप्रसिद्धनारायणादिस्तम्भादिसकलशब्दसाधारणतया महायोगस्य प्राधान्यविवक्षया तस्यैवादौ निर्देश इति ध्येयम् । विधान्तरस्यापि सत्त्वात् कथं द्वैविध्यमित्याशङ्कां तदसम्भवव्युत्पादनेन परिहरति **महारूढिस्त्विति** । विद्वद्रूढिरित्यर्थः । कुत इत्यतः तस्या योगाविनाभूतत्वादिति भावेन तदसिद्धिं परिहरति **सा योगादेवेति** । तथा च योगाविनाभूतत्वेन तद्रूढेर्महायोगरूढित्वस्यैव प्राप्तेः न तदपेक्षया महारूढिमात्रस्य वृत्त्यन्तरत्वं सम्भवतीति भावः ।

**वा०र०**— **एकेनैवेति** । प्रवृत्तिहेतोः तत्र प्रयोगेति च वाक्ययोरन्यतरेणैवेत्यर्थः । द्वितीयेत्यस्याप्यन्यतरेत्यर्थः । अत एव वक्ष्यति **न कस्यापीति** । **न्यायविवरणानुसारेणेति** । रूढिर्योगो रूढियोगो महायोगो महारूढियोगो रूढोपचारो रूढलक्षणोपचारो लक्षणेति न्यायविवरणानुसारेणेत्यर्थः । **भगवदेकप्रसिद्धेति** । भगवदेकप्रसिद्धाश्च तदन्यत्रप्रसिद्धश्चेति नारायणादयश्च स्तम्भादयश्चेति द्वन्द्वद्वयम् । ततस्ते च ते नारायणादिस्तम्भादयश्चेति कर्मधारयः क्रमेण सम्बन्धः । तदनन्तरं ते च ते सकलशब्दाश्चेति कर्मधारयः । एवं सकलेति योज्यम् । एतेन महायोगस्य बहुविषयत्वेन प्राधान्यमुपपादितं भवति ।

**विट्ठल०**— ननु तत्र प्रयोगबाहुल्यमित्युत्तरत्रापि परममुख्यवृत्तिलक्षणमुच्यते । अत्राप्येतदेवोच्यते तत्कथमित्यतो महायोग इत्यादि न्यायविवरणोक्तेः परममुख्यवृत्तिरपि द्वेधा । **महायोगो महायोगरूढिश्चेति** ।

**॥ अथ परममुख्यवृत्तिद्वैविध्ये प्रथमप्रकारस्य महायोगस्य स्वरूपम् ॥**

१७ **सु०**— तत्र महायोगस्वरूपमाह **प्रवृत्तिहेतोरिति** ।

## प्रवृत्तिहेतोर्बाहुल्यं ज्ञेयं परममुख्यता ।

**निर्वचनलभ्योऽर्थः प्रवृत्तिहेतुः तस्य बाहुल्यं निरवधिकत्वम् ।**

**यद्यपि स्वातन्त्र्यं चात्र वक्तव्यम्, प्रकृतत्वात्, तथाऽप्यन्यतरमात्रेणेतरव्यावृत्तिसिद्धेः लक्षणपदानां च तन्मात्रप्रयोजनत्वान्नाभिहितम् ।**

**परममुख्यता इति ज्ञेयम् इति योजना ।**

**ननु बाहुल्यं प्रवृत्तिहेतोर्धर्मः । बहुलप्रवृत्तिहेतुमत्त्वं चाभिधेयस्य । परममुख्यता तु शब्दधर्मः । तत्कथं सामानाधिकरण्यम् । (मैवम्) नैष दोषः, उपचरितत्वात् । निरवधिकं**





**स्वतन्त्रं वा प्रवृत्तिहेतुमपेक्ष्य या शब्द(स्य प्र)वृत्तिः सा परममुख्यता महायोगलक्षणा ज्ञातव्येति तात्पर्यार्थः ।**

**परि०— महायोगस्वरूपमाहेति** । महायोगो द्विविधः । प्रवृत्तिनिमित्तं प्रति स्वातन्त्र्यरूपः तदाश्रयत्वरूपश्चेति । तत्र द्वितीयं महायोगस्वरूपमाहेत्यर्थः । आद्यानुक्तौ बीजमग्रे व्यक्तम् । **निर्वचनेति** । अवयवशक्तिलभ्योऽर्थः । तत्समुदायरूपो यौगिकशब्दप्रवृत्तिहेतुरित्यर्थः । तथा च न रूढिसाङ्कर्यमिति भावः । **अत्रेति** । महायोगस्वरूपोक्तिप्रस्तावे वक्तव्यम् । तस्यापि महायोगप्रभेदत्वादिति भावः । ननु 'तेषु तेषु पदार्थेष्वि'त्यादिना प्रवृत्तिहेत्वाश्रयत्वरूपयोग इव स्वातन्त्र्यरूपो योगो न प्रस्तुत इत्यत आह **प्रकृतत्वादिति** । 'इतो हि रूढिताऽन्येषामि'त्यनेन प्रकृतत्वादित्यर्थः । **अन्यतरेति** । निरवधिकतदाश्रयत्वरूपमहायोगेनैव विष्णुरेव शब्दार्थो नान्य इति समन्वयसूत्रस्थावधारणार्थकतुशब्दव्यावर्त्यभूतेतरस्य व्यवच्छेदसिद्धेरित्यर्थः । यद्वा ननु महायोगो हि प्रवृत्तिहेतुं प्रति स्वातन्त्र्ये सति निरवधिकतदाश्रयत्वम् । तथा च तादृशमहायोगस्वरूपमाहेत्यवतारितेऽस्मिंश्छ्लोके विशेषणांशोऽपि वाच्य एवेति भावेन शङ्कते **यद्यपीति** । **अन्यतरेति** । महायोगवृत्तिलक्षणशरीरप्रविष्टदलद्वयमध्ये तदाश्रयत्वदलमात्रेणेतरस्य वृत्त्यन्तरस्य व्यावृत्तिसिद्धेरित्यर्थः । ज्ञेयमित्यस्य नपुंसकताऽनुपपत्तिनिरासाय अध्याहारेण योजयति **इति ज्ञेयमितीति** । **शब्दस्य वृत्तिरिति** । अर्थप्रतिपादकत्वमित्यर्थः ।

**यादु०— प्रकृतत्वादिति** । 'इतो हि रूढिताऽन्येषामि'त्यादिनेति शेषः । **या शब्दस्य प्रवृत्तिरिति** । प्रतिपादकत्वमित्यर्थः ।

**वं०प०— प्रकृतत्वादिति** । 'स्वातन्त्र्यं तद्गतत्वं चे'त्यादावित्यर्थः । ननु प्रवृत्तिहेतुमपेक्ष्य शब्दस्य प्रवृत्तिः महायोग इति लक्षणस्य योगे अतिव्याप्तिपरिहाराय स्वातन्त्र्येणेति वक्तव्यमिति चेत् तत्राह **अन्यतरमात्रेणेति** । निरवधिकत्वस्वातन्त्र्ययोरन्यतरमात्रेणेत्यर्थः ।

**आनन्दः— अन्यतरमात्रेणेति** । स्वातन्त्र्यनिरवधिकत्वात् परममात्रेणेत्यर्थः । ज्ञेयमित्यस्य नपुंसकत्वात् परममुख्यतेत्यनेन अन्वयासम्भवादाह **परमेति** । नन्वत्र प्रवृत्तिनिमित्तबाहुल्यं वा लक्षणं बहुलप्रवृत्तिहेतुमत्वं वा । नाद्यः । तस्य प्रवृत्तिनिमित्तहेतुधर्मत्वेन शब्दनिष्ठपरममुख्यता सामानाधिकरण्यासम्भवात् । न द्वितीयः । तस्याभिधेयधर्मत्वेन सामानाधिकरण्यासम्भवादिति शङ्कते **नन्विति** । **उपचरितत्वादिति** । शब्दधर्मस्य परममुख्यताया अन्यधर्मसामानाधिकरण्यउपचारेणेत्यर्थः । वस्तुतः कथमित्यत आह **निरवधिकेति** ।





**श्रीनिधि०— उपचरितत्वादिति** । निमित्तनिमित्तिनोरभेदोपचारादिति भावः ।

**शे०वा०—** प्रवृत्तिहेतुपदेन न प्रवृत्तिहेतुमात्रपरिग्रहः सम्भवति । तथा सति घटत्वादिजातेरपि प्रवृत्तिहेतुपदेन तत्प्रसङ्गात् तस्या अपि घटादिशब्दानां घटादौ रूढिं प्रति निमित्तत्वेन प्रवृत्तिहेतुत्वात् । न च तस्या बाहुल्यं सम्भावितं किन्तु सम्भावितबाहुल्यकत्वान्निर्वचनलभ्यार्थस्यैव परिग्रह इत्याह **निर्वचनेति** । नन्वेवमिन्द्रादिशब्दानां पुरन्दरादौ महायोगरूपपरममुख्यत्वापत्तिः इन्द्रादिशब्दनिर्वचनलभ्यैश्वर्यादिः तत्र बाहुल्यादित्यतो नात्र तद्बाहुल्यमात्रं विवक्षितं येनातिप्रसङ्गः स्यात् किन्तु निरवधिकत्वमेव, तच्च नेन्द्रादाविति नोक्तदोष इत्याह **निरवधिकत्वमिति** । **स्वातन्त्र्यमिति** । अन्यानपेक्षत्वमित्यर्थः । **प्रकृतत्वादिति** । 'इतो हि रूढताऽन्येषामुपजीव्यत्वमत्र ही'त्यादिना भगवति शब्दवृत्तौ प्रवृत्तिनिमित्तनिरवधिकत्ववत् तत्स्वातन्त्र्यस्यापि निमित्तत्वेन प्रस्तुतत्वादित्यर्थः । **अन्यतरमात्रेणेति** । निरवधिकत्वस्वातन्त्र्ययोर्मध्ये येनकेनचिदित्यर्थः । यद्यप्यत्र निरवधिकत्वेनैवेतरव्यावृत्तिसिद्धेरित्येव वक्तव्यं तथापि स्वातन्त्र्यनिरवधिकत्वघटितवक्ष्यमाणलक्षणे अन्यतरमात्रेणैव इतरव्यावृत्तिसिद्धेः नोभयघटितमेकं लक्षणं, किन्तु स्वातन्त्र्यघटितमेकं, निरवधिकत्वघटितमपरमिति, लक्षणद्वयमेवातो न वैयर्थ्यमिति ज्ञापयितुमन्यतरमात्रेणेत्यत्रोक्तमिति ध्येयम् । **तन्मात्रेति** । इतरव्यावृत्तिमात्रेत्यर्थः । ननु परममुख्यता ज्ञेयेति वक्तव्यम्, तत्कथं परममुख्यता ज्ञेयमिति भाष्ये निर्देश इत्यतः इतिशब्दाध्याहारेण योजयति **परमेति** । **शब्दधर्म इति** । वृत्तित्वादिति भावः । **तत्कथमिति** । प्रवृत्तिनिमित्तधर्मस्य अभिधेयधर्मस्य वा शब्दधर्मेणाभेदाभावात् अभेदार्थकं, 'बाहुल्यं परममुख्यते'ति सामानाधिकरण्यं कथमित्यर्थः । **निरवधिकमित्यादि** । अत्रोक्तरीत्या लक्षणद्वयस्य विवक्षितत्वान्नान्यतरवैयर्थ्यम्, अत एव वाशब्दप्रयोग इति ध्येयम् । **या शब्दप्रवृत्तिरिति** । यच्छब्दस्य प्रतिपादकत्वमित्यर्थः ।

**वा०र०— तत्प्रसङ्गादिति** । परिग्रहप्रसङ्गादित्यर्थः । **तदसिद्धिमिति** । योगाविनाभूतत्वासिद्धिमित्यर्थः । तत्प्रसङ्गादित्यत्र तच्छब्देन परिग्रहग्रहः । **तस्या इति** । ज्योतिः (ज्योत्या) इत्यर्थः । **नात्र तद्बाहुल्यमात्रमिति** । मात्रशब्दस्यावधारणार्थत्वात् तद्बाहुल्यं यथाश्रुतमेवात्र न विवक्षितं किन्तु निरवधिकत्वमेवेति योजना । **इत्येवेति** । तस्य मुखत उपादानादिति भावः । **वक्ष्यमाणेति** । एतद्भाष्यतात्पर्यकथनरूपलक्षण इत्यर्थः । **इत्यत्रेति** । अत्रान्यतरमात्रेणेतीति योज्यम् । अभिधायकत्वमेव वृत्तिर्नान्येत्याह **यच्छब्दस्येति** । **परममुख्यता महायोगलक्षणा** इत्यादि मूले तट्टीकायां च महायोगरूढिलक्षणा परममुख्यवृत्तिः परममुख्यतेत्यादिप्रयोगाणामपि बहुत्वात् परममुख्यता परममुख्यवृत्तिश्चेत्येतयोः सङ्करेण व्यवहारात्परममुख्यतेत्यादि व्यवहारो युक्त इति ज्ञेयम् ।

**स०व्र०—** रूढेरपि घटत्वादिप्रवृत्तिनिमित्तसापेक्षत्वदर्शनादाह **निर्वचनलभ्योऽर्थ इति** । **प्रकृतत्वादिति** । 'इतो हि रूढताऽन्येषामि'त्यादिनेति शेषः ।

**विट्ठल०—** अत आद्यस्य लक्षणमत्र अन्यस्य तत्रेत्यत्र अतो न दोष इत्याशयेन प्रवृत्तीति मूलं पृथगवतारयति **तत्रेति** । ननु महायोग इतिवन्महारूढिरित्यपि पृथक् किं नोच्यत इत्यत आह **महारूढिस्त्विति** ।





**निर्वचनलभ्योऽर्थ इति**। तथा च रूढेष्वपि घटादिशब्दे सुघटत्वादीनां प्रवृत्तिहेतुत्वात् तत्रातिव्याप्तिरिति शङ्का निरस्ता। घटादीनां निर्वचनलभ्यार्थत्वाभावादिति भावः। **प्रकृतत्वादिति**। इतो हि रूढतान्येषामिति प्रकृतत्वादित्यर्थः। ननु प्रवृत्तिहेतोर्बाहुल्यं यस्येत्यलुगगर्भितबहुव्रीहिर्विवक्षित इत्यत आह **बहुलप्रवृत्तिनिमित्तेति**।

**॥ इति परममुख्यवृत्तिद्वैविध्ये प्रथमप्रकारस्य महायोगस्य स्वरूपम् ॥**

* * *

**॥ अथ परममुख्यवृत्तिद्वैविध्ये द्वितीयप्रकारस्य महायोगरूढेः स्वरूपम् ॥**

१८　**सु०**— महायोगरूढिस्वरूपं निरूपयन्नाह **तत्रेति**।

## अनु०— तत्र प्रयोगबाहुल्यं यदि तत्परता किमु ॥

यत्रार्थे प्रवृत्तिहेतोरनवधिकत्वं **तत्र** एव चेत् **प्रयोगबाहुल्यं** स्यात् तदा तस्या वृत्तेः परता परममुख्यता **किमु** वक्तव्येति। अत्रानवधिकप्रवृत्तिनिमित्तवति यत्रार्थे यस्य शब्दस्य प्रयोगबाहुल्यमस्ति तस्य तत्र महायोगरूढिलक्षणा परममुख्यवृत्तिरित्येतावदेव वक्तव्यम्, कैमुत्यकथनं तु शङ्कानिरासार्थम्।

तथा हि। किमत्र प्रयोगबाहुल्यमात्रं लक्षणमुत अनवधिकप्रवृत्तिनिमित्तविशेषितम्। नाद्यः, रूढिमात्रत्वात् परममुख्यत्वायोगात्। न द्वितीयः, अनवधिकप्रवृत्तिनिमित्तेनैव परममुख्यत्वे विशेष्यवैयर्थ्यात्। न च समाहारेण विधाऽन्तरं भवति, तथा सति असिद्धबाधितसमाहारोऽपरो हेत्त्वाभासः स्यादिति।

अत्र द्वितीय(पक्ष) एवाभ्युपगम्यते। न चोक्तदोषः, विशेषणमात्रेण परममुख्यत्वे, विशेष्यसद्भावेन (तु) सुतरां तत्सि(द्धिः)द्धेः। न ह्यस्माभिः परममुख्यतामात्रसिद्धये विशिष्टोपादानं क्रियते, किन्तु समाहाररूपविधाऽन्तरसिद्धये। न चातिप्रसङ्गः, वैषम्यात्। अनवधिकप्रवृत्तिनिमित्तापेक्षप्रयोगबाहुल्यं खलु विवक्षितम्, न समाहारमात्रम्। एतदर्थं च तत्र प्रवृत्तिहेतोर्बाहुल्ये सतीति योज्यम्। न चैवं महायोगस्य अत्र प्रवेशः, अतिबहुलप्रयोगाभावस्य तत्र विवक्षितत्वादिति।





**परि०— हेत्वाभासः स्यादितीति** । इतिशब्दस्य इतिशङ्कानिरासार्थमिति पूर्वेणान्वयः । **समाहाररूपविधान्तरसिद्धय इति** । अत एव अग्रे 'सनिरुक्तिकं', 'विद्वद्रूढिं च तत्रगामि'ति रूढेर्योगसाहित्यं मूल एव वक्ष्यत इति भावः । न चैवं 'अवयववृत्तिर्योगोऽखण्डवृत्ती रूढिरि'त्यादिना वक्ष्यमाणदिशा विरोधात् वृत्त्यन्तरं न समाहाररूपमिति शङ्क्यम् । योगरूढ्योः पङ्कजादिशब्दे यथाक्रमं पङ्कजनिकर्तृत्वपद्मत्वरूपभिन्नधर्मनियतयोरपि तद्द्वारा एकस्मिन्धर्मिणि सैन्धवशब्दवृत्त्योरिव समाहार-सम्भवादुभयकार्यदर्शनस्य समाहारेणोपपत्तौ वृत्त्यन्तरकल्पने गौरवाच्च । अत एव प्रागानन्दमयनयान्ते 'बहुलातिप्रयोगतः । रूढिमित्येव साध्यं स्यादि'त्यत्र रूढियोगादौ व्यभिचारं मूलोक्तहेतोराशङ्क्य तत्र साध्यस्यापि सत्त्वान्न व्यभिचार इत्युक्त्वा 'समाहारवृत्तयो हि ता' इत्युक्तम् । अन्यथा मूलोक्त-हेतोर्व्यभिचारोऽपरिहार्यः स्यात् । अत एव सन्न्यायरत्नावल्यां 'न चावयववृत्त्यखण्डवृत्त्योरेकस्य शब्दस्यैकस्मिन्नर्थे विरुद्धत्वाद्योगरूढिवृत्तिर्नास्तीति वाच्यम् । तस्याः पङ्कजादिषु शब्देषु दृष्टत्वात्' इत्युक्तमिति भावः । असिद्धबाधितसमाहारोऽप्यपरो हेत्वाभासः स्यादित्युक्तमित्याशङ्क्य निराह **न चातिप्रसङ्ग इति** । वैषम्यादित्युक्तमेवाह **अनवधिकेति** । अनवधिकप्रवृत्तिनिमित्तपदं अनवधिक-प्रवृत्तिनिमित्तहेतुशब्दवृत्तिपरम् । प्राक् तथैव तात्पर्यवर्णनात् । प्रयोगबाहुल्यपदमपि 'बहुलातिप्रयोगतः । रूढमित्येव साध्यं स्यादि'त्येतदविरोधाय प्रयोगबाहुल्यज्ञाप्याखण्डशब्दवृत्तिपरम् । एवं चावयववृत्ति-रूपयोगवृत्तिसापेक्षाखण्डवृत्तिरिह विवक्षिता । न तु अन्योन्यनिरपेक्षयोगरूढिसमाहारः विधान्तरत्वेन विवक्षित इत्यर्थः । यथा योगरूढेन पङ्कजपदेनोद्देश्यभूते पङ्कजनिकर्तृत्वविशिष्टपद्मबोधे जनयितव्ये तत्र योगवृत्तिनिरपेक्षरूढिमात्रमसमर्थमिति योगसापेक्षैव रूढिरुपेया । तथा योगरूढेन नारायणादिशब्देन गुणाश्रयत्वाद्यवयवार्थविशिष्टविष्णुत्वादिरूपार्थबोधे उद्देश्यभूते जनयितव्ये नारायणादिपदगतरूढिमात्र-मसमर्थमिति योगवृत्तिसापेक्षैव तत्र रूढिः समर्थेति सापेक्षयोर्योगरूढ्योः समाहार एव योगरूढि-रूपविधान्तरमित्यङ्गीक्रियते । असिद्धिबाधसमाहारे तु नैवम् । तत्र दुष्टत्वप्रतीतेरेवोद्देश्यत्वात् तस्याश्चान्योन्यनिरपेक्षेण अन्यतरेणापि सम्भवाद्वैषम्यमिति भावः ॥ **एतदर्थमिति** । योगसापेक्षरूढेः योगरूढिरूपविधान्तरत्वसिद्ध्यर्थमित्यर्थः । **तत्रेति** मूलपदानुवादः । **सत्यन्ता** व्याख्या । **तत्रेति** । महायोग इत्यर्थः ।

गु०दी०— **प्रयोगबाहुल्यं स्यात्** इत्यत्र सार्वजनीनप्रयोगः प्रयोगबाहुल्यम् । यथा नारायणादिशब्दा-नाम् । स्तम्भादिशब्दानां तु स्तम्भयति सर्वं जगदिति महायोगः विद्वद्रूढिश्च । सार्वजनीनत्वाभावान्न महारूढिरिति भावः ।





**यादु०— तत्रैव चेत्प्रयोगबाहुल्यमिति**। तत्रैव विषये चेद्रूढ्यनुमापकं प्रयोगबाहुल्यमित्यर्थः। एवमग्रेऽपि प्रयोगबाहुल्यमस्तीत्यादौ रूढ्यनुमापकमिति शेषः। न तु प्रयोगबाहुल्यमेव रूढिरित्यभिप्रायः। 'बहुलातिप्रयोगतो रूढमित्येव साध्यं स्यादि'त्युक्तविरोधादिति ज्ञातव्यम्। 'प्रवृत्तिनिमित्तमिति' इत्यादौ प्रवृत्तिनिमित्तपदेन निर्वचनलभ्योऽवयवार्थ एव विवक्षित इति ज्ञेयम्। **शङ्कानिरासार्थमिति**। महायोगरूढिरूपा परममुख्यवृत्तिरेव नास्तीति शङ्कानिरासार्थमित्यर्थः। **प्रयोगमात्रबाहुल्यं लक्षणमिति**। अनुमापकमपि असाधारणत्वाल्लक्षणमित्यभिप्रेत्येदमुक्तमिति ध्येयम्। **रूढिमात्रत्वादिति**। लौकिकरूढिसहचारितत्वादित्यर्थः। **परममुख्यत्वायोगादिति**। परममुख्यवृत्तिलक्षणत्वायोगादित्यर्थः। ननु महायोगरूढिरूपा परममुख्यवृत्तिरत्र लक्ष्यतयाऽभिप्रेता न परममुख्यवृत्तिमात्रं येन विशेष्यवैयर्थ्यं स्यात्। तत्र च महायोगेऽतिव्याप्तिवारणाय विशेष्यं सार्थकमेवेत्याशयेनाशङ्क्य निराकरोति **न च समाहारेणेति**। ततश्च परममुख्यवृत्तिर्महायोगरूपैव नान्यास्तीति 'तथा ही'त्यादिशङ्काग्रन्थाभिप्राय इति ज्ञातव्यम्। **सुतरां तत्सिद्धेरिति**। तथा च कैमुत्यकथनेन परममुख्यवृत्तौ तारतम्यलाभान्महायोगापेक्षयाऽधिका महायोगरूढिरूपाऽन्या परममुख्यवृत्तिरेवात्र लक्ष्यतयाऽभिप्रेता च। अतो न विशेष्यवैयर्थ्यरूपोक्तदोष इति सूचितमिति भावः। एतदेवोपपादयति **न ह्यस्माभिरित्यादिना**। **परममुख्यतामात्रसिद्धय इति**। परममुख्यशब्दवाच्यतामात्रसिद्धय इत्यर्थः। लक्षणोक्तेर्व्यवहारार्थत्वात्। परममुख्यवृत्तिमात्रस्येदं न लक्षणमिति यावत्। **न चातिप्रसङ्ग इति**। तथा सति असिद्धबाधितेत्यादिनोक्त इत्यर्थः। **अनवधिकप्रवृत्तिनिमित्तापेक्षेति**। अन्यथा नारायणादिशब्देभ्य उद्देश्यस्य गुणपूर्णो विष्णुरित्यादिबोधस्यासिद्धिरिति भावः। **न समाहारमात्रमिति**। असिद्धिबाधसमाहारवत् कार्यजनने परस्परानपेक्षसमाहारो नेत्यर्थः। असिद्धिबाधसमाहारो हि न हेत्वाभासान्तरम्। उद्देश्याया दुष्टत्वबुद्धेरन्यतरमात्रेणैव जायमानत्वात्। न ह्येवं प्रकृत इति भावः। **अत्र प्रवेश इति**। तथा च न सा पृथग्वृत्तितया वक्तव्येति भावः।

**वं०प०—** ननु प्रयोगबाहुल्यस्य प्रवृत्तिनिमित्तसापेक्षताज्ञापकं किमित्यत आह **एतदर्थमिति**। प्रयोगबाहुल्यस्यानवधिकप्रवृत्तिनिमित्तसापेक्षताप्राप्त्यर्थमित्यर्थः। **बाहुल्ये सति** प्रवृत्तिहेतुबाहुल्यापेक्षासहितप्रयोगबाहुल्ये सतीत्यर्थः। **न चैवमिति**। अनवधिकप्रवृत्तिनिमित्तापेक्षप्रयोगबाहुल्यस्य महायोगरूढिलक्षणत्वे निरवधिकप्रवृत्तिनिमित्तसापेक्षवृत्तिरूपमहायोगस्यात्र महायोगरूढिलक्षणे प्रवेशः प्राप्तः। महायोगलक्षणस्य महायोगरूढ्यामतिव्याप्तिः न स्यादित्यर्थः। कुतो नेत्यत आह **अतीति**। **तत्र** महायोगलक्षणे। तथा च प्रयोगबाहुल्याभावे सति निरवधिकप्रवृत्तिनिमित्तसापेक्षवृत्तिः महायोग इति विवक्षितत्वान्नातिव्याप्तिरिति भावः।

**आनन्दः— अनवधिकेति**। अत्र च नासिद्धवादितयोरन्योन्यसापेक्षत्वमिति भावः। **एतदर्थं चेति**। प्रयोगबाहुल्यस्य अनवधिकप्रवृत्तिं निमित्तापेक्षत्वसिद्ध्यर्थमित्यर्थः। **न चैवमिति**। महायोगरूढ्या महायोगस्य गतार्थत्वं स्यादिति भावः। तत्र महायोगलक्षणे अतिबहुलप्रयोगाभावे सतीति महायोगलक्षणे विशेषस्य प्रवेशान्न गतार्थत्वमिति भावः।





न च अवयवार्थप्रत्यय एव असिद्ध इति वाच्यम् । अनुभवसिद्धप्रत्ययापलापस्यायुक्तत्वात् । अनुभवे विप्रतिपद्यमानं प्रत्याह **सप्तम्यामिति** । ननु गमेर्ड इत्यादिवत्सप्तम्यां जनेर्ड इत्याद्यनुशासनमपि शब्दसाधुत्वव्याख्यानपरमस्त्वित्यरुचेराह **अनेनैव न्यायेनेति** । औपगवादिशब्देष्वप्यवयवार्थप्रतीत्यपलापस्य तस्यापत्यमित्यादिव्याकरणस्य शब्दसाधुत्वमात्रपरत्वस्य च वक्तुं शक्यत्वादित्यर्थः । **भेकादिष्विति** । पद्म इव तत्राप्यवयवशक्तिरूपयोगस्य सत्त्वादिति भावः । अस्य च भेकादिष्ववयवशक्तिप्रतिबन्धार्थं रूढिरङ्गीकार्येति नाभिप्रायः । येन प्रतिबन्धकत्वे शक्तित्वं पारिभाषिकमिति शङ्क्येत । किन्तु पद्मत्वबोधार्थमवश्यं कल्पनीयया रूढ्या भेकादिष्वतिप्रसङ्गस्यापि परिहार इत्येवेति नोक्तदोष इति ध्येयम् ।

ननु पृथिव्याद्यनेकार्थेषु रूढत्वेऽपि गवादिशब्दानां सास्नादिमद्व्यक्तौ व्यवहारप्राचुर्यनिबन्धनप्रसिद्ध्योपपदाद्यभावेऽपि तत्र प्रयोगप्रत्यययोः सत्त्वेऽपीतरेष्वर्थेषु व्यवहारस्याप्रचुरत्वात् तन्निबन्धनाप्रसिद्ध्योपपदाद्यभावे प्रयोगप्रत्ययाभाववत् पङ्कजादिशब्दानामपि पद्मे भेकादौ च अवयवशक्तिसाम्येऽपि पद्मे व्यवहारप्राचुर्यात् तन्निबन्धनप्रसिद्ध्या तत्र प्रयोगप्रत्यययोः सत्त्वेऽपि भेकादौ व्यवहारप्राचुर्याभावात् तन्निबन्धनाप्रसिद्ध्या प्रयोगाभावोपपत्तेः न भेकादाववयवशक्तिसद्भावे प्रयोगापादनं तदभावेन शक्त्यभावावधारणं वा युज्यते । अन्यथा गवादिशब्दानामपि दशस्वर्थेषु रूढत्वे सर्वत्र प्रयोगप्रत्ययापादनस्य तदभावेन रूढ्यभावावधारणस्य च प्रसङ्गादिति विवरणमतमाशङ्कते **गवादिशब्दानामिति** । **न चैवमिति** । पङ्कजादिशब्दानामनेकेष्वर्थेषु शक्तिनिश्चायकशास्त्राभावादिति भावः ।

**वा०र०— (?) अयं हीति** । पङ्कजशब्दो हीत्यर्थः । उपलक्षणाशयेन एकमात्रोपादानम् । अत एव जनिकर्तृत्वमित्यादिकमप्यन्योपलक्षणाशयेन इति ज्ञेयम् । **अवयववृत्तिरितीति** प्रतीकोपादानपाठः । शक्तिर्हीति पाठो लेखकप्रयुक्तः । **(?) तत्र योगरूढेरिति** । पङ्कजनिकर्तृत्वप्रकारकबोधजनकत्वान्यथानुपपत्त्या योगस्य पद्मत्वबोधजनकत्वान्यथानुपपत्त्या च रूढेरिति विवेकः । यत्तु सुधायां न हि योगरूढ्योः समाहार इत्यादियोगरूढ्योर्यथाक्रममित्यादि च तर्कताण्डवमनुसृत्य न हीत्यादि पूर्वग्रन्थाशयवर्णनपूर्वकं तदविरोधं सूचयन् पूर्वग्रन्थाशयसूचकत्वेन पङ्कजादीत्युत्तरवाक्यमवतारयति **(?) इदं चेति** । कुतः समाहारासम्भवाभिप्रायेणेत्यत आह **(?) योगरूढ्योरिति** । **सद्रव्येति** । (पृ. ७७)

अत एवेत्युक्तमेव दर्शयति **न हीत्यादिं ग्रन्थस्येति** । **अङ्गीकारेण वेति** । ततश्चाङ्गीकारवादोऽयमित्युक्तं भवति । **अभिप्रायकत्वाभावात्** इत्यनन्तरं इति सूचनादिति शेषः । साधुत्वान्वाख्यानपरमिति पाठः । व्याख्यानमिति पाठेऽप्यन्वाख्यानमित्यर्थः । **इत्यादीति** । आदिपदेन तत्र भावः । तेन रक्तं रागादित्यस्य परिग्रहः । अस्य च भेकादिष्ववयवेति तर्कताण्डवानुसारेणाह **अस्य चेति** । **पृथिव्याद्यनेकार्थेष्विति** । पृथिवीधेनुदिगृष्टीदीधितिस्वर्गवज्रवाक्बाणवारिरूपेष्वित्यर्थः । गवादिशब्दानामित्यस्य पूर्वेणोत्तरेण च सम्बन्धः । आदिपदं गोशब्दतुल्यशब्दान्तरोपलक्षणसूचनार्थमिति न दोषः । **उपपदादीति** । प्रकरणादिकमादिपदग्राह्यम् ।

**प्रयोगप्रत्यययोरिति** । प्रयोजकस्य प्रयोगः, प्रत्ययस्तु प्रयोज्यस्येति विवेकः । तत्रोपपदशून्यः प्रयोग इति प्रयोगे विवक्षाप्रत्ययस्तूपपदाभावेऽपि भवतीति यथाश्रुत एवार्थ इति ज्ञेयम् । एतच्छङ्काविवरणं कार्यमस्ति । **दशास्विति** । विवरणे तु धेनुव्यतिरेकेण यथा न वस्त्वर्थेषु शक्त्यविशेषेऽपि गोशब्दात्सास्नादिमदाकृतौ प्रयोग-बाहुल्यादेव प्रथमप्रतिपत्तिरित्युक्तत्वान्न विसंवादः शङ्कनीयः । **विवरणेति** । तृतीयवर्णके जिज्ञासाशब्दविचारा-वसरे उच्यते । नायं जिज्ञासाशब्दः परित्यक्तावयवार्थः । केवलमीमांसापर्यायः अयुज्यमानो दृश्यत इत्यादि पञ्च-पादिकाविवरणरूपप्रयोगबाहुल्यादपि सामर्थ्याविशेषे प्रथमप्रतिपत्तिदर्शनात् यथानवस्थित्यादिग्रन्थेनोक्तमित्यर्थः ।

**स०व्र०— भेकादिष्वपि प्रयोगप्रसङ्गादिति** । अत्र भेकादिषु अवयवशक्तिप्रतिबन्धार्थं रूढिरङ्गी-कार्येति नाभिप्रायः । येन प्रतिबन्धकत्वे शक्तित्वं पारिभाषिकं स्यादिति शङ्क्येत, किन्तु रूढ्या पद्मत्वमपि बोध्यमेवेत्यभिप्राय इति बोध्यम् । **गवादिशब्दानामिति** । अत्र व्यवहारप्राचुर्याप्राचुर्यकृते इत्यस्य प्रसिद्ध्य-प्रसिद्धी इत्यनेनान्वयः । **न चैवमेषां शब्दानामिति** । यद्यपि पङ्कजादिशब्दानां भेकादिष्ववयववृत्तिरूपयोग-लक्षणा शक्तिरवधृतैव; तथापि पङ्कजपदस्य यादृशी पद्मे शक्तिः न तादृशी भेकादौ प्रमाणसिद्धा । तथात्वे गोशब्दस्यार्थान्तर इव कदाचित् केवलस्य पङ्कजपदस्य पद्म इव भेकेऽपि प्रयोगप्रसङ्गात् । अतः पङ्कजपदस्य पद्मभेकयोः न शक्तिसाम्यं प्रामाणिकमिति भावः ।

**विट्ठल०—** अन्यथानुपपत्त्या च योगरूढिरङ्गीकार्येत्याह **किञ्चेति** । **सप्तम्यामिति** । सप्तम्यन्तपङ्कशब्दे उपपदे जनी प्रादुर्भाव इत्यतः कर्तरि डप्रत्यय इत्यवयवार्थस्य पाणिनिना व्युत्पादनादित्यर्थः । **अनेनैव न्यायेनेति** । पङ्कजादिशब्दानां केवलरूढत्वे यो न्यायः पूर्वपक्ष्यभिप्रेतः अवयवार्थप्रतीत्यपलापः अनुशासनं साधुत्वमात्रार्थमित्येवंरूपः तेनैव न्यायेन कुम्भकारोपगवादिशब्दानामपि रूढतापत्त्या केवलयौगिकाभावप्रसङ्ग इति भावः । **भेकादिष्विति** । पङ्कजादिशब्दानां भेकादिष्वपि प्रसिद्धिप्रसङ्गादित्यर्थः । ननु गवादिशब्दानां शक्तिसाम्येऽपि पशुविशेष एव प्रसिद्धिः । न तु दिङ्नेत्रादौ कुतः व्यवहारप्राचुर्यतदभावाभ्यां तथा पङ्कजादि-शब्दानां तामरसादौ भेकादौ च शक्तिसाम्येऽपि प्राचुर्यतदभावनिमित्तकैव प्रसिद्ध्यप्रसिद्धीति शङ्कते **गवादीति** । **न चैवमेषां शब्दानामिति** । यद्यपि पङ्कजादिशब्दानां भेकादिष्ववयववृत्तिरूपयोगलक्षणा शक्तिरवधृतैव तथापि पङ्कजशब्दस्य यादृशी पद्मे शक्तिः न तादृशी भेकादौ प्रमाणसिद्धा । तथात्वे गोशब्दस्यार्थान्तर इव कदाचित् केवलस्य पङ्कजपदस्य पद्म इव भेकेऽपि प्रयोगः स्यात् । न च भेके कुत्रचिदपि प्रयोगं पश्यामः । तस्मात्पङ्कज-पदस्य पद्मभेकयोः न शक्तिसाम्यमिति भावः ।

**चषकः— प्रतीतिविरोधादिति** । परीक्षकैः प्रतीतेरनादर्तुमशक्यत्वादिति भावः । **विरोधादिति** । धातुप्रत्ययोपपदानामर्थभेदस्य तेन सिद्धत्वादिति भावः ।

**॥ इति योगरूढ्यभावनिरासे पङ्कजादिशब्दानां एकत्रवृत्त्यभावः ॥**

* * *





**॥ अथ च योगरूढ्यभावनिरासे व्याकरणशास्त्रकारेणापि एतद्वृत्त्यङ्गीकारः ॥**

२५ **सु०— किञ्च शमिधातोः संज्ञायां स्तम्बकर्णयो रमिजपोर्हस्तिसूचकयोरित्यादिना अवयवार्थव्यतिरेकेण उपाधीनपि वदता शास्त्रकारेणाङ्गीकृतै(वे)षा वृत्तिरित्यलम् ।**

**परि०**— ननु सप्तम्यां जनेर्ड इत्यनेनैवावधार्यत इत्यत आह **किञ्च शमिधातोरिति** । शमित्येतस्मिन्नव्यये उपपदे धातोरच्प्रत्ययो भवति संज्ञाया विषये । शं करोतीति शङ्करः । शम्भवः । इत्यादिरूपसिद्ध्यर्थमज्विधिपरे सुखकरत्वादिरूपावयवार्थातिरेकेण संज्ञायामिति संज्ञात्वरूपमुपाधिं तथा 'स्तम्बकर्णयो रमि जपोरि'त्यत्र स्तम्बपदे उपपदे रमतेरच्प्रत्ययो भवति हस्तिनि वाच्ये सति । कर्णपदे चोपपदे जपेर्धातोरच् भवति सूचके अभिधेये सति । स्तम्बे रमो हस्ती । कर्णे जपः सूचकः । तत्पुरुषे कृतिबहुलमिति सप्तम्या अलुक् । अत्र सूत्रे स्तम्बशब्दितसस्यवि(सम्यग्वि)शेषरमणादिरूपावयवार्था-तिरेकेण हस्तित्वसूचकत्वरूपोपाधीन् वदता व्याकरणशास्त्रकारेणैषां योगरूढिरूपा वृत्तिरङ्गीकृतैवेत्यर्थः । यद्यपि 'स्तम्बकर्णयो रमिजपोरि'त्येव सूत्रम् । तथैव तृतीयस्य द्वितीयपादे सूत्रदर्शनात् । तथापि हस्तिसूचकयोरिति वक्तव्यमिति वार्तिककृता उक्तत्वात् तदपि सहोक्तमित्यदोषः । **इत्यलमिति** । प्रपञ्चस्तु तर्कताण्डवे योगरूढिसमर्थनवादे ज्ञेयः ।

**गु०दी०— शमिधातोः संज्ञायाम्** इत्यत्र शमि उपपदे धातोः संज्ञायां विषये तदुचितप्रत्यये च कृते 'शमी शमयते पापमि'ति वचनात् पापपरिहारहेतौ शमीवृक्षे, कोपपरिहारात्मके शान्तौ, हिंसके यमे, च शमी शमः शमन इत्याद्याः योगरूढाः शब्दाः । रूढ्यनङ्गीकारे गङ्गायाः दमस्य व्याघ्रादेरपि तच्छब्दवाच्यता स्यादित्यर्थः । 'स्तम्बकर्णयोरमिजपोरि'ति सूत्रस्य स्तम्बकर्णयोरित्येतयोस्सुबन्तयोरुपपदयोरमिजपोर्धात्वोरच्प्रत्ययो भवति हस्तिसूचकयोरर्थयोरित्यर्थः । एवं च स्तम्बे रमत इति कर्णे जपत इति योगस्याप्याश्रितत्वात्, संज्ञायामिति रूढेश्चाश्रितत्वाद्योगरूढिः, अन्यथा तृणभक्षकमहिषादेः शिष्यकर्णे मन्त्रं जपतश्च तौ स्यातामिति भावः ।

**यादु०— शमि धातोरिति** । शमि उपपदे धातुमात्रात्संज्ञायां विषये अच्प्रत्ययो भवतीति सूत्रार्थः । **शङ्कर** इत्याद्युदाहरणम् । **स्तम्बकर्णयोरित्यादि** । अत्र 'स्तम्बकर्णयो रमिजपोरि'ति सूत्रम् । हस्तिसूचकयोरिति वार्तिकम् । तथा चायमर्थः । स्तम्बकर्णयोः सुबन्तयोरुपपदयोर्यथासङ्ख्यं रमिजपोर्धात्वोरच्प्रत्ययो भवति हस्ति-सूचकयोर्वाच्ययोरिति । स्तम्बे रमत इति स्तम्बेरमो हस्ती । कर्णे जपतीति कर्णेजपः सूचक इत्युदाहरणम् । इत्यादिनेत्यादिपदेन 'कृञो हेतुताच्छील्यानुलोम्येषु कर्मणि भृतौ स्तम्बशकृतोरिन् व्रीहिवत्सयोरि'त्यादीनां ग्रहणम् । **अवयवार्थव्यतिरेकेणेति** । अत्रोपाधिशब्दो निमित्तपरः । शङ्कर इत्यत्र सुखकर्तृत्वरूपावयवार्थव्यतिरिक्ता संज्ञाऽपि निमित्तत्वेनोक्ता । एवं स्तम्बेरम इत्यादावपि स्तम्बरमणकर्तृत्वादिव्यतिरिक्तं हस्त्यादिरूपार्थविशेषवाचकत्वमपि

निमित्तमुक्तमित्यवधेयम् । नन्वेवं गवादिपदेष्वपि योगरूढिप्रसङ्गः । तत्रापि गमेर्ड इत्यनुशासनसद्भावादिति चेन्न । तत्र गमनकर्तृत्वरूपस्यावयवार्थस्य कदाऽप्यभानेनानुशासनस्य कथञ्चिद्व्युत्पत्तिमात्रार्थत्वकल्पनात् । आवापोद्वापक्रमेण डप्रत्ययशक्त्यवधारकन्यायस्य डप्रत्ययेऽसम्भवाच्च । नन्वथाऽपि न पङ्कजपदे रूढिः सम्भवति । सा हि पद्मत्वभानार्थं वा कुमुदाद्यभानार्थं वा । नाद्यः । अदृष्टादिनोद्बुद्धसंस्कारादेव स्मृतं पद्मत्वमादाय पङ्कजप्रातिपदिकजनिधातुडप्रत्ययैरवयवैः पङ्कजनिकर्तृ पद्ममित्यनुभवोपपत्तेः । न चैवं गामानयेत्यत्र गोत्वस्यापि संस्कारादेवोपस्थितिसम्भवे गोपदस्यापि गवि शक्तिः न स्यादिति वाच्यम् । तथात्वे गोशब्दवैयर्थ्यप्रसङ्गात् । पङ्कजपदं तु पङ्कजनिकर्तृत्वभानार्थमित्युक्तम् । नापि द्वितीयः । पङ्कजं कुमुदमानयेत्यादौ कुमुदादेरपि भानदर्शनात् । तस्मात्पङ्कजपदं पद्मे यौगिकमेवेति । मैवम् । पङ्कजपदस्य पद्मत्वविशिष्टे शक्त्यभावे कोशकाराणां पद्मपदपर्यायतया पाठानुपपत्तेः । पङ्कजं पद्ममिति कदाचित्सहप्रयोगप्रसङ्गाच्च । किञ्चास्या रूढत्वे पद्मत्वे विशिष्टे समुदायव्युत्पत्त्यपेक्षा न स्यात् । अस्ति च सा । अवयवव्युत्पन्नस्यापि समुदायाव्युत्पन्नस्य पद्मत्वाप्रतीतेः । अवयवाव्युत्पन्नस्यापि वृद्धव्यवहारादिना समुदायव्युत्पन्नस्य तत्प्रतीतेश्च । अन्यथा गोशब्देऽपि गवि शक्तिः न स्यात् । न च तथात्वे तद्वैयर्थ्यं स्यादित्युक्तमिति वाच्यम् । पङ्कजपदाप्रयोगकाले पद्मत्वस्येव गोपदाप्रयोगकालेऽदृष्टादेः संस्कारानुद्बोधकत्वकल्पनेन गोपदस्य सार्थक्यसम्भवात् । तस्मात्पङ्कजपदं पद्मत्वविशिष्टे शक्तमेवाङ्गीकार्यमिति । अस्तु वा कुमुदाद्यभानार्थमिति द्वितीयः । न च तत्रोक्तदोषः । केवलपङ्कजपदेन कदापि कुमुदादिप्रतीतेरभावात् । न च तत्राप्यशक्यमेव पद्मत्वं प्रयोगोपाधिः । घटादिपदे घटत्वादेरपि तथात्वप्रसङ्गात् । विस्तरस्तु तर्कताण्डवे द्रष्टव्यः । तदेतदभिप्रेत्याह **इत्यलमिति** ।

**वं०प०— उपाधीन्** निमित्तानि ।

**आनन्दः— उपाधीति** । संज्ञाहस्तित्वसूचकत्वरूपानुपाधिनीत्यर्थः । **एषेति** । योगरूढिरित्यर्थः (संमति श्लोकस्यायमर्थः ?) ।

**श्रीनिधि०— शमिधातोः संज्ञायामिति** । शमि उपसर्गे उपपदे कृधातो अच्प्रत्ययो भवति । शङ्कर इत्याद्युदाहरणम् । स्तम्बकर्णयोरमिजपाः । रमिजपा च उत्तरपदे स्तम्बकर्णयोः । सप्तम्या अलुक् भवति । स्तम्बेरमः । हस्ती कर्णेजपः ।

**शे०वा०—** वैयाकरणरीत्याऽपि योगरूढिं साधयति **किञ्चेति** । शम्युपपदे धातुमात्रात्संज्ञायां विषयेऽच्प्रत्ययो भवतीत्युदाहृतसूत्रार्थः । शङ्कर इत्यत्र सुखकर्तृत्वरूपावयवार्थव्यतिरेकेण संज्ञापि निमित्तत्वेन आश्रिता । स्तम्बकर्णयोरुपपदयो रमिजपोरच्प्रत्ययो भवतीति सूत्रार्थः । स्तम्बेरमः कर्णेजप इत्यत्रापि हस्तिसूचकयोरिति वक्तव्यमित्युपाधिराश्रित इत्यर्थः । आदिपदेन कर्मणि भृतौ स्तम्बशकृतोरिन्व्रीहिवत्सयोरिति वक्तव्यमित्यादेः परिग्रहः । ननु पङ्कजपदे रूढिः पद्मत्वभानार्थं कुमुदाद्यभानार्थं वा । आद्येऽपि भानं स्मृतिरनु-





भूतिर्वा । नाद्यः । अदृष्टादिनोद्बुद्धसंस्कारादेव तत्स्मृतेः । नान्त्यः । उक्तरीत्या स्मृतं पद्मत्वमादाय व्यक्तिवचनन्यायेन पङ्कप्रातिपदिकजनिधातुडप्रत्ययरूपैरवयवैः पङ्कजनिकर्तृ पद्ममित्यनुभवसम्भवात् । न चैवं गामानयेत्यत्र गोत्वस्यापि संस्कारादेवोपस्थितिसम्भवे गोपदस्यापि गवि शक्तिः न स्यादिति वाच्यम् । तथात्वे गोशब्दवैयर्थ्यप्रसङ्गात् । न चैवं पङ्कजपदस्य वैयर्थ्यप्रसङ्गः । पङ्कजनिकर्तृत्वभानार्थतया तस्यार्थवत्त्वात् । नान्त्यः । पङ्कजं कुमुदमानयेत्यादौ कुमुदादेरपि भानदर्शनात् । तस्मात्पङ्कजपदं पद्मे यौगिकमेवेति प्राभाकरमतमेव सम्यगित्यत आह **अलमिति** । अयमर्थः । पङ्कजपदस्य पद्मत्वविशिष्टे शक्त्यभावे किं पङ्कजपदशक्यमिति प्रश्ने पद्ममित्यभियुक्तानां प्रतिवचनं कोशकाराणां पद्मपर्यायतया पाठश्च न स्यात् । पङ्कजं पद्ममिति कदाचित् सहप्रयोगप्रसङ्गाच्च । किं चास्य पाचकपदवदरूढत्वे पद्मत्वविशिष्टे समुदायव्युत्पत्त्यपेक्षा न स्यात् । अस्ति च सा । अवयवव्युत्पन्नस्यापि समुदायाव्युत्पन्नस्य पद्मत्वाप्रतीतेः । अवयवाव्युत्पन्नस्यापि वृद्धव्यवहारादिना समुदायव्युत्पन्नस्य तत्प्रतीतेश्च । अन्यथा गामानयेत्यत्र गोशब्दस्यापि गवि शक्तिः न स्यात् । न चैवं तद्वैयर्थ्यं स्यादिति वाच्यम् । मया तद्वैयर्थ्यस्यैव आपादनात् । अस्तु वा कुमुदाद्यभानार्थमित्यन्त्यः । न चोक्तदोषः । केवलपङ्कजपदेन कदापि कुमुदादिप्रतीतेरभावादिति सङ्क्षेपः । विस्तरस्तु तर्कताण्डवे द्रष्टव्यः ।

**वा०र०**— काशिकानुसारेण सूत्रं व्याचष्टे **शम्युपपद इति** । अपवादविषयेऽपि विधानमेतद्भवतीत्याशयेन **धातुमात्रादिति** । 'हरतेरनुद्यमनेऽच्' इत्यतोऽच्ग्रहणमनुवर्तत इत्यच्प्रत्यय इत्युक्तम् । **उदाहृतसूत्रेति** । उदाहृताद्यसूत्रेत्यर्थः । शमीत्येतत्सूत्रीयोदाहरणे शङ्करः शम्भवः शंवद इत्यादावयवार्थव्यतिरेकेण उपाधिराश्रित इत्यतस्तं दर्शयति **शङ्कर इत्यत्रेति** । **उपलक्षणं चैतत्** । उदाहरणान्तरस्य तत्रापि सुखप्राप्तिसुखकरवचनकर्तृत्वयोरवयवार्थतया तदतिरेकेण संज्ञापि निमित्तमाश्रितेति योज्यम् । यद्यपि शमीति सूत्रं स्तम्बकर्णयोरित्यतः परिमितिपूर्वस्तम्बेत्येव प्रथमत उदाहर्तव्यं तथापि संज्ञारूपोपाधेः सूत्रोपात्तत्वं शमीत्यत्रास्ति । स्तम्बेत्यत्र तूपाधिर्वार्तिकोक्त इति विशेष इति सूचयितुं सूत्रीयज्ञापकोपेतस्य प्रथमत उदाहरणमिति भवति । **स्तम्बकर्णयोरिति** । स्तम्बकर्ण इत्येतयोरित्यर्थः । रमिजपोः रमतेः जपेश्चेत्यर्थः । **सूत्रार्थ इति** । स्तम्बकर्णयोरमिजपोरित्येतद्द्वितीयसूत्रार्थ इत्यर्थः । कथमेतदुदाहरणेऽवयवार्थातिरिक्तोपाध्याश्रयणमित्यतस्तदुपपादयति **स्तम्बेरम इत्यादि** । सूत्रकारीयोपाध्युक्त्यभावेऽपि वार्तिककारीया तदुक्तिः अस्तीत्यनेनोक्तं भवति । स्तम्बेरम इति स्तम्बे रमत इत्येवान्यत्र भवतीति हस्तिन्यभिधेयेऽपि तथा प्राप्तौ विधीयते । तथा कर्णे जपिता उपांशुशब्दार्पिता मशक इत्यत्रेव पिशुनेऽभिधेयेऽपि तथाप्राप्तावच् विधीयते । स्तम्बे रमत इति कर्णे जपतीति च स्तम्बेरमः कर्णेजपः, तत्पुरुषे कृतिबहुलमिति सप्तम्या अलुक् । हलदन्तात्सप्तम्यसंज्ञायामित्यनेनादन्तत्वाद्वा अलुक् । तथा च स्तम्बेरमणकर्तृत्वकर्णेजपकर्तृत्वरूपावयवार्थातिरेकेण हस्तिसूचकयोरभिधेययोर्निमित्तत्वमाश्रितमित्याशयः।

**कर्मणीति** । कर्मणीत्यस्यानुवृत्तावप्यत्र पुनः कर्मग्रहणं कर्मवाचककर्मेतिशब्दस्वरूपस्य ग्रहणार्थम् । तथा च कर्मवाचके कर्मशब्द उपपदे करोतेः षः प्रत्ययो भवति भृतौ गम्यायामित्येतत्सूत्रार्थः । भृतिर्नाम वेतनम् ।





तत्कृतक्रियानिष्क्रियार्थं देवभक्तादि द्रव्यमित्यर्थः । भृतकार्थककर्मकर इत्युदाहरणम् । अत्र हि कर्मकर्तृत्व-रूपावयवार्थातिरेकेण वेतनग्राहित्वं रूपं निमित्तमाश्रितम् । उक्तं निमित्तशून्ये कर्मकार इत्यत्राण एव सिद्धे-रित्याशयः । स्तम्बेति स्तम्बशकृत् इत्येतयोः कर्मणो रूपपदयोः करोतेरिन्प्रत्ययो भवतीति सूत्रार्थः । नकार इत्स्वरार्थः । अत्रापि स्तम्बकारः शब्दकार इत्येव व्रीहिवत्सयोरभिधेययोरपीति रूपप्रसङ्गे इन् विधीयते स्तम्ब-करिर्व्रीहिः शकृत्करिर्वत्स इति रूपसिद्ध्यर्थमित्येवं सङ्कोचेन व्रीहिवत्सयोरिति वक्तव्यमिति वार्तिककृतोक्तम् । तथा च स्तम्बशकृत् कर्तृत्वरूपावयवार्थातिरेकेण व्रीहिवत्सरूपाभिधेयवत्वस्यापि निमित्तत्वमाश्रितमिति योज्यम् । इत्यादेरित्यादिपदेनार्यो ब्राह्मण इत्येतत्प्रत्युदाहरणके अर्यः स्वामी । आर्यो वैश्य इत्युदाहरणके 'अर्यः स्वामि-वैश्ययोरि'ति सूत्रे गमनकर्मत्वरूपावयवार्थातिरिक्तस्वामिवैश्ययोरुपाधिकत्वं कथितम् । पाय्यसान्नाय्येति सूत्रे मानहविरादिष्वभिधेयेषु माङादिधातुभ्यो यदादिप्रत्यये मकारे यत्वादौ च वाय्यादिशब्दा व्युत्पादिताः । अकर्तरि च कारके संज्ञायामित्यादौ च प्रास इत्यादि रूपसिद्ध्यर्थं संज्ञां निमित्तीकृत्यैव घञादयो विहिता एवमनेकत्रावय-वार्थातिरिक्तनिमित्ताश्रयणेन कृतां विधानम् । एवं 'ब्राह्मणकोष्णिके संज्ञायामि'त्यत्र यत्रायुधजीविनो ब्राह्मणास्स देशो ब्राह्मणकनामा च तादृशसंज्ञाविषये ब्राह्मणशब्दात् कन्प्रत्ययो निपातितः । तथा अल्पतापा यवागूरित्यर्थे उष्णिकाशब्दः कन्प्रत्ययान्तो निपातितः तत्र तद्धितप्रत्ययः संज्ञामपि निमित्तमाश्रित्य प्रतिपादितः । 'संज्ञायां जन्या' इत्यत्र जनी वधूः तां वहन्तीति जन्याः जामातुर्वयस्याः इत्यत्र तद्धितो यत्प्रत्यय उक्तरीत्याश्रितः । एवं बहुस्थलेष्ववयवार्थातिरिक्तसंज्ञादिनिमित्ताश्रयणं अधिकृत्य संज्ञायां 'कृते ग्रन्थ' इत्यादि सूत्रेषु द्रष्टव्यम् । तथा समासेऽपि अन्यपदार्थे च संज्ञायामित्यादौ संज्ञां निमित्तीकृत्य समासो विहितः उन्मत्तगङ्गमित्यादयो देशादि संज्ञा इत्याद्यपि ग्राह्यम् । संज्ञायां ललाटकुक्कुटौ पश्यतीति सूत्रे काशिकादौ संज्ञाग्रहणमभिधेयनियमार्थं न तु रूढ्यर्थ-मित्याद्युक्तावपि प्रायो रूढ्यर्थत्वमेवेत्याशयेन रूढिसिद्ध्यर्थतया संज्ञोक्तिर्युक्तेति ज्ञेयम् । योगरूढिसमर्थनस्थलीय-प्राभाकरास्त्वाहुरित्यादि तर्कताण्डवानुसारेण प्राभाकरमतरीत्या योगरूढिमाक्षिप्य समाधानमलमित्यस्यार्थ इत्याशयेन तथा योजयति **ननु पङ्कजपदे रूढिरित्यादिना । व्यक्तिवचनेति** । व्यक्तिवचनानां सन्निहितविशेष-परत्वमिति न्यायेनेत्यर्थः । व्रीहीन् प्रोक्षतीत्यत्र व्रीहीनवहन्तीत्येतत्सन्निहितपरत्वदर्शनादिति भावः । अत एव तृतीये पूर्वतन्त्रेऽष्टमपादे अधिकारे च मन्त्रविधिमध्ये तर्कताण्डवग्रन्थपरित्यागो गौरवात् । प्रधानयुक्तिलेखन-मात्रे तात्पर्येण तदुपपादनपरग्रन्थलेखनोपपत्तेश्च । अत एवोक्तं विस्तरस्त्वितीति ज्ञेयम् । एतत्स्थलं स्पष्टं व्याकर्तव्यमस्ति ।

**स०व्र०— शमिधातोरिति** । शमि उपपदे धातुमात्रात्संज्ञायां विषये अच्प्रत्ययो भवतीति सूत्रार्थः । उदाहरणं तु **शङ्कर इति । स्तम्बकर्णयो रमिजपोरिति** । स्तम्बकर्णयोरुपपदयो रमिजपोरच्प्रत्यय इति सूत्रार्थः । उदाहरणं तु **स्तम्बेरमः कर्णेजप इति । अवयवार्थव्यतिरेकेणोपाधीनपीति** । शङ्कर इति सुखकर्तृत्वरूपावय-वार्थव्यतिरेकेण संज्ञाऽपि निमित्तत्वेनाश्रिता । स्तम्बेरमः कर्णेजपः, इत्यत्रापि हस्तिसूचकयोरिति वक्तव्यमिति हस्तिसूचकसंज्ञैव निमित्तत्वेनाश्रिता अतो योगरूढिरङ्गीकृतैवेति भावः ।





**विठ्ठल०— शमिधातोः संज्ञायामिति** । शमुपपदे धातुमात्रात्संज्ञायां विषये अच्प्रत्ययो भवतीति सूत्रार्थः । शङ्कर इत्याद्युदाहरणं स्तम्बकर्णयो रमिजपोरिति सूत्रम् । तत्र हस्तिसुकर्कयोरिति वक्तव्यमिति वार्तिकम् । तथा चायमर्थः । स्तम्बकर्णयोः सुबन्तयोरुपपदयोर्यथासङ्ख्यं रमिजपोर्धात्वोरच्प्रत्ययो भवति । **हस्ति-सूचकयो**र्वाच्ययोरिति स्तम्बेरमः हस्ती कर्णेजपः सूचकः पिशुन इत्यर्थः । **अवयवार्थव्यतिरेकेणेति** । शङ्कर इत्यत्र सुखकर्तृत्वरूपावयवार्थव्यतिरेकेण संज्ञापि निमित्तत्वेनाश्रिता संज्ञायामित्युक्तेः । एवं स्तम्बेरमः इत्यादावपि संज्ञैव निमित्तत्वेन वार्तिककृतोक्ता । अतो योगरूढिरङ्गीकृतैवेति भावः ।

**चषकः**— पाणिनीयभङ्ग्यापि योगरूढिं सिषाधयिषति **किञ्चेति** । सुखवाचिनि शम्युपपदे धातु-सामान्यात्संज्ञाया विषयभूतायामच्प्रत्ययो भवतीति योगार्थः । शङ्कर इत्यादिका तदुदाहृतिः । **स्तम्बकर्णयोरिति** । इदं च सूत्रं हस्तीत्यादिकं तु वार्तिकम् । तथा च स्तम्बकर्णयोरुपपदयोर्यथासङ्ख्यं रमिजपोर्धात्वोरच्प्रत्ययो भवति हस्तिसूचकयोर्वाच्ययोरिति समुदितार्थः । स्तम्बेरमो हस्ती कर्णेजपः सूचक इति तदुदाहरणम् । आदिपदं कृञो हेतुताच्छील्यकर्मणि भृतौ स्तम्बशकृतोरिन् व्रीहिवत्सयोरिति वक्तव्यमित्यादिपरिग्राहकम् । **अवयवार्थ-व्यतिरेकेणेति** । उपाधिशब्दो निमित्तवचनः । सुखकर्मककृतिकर्तृत्वस्तम्बाधिकरणकरमणक्रियाकर्तृत्वाद्यति-रिक्तशिवत्वहस्तित्वादिनिमित्तानीत्यर्थः । गमेर्डे इत्यनुशासनेऽपि तादृशावयवप्रवृत्तिनिमित्तगमनकर्तृत्वस्य जातु गवादावभानान्न गवादिपदानां योगरूढताप्रसङ्ग इति स्थितम् । 'यत्रार्थस्य विसंवादः प्रत्यक्षेणोपलभ्यते । स्वरसंस्कारमात्रार्था तत्र व्याकरणस्मृतिरि'ति स्मृतिः । अयमर्थः तर्कताण्डवादितोऽवसेयः ।

**॥ इति योगरूढ्यभावनिरासे**
**व्याकरणशास्त्रकारेणापि एतद्वृत्त्यङ्गीकारः ॥**
**॥ इति योगरूढ्यभावनिरासः ॥**
**॥ इति मुख्यवृत्तेः त्रैविध्यम् ॥**

* * *

**॥ अथ गौणी-लक्षणा-इत्यमुख्यवृत्त्योर्निरूपणम् ॥**

२६ **सु०— एवमव्यवहितामभिधावाचकत्वादिशब्द(पद)वेद्यां मुख्यवृत्तिं निरूप्येदानीं (व्यवहितां) गौणीं लक्षणां चामुख्यवृत्तिं निरूपयति प्रयोगेति ।**

अनु०— प्रयोगयुक्तसादृश्यं सम्बन्धो वाऽप्यमुख्यतः ।
वृत्तिहेतुरिति ज्ञेयः





**सम्बन्धः प्रयोगयुक्तेन । वाशब्दो व्यवस्थितविभाषायाम् । अपिशब्दो मुख्यवृत्तिलक्षणेन अमुख्यवृत्तिलक्षणस्य समुच्चयार्थः । अमुख्यत इति समासे गुण(णी)भूताया अपि वृत्तेर्बुद्ध्या पृथक्कृताया विशेषणम् । अमुख्याया गौण्या लक्षणायाश्च वृत्तेर्हेतुरिति ज्ञेय इत्यर्थः । यस्य शब्दस्य यत्रार्थे प्रयोगः सामर्थ्यं, तस्य प्रवृत्तिनिमित्तातिरिक्तं तत्सादृश्यं निमित्तीकृत्यान्यत्र वृत्तिर्गौणी; तत्सम्बन्धं निमित्तीकृत्य वृत्तिस्तु लक्षणेत्युक्तं भवति ।**

**परि०— अव्यवहिताम्** मुख्यार्थव्यवधानं विनैव अर्थबोधोपायभूतामित्यर्थः । **व्यवहितामिति** । मुख्यार्थव्यवधानेनार्थप्रतीतिहेतुभूताम् । प्रयोगयुक्तसादृश्यमित्यत्रस्थप्रयोगयुक्तपदस्य बुद्ध्या विभागेनान्वयमाह **सम्बन्धः प्रयोगयुक्तेनेति** । **प्रयोगः** । शक्तिः **तद्युक्तः** तद्विषयः । मुख्योऽर्थ इति यावत् । तेनेत्यर्थः ॥ **अमुख्यत इतीति** । **विशेषणमिति** । विशेषणप्रकारमेवाह **अमुख्याया इति** । 'आद्यादिभ्य उपसङ्ख्यानमि'ति षष्ठ्यर्थे तसिरिति भावः । नन्वत्र अमुख्यवृत्तेर्हेतुरुच्यते । न तु वृत्तिनिरूपणमित्यत आह **यस्येति** । **सामर्थ्यमिति** । शक्तिरित्यर्थः । प्रयोगपदस्य शक्तौ व्यवहारः प्रयोगमूलव्याकरणमिति यथेत्यानुमानिकनये दर्शित इति भावः । तस्य शब्दस्य यत्प्रवृत्तिनिमित्तं पङ्कजनिकर्तृत्वादिरूपं पद्मत्वादिरूपं वा तदतिरिक्तं तत्सादृश्यसामर्थ्यविषयार्थसादृश्यं मुख्यार्थसादृश्यमिति यावत् । **अन्यत्र** = सामर्थ्यविषयपदार्थादन्यत्र । **वृत्तिः** = अन्यार्थप्रतिपादकत्वमित्यर्थः । अत्र यस्य शब्दस्य यः शक्योऽर्थः तस्य तत्सादृश्यनिमित्ता वृत्तिर्गौणीत्येव लक्षणम् । लक्षणालक्षणे तथैवाग्रेऽभिधानात् । प्रवृत्तिनिमित्तातिरिक्तमिति स्वरूपसङ्कीर्तनम् । न च 'इति व्युत्पत्तिरपि हि सादृश्येनैव गम्यत' इति वक्ष्यमाणदिशा शक्तिरपि सादृश्यनिमित्तेति तद्वारणाय विशेषणमेवेदमिति शङ्क्यम् । शक्तिग्रहे स्वरूपसतः सादृश्यस्य निमित्तत्वेऽपि शब्दस्या(प्य)भिधावृत्तौ निमित्तभूतगोत्वादेर्निमित्तताघटकमात्रत्वेन स्वयमेवानिमित्तत्वात् । अन्यथा सिंहश्चैत्र इत्यत्र सिंहसदृश इति धीवद्गौरयमित्यादिमुख्यप्रयोगेऽपि सादृश्यधीप्रसङ्गात् । अत एव 'व्युत्पत्तिः सादृश्येनैव गम्यत' इत्युक्तिः । पद्धतावपि 'समयप्रतिपत्तौ सादृश्यमुपधानमि'ति । सन्न्यायरत्नावलीतर्कताण्डवयोरेतावन्मात्रस्यैव लक्षणत्वेनोक्तेश्च । **तत्सम्बन्धमिति** । मुख्यार्थसम्बन्धमित्यर्थः । एतेन वाशब्दो व्यवस्थितविभाषायामित्येतद्विवृतं भवति ।

**यादु०— अव्यवहितामिति** । मुख्यार्थबाधादिप्रतिसन्धानकृतव्यवधानशून्यमित्यर्थः । ननु शास्त्रे तत्र तत्राभिधा वाचकत्वं शक्तिरित्यादिपदवेद्या वृत्तयो व्यवह्रियन्ते तासां क्वान्तर्भाव इत्याशङ्कायामत्रैवेत्याशयेनाह **अभिधेति** । नन्वत्र प्रयोगशब्देनोच्चारणविवक्षायां तद्विषयत्वरूपस्य तद्युक्तत्वस्य शब्दनिष्ठत्वेन शब्दसदृशे





शब्दसम्बन्धिनि वा वृत्तेरभावेनासम्भवः । शक्तिविवक्षायां तु लक्षितलक्षणायामव्याप्तिः । तत्र लक्ष्यार्थस्य लक्ष्यसम्बन्धित्वेन शक्यसम्बन्धित्वाभावात् । अत आह **सामर्थ्यमिति** । प्रतिपादकत्वमित्यर्थः । तद्विषयत्वरूपं तद्युक्तत्वं च शक्यलक्ष्यसाधारणमिति नोक्तदोष इति भावः । नन्वेवं गोशब्दस्य यत्रैकस्यां गोव्यक्तौ शक्तिः । गोत्वेन तत्सादृश्यं निमित्तीकृत्य तस्यान्यत्र गोव्यक्तौ वृत्तिरपि गौणी स्यादत उक्तम् **प्रवृत्तिनिमित्तातिरिक्त-मिति** । प्रवृत्तिनिमित्तमिव प्रवृत्तिनिमित्तं लक्षणरूपं शक्यव्यभिचारिसादृश्यं तदतिरिक्तमित्यर्थः ।

**वं०प०— व्यवस्थितेति** । यदा गौणीवृत्तौ सादृश्यं निमित्तं तर्हि 'तत्सिद्धिजातिसारूप्यप्रशंसा-लिङ्गभूमिभिः । षड्भिः सर्वत्र शब्दानां गौणी वृत्तिः प्रकल्पिते'ति गौणीवृत्तिषाड्विध्योक्तेः भवदुक्तसादृश्यरूप-निमित्तस्य 'आदित्यो यूपो यजमानो यूप' इत्यत्र आज्याञ्जननिमित्तौज्वल्यस्य यूपे आदित्यसादृश्यस्य यूपे चोर्ध्वत्वरूपयजमानसादृश्यस्य सारूप्योदाहरणे सत्त्वेऽपि, तत्सिद्ध्याद्युदाहरणभूते 'यजमानः प्रस्तर' इत्यादौ च नास्तीत्यसार्वत्रिकमिति चेत् । उच्यते । तत्रापि यजमानकार्यकारित्वादिरूपसादृश्यस्यावश्यं वाच्यत्वात् । ननु तर्हि सारूप्यं पृथक् कस्माद्वाच्यम् । तस्य सर्वत्र सत्त्वादिति चेन्न । इह चक्षुर्ग्राह्यं सारूप्यं विवक्षितमन्यत्र तु तादृशं नेत्यभिप्रायात् । यथोक्तं शास्त्रदीपिकायाम् । 'सारूप्यादित्यत्र सर्वत्र सारूप्यं गौणत्वे निमित्तम् । कोऽत्र विशेषः । सत्यम् । इह चक्षुर्ग्राह्यं सारूप्यं विवक्षितम् । चाक्षुषं हि यूपस्य यजमानसारूप्यमूर्ध्वत्वम् आदित्य-सारूप्यं चाज्याञ्जननिमित्ततेजस्वित्वम् । अतस्तद्द्वारेण यजमानादित्यशब्दाभ्यां यूपः स्तूयत' इति ।

**आनन्दः— अव्यवहितामिति** । स्वार्थप्रतिपादनेऽर्थान्तरव्यवधानरहितामित्यर्थः । **व्यवहितामिति** । गौणार्थप्रतिपादनेऽर्थान्तरव्यवहितामित्यर्थः । ननु वृत्तिशब्दस्य हेतुशब्देनान्वितत्वेन निराकाङ्क्षत्वात् कथममुख्यत इत्यस्य तेनान्वय इत्यत आह **अमुख्यत इतीति** ।

**शे०वा०— अव्यवहितामिति** । मुख्यार्थानुपपत्त्यादिप्रतिसन्धानकृतव्यवधानशून्यामित्यर्थः । इदानी-मित्यवसरलक्षणसङ्गतिसूचनार्थमुक्तम् । उपलक्षणा च गौणी चेत्यत्र गौण्यपेक्षया लक्षणायाः पूर्वमुद्देशेऽपि प्रयोगयुक्तसादृश्यमिति लक्षणवाक्ये पूर्वं गौण्या लक्षणाभिधानात् गौर्णी लक्षणां चेत्यनेन गौण्या आदित्वेन निर्देशः कृत इति द्रष्टव्यम् । ननु अमुख्यत इत्यस्य न वृत्तिहेतुना अन्वयः । तथा सत्यमुख्यवृत्त्यनिरूपणप्रसङ्गात् । नापि वृत्त्या सम्बन्धः । तस्या वृत्तिहेतुरिति समासे गुणभूतत्वेनान्वयायोग्यत्वात् । तथा हि । यथा ऋद्धस्य राज्ञः पुरुष इति वाक्ये राजा स्वार्थादप्रच्युतः पदान्तरार्थमप्रतिपन्नो योग्यत्वाद्विशेषणसम्बन्धमनुभवति । राजपुरुष इति वृत्तौ तूपसर्जनीभूतस्वार्थमर्थान्तरं प्रत्याययतीत्ययोग्यत्वाद्विशेषणेन न सम्बद्ध्यते तथा अमुख्यतोवृत्तेर्हेतुरिति वाक्ये वृत्तेः स्वार्थादप्रच्युतत्वेन पदार्थान्तराणामप्राप्तत्वेन विशेषणसम्बन्धयोग्यतायामपि वृत्तिहेतुरिति वृत्तौ, वृत्तेरुप-सर्जनीभूतस्वार्थस्यार्थान्तरस्य प्रत्यायकत्वेनायोग्यत्वान्नामुख्यत इति विशेषणेन सम्बन्धः सम्भवतीत्यत आह **अमुख्यत इति** । विशेषणविशेष्यभावमेव दर्शयति **अमुख्याया इति** । अनेन अमुख्यत इति षष्ठ्यन्तात् तसि-रित्युक्तं भवति । वाशब्दोक्तव्यवस्थितविभाषोपदर्शनपूर्वकमपेक्षितं पूरयन्नेव लक्षणद्वयसमर्पकतया व्याचष्टे **यस्य**

**शब्दस्येति** । प्रयोगयुक्तशब्देन मुख्यार्थलाभाय प्रयोगशब्दं शक्तिपरतया व्याचष्टे **प्रयोगः सामर्थ्यमिति** । गोव्यक्तौ शक्तस्य गोशब्दस्य, गोत्वेन तत्सादृश्यं निमित्तीकृत्य अन्यत्र गोव्यक्तौ वृत्तिरपि गौणी स्यादित्यतः प्रवृत्तिनिमित्तातिरिक्तधर्मेण तत्सादृश्यमित्युक्तम् । गोत्वेन सादृश्यस्य प्रवृत्तिनिमित्तधर्मेण सादृश्यतया तदतिरिक्तधर्मेण असादृश्यत्वान्नोक्तातिप्रसङ्गः । **तत्सम्बन्धम्** इत्यत्र तच्छब्देन मुख्यार्थस्य परिग्रहः ।

**वा०र०— निरूप्येति** । ल्यपैव प्राक्तनत्वं पूर्वनिरूपणस्य प्रतिपादयता इदानीं क्रियमाणनिरूपणस्य पश्चात्तनतालाभात्तल्लाभायेदानीमिति न वाच्यमित्यतोऽल्पया पूर्वनिरूपणादुत्तरनिरूपणस्योत्तरकालीनत्वमात्रप्राप्तावप्युत्तरकालं तदभिधाने निमित्तभूतपूर्वसङ्गतेरलाभात् तल्लाभायेदानीमित्यस्यार्थवत्त्वमित्याशयेन तथा योजयति **इदानीमित्यवसरेति** । **पूर्वं गौण्या इति** । पूर्वं तस्याः लक्षणाभिधाने निमित्तं च मूले स्पष्टयिष्यत इति भावः । वृत्तौ हि राजपदं राजानमभिधायेत्यादि समर्थसूत्रीयपदमञ्जरीकुसुमविकासानुसारेणान्वयानुपपत्तिं स्पष्टयति **तथा हि यथा ऋद्धस्येति** । **स्वार्थः** राजरूपोऽर्थः । **पदान्तरार्थं** पुरुषपदार्थम् । **इति वृत्ताविति** । इति समासरूपवृत्तावित्यर्थः । **उपसर्जनीभूतेति** । उपसर्जनीभूतस्वार्थो यस्येति तथोक्तः । अर्थान्तरं पुरुषरूपं पदार्थं हेतुरूपं उपसर्जनेत्यादि पूर्ववत् विस्तरेणैतदर्थप्रतिपादनं राजशब्दस्यापि राजपुरुषशब्दपर्यायत्वं स्यादित्येतदानन्दमयाधिकरणीयमूलव्याख्यावसरे अदृश्यत्वनये कृतं ततोऽर्थविशेषो बोध्य इति द्रष्टव्यम् । **गोव्यक्तौ शक्तस्येति** । अन्यत्र वृत्तिरित्युक्तेऽपि तद्गोव्यक्त्यपेक्षया यो व्यक्त्यन्तरस्य तदन्यत्वेन विशिष्टलक्षणसद्भावात् तद्व्यावृत्तये व्यक्तीति विशेषणमावश्यकमित्याशयः । एतेन सादृश्यं निमित्तीकृत्य गोः अन्यत्र वृत्तिरित्यर्थलाभे प्रवृत्तिनिमित्तमादायातिप्रसङ्गोक्त्ययोग इति शङ्कापरिहारः कृत इति ज्ञेयम् ।

**स०व्र०— प्रवृत्तिनिमित्तातिरिक्तमिति** । तथा च घटशब्दप्रवृत्तिनिमित्तघटत्वसदृशघटत्वान्तरवति घटशब्दस्य या रूढिः तत्र नातिव्याप्तिरिति ध्येयम् ।

**विठ्ठल०— अव्यवहितामिति** । मुख्यार्थव्यवधानं विनैवार्थबोधोपायभूतामित्यर्थः । **व्यवहितामिति** । मुख्यार्थव्यवधानेनार्थधीहेतुभूतामित्यर्थः । **प्रयोगयुक्तेनेति** । प्रयोगः शक्तिः तद्युक्तेन मुख्यार्थेनेति यावत् । प्रयोगमूलं व्याकरणमिति यथेति प्रयोगशब्दः शक्तिपर इति दर्शितम् । षष्ठ्यर्थे तसिरिति भावेनाह **अमुख्यया इति** । **प्रवृत्तिनिमित्तातिरिक्तमिति** । प्रवृत्तिनिमित्तधर्मातिरिक्तधर्मिघटितं सादृश्यं निमित्तीकृत्येत्यर्थः । अत्र प्रवृत्तिनिमित्तातिरिक्तमिति स्वरूपकथनम् । न च व्युत्पत्तिरपि हि सादृश्येनैव गम्यत इति वक्ष्यमाणदिशा शक्तिरपि सादृश्यनिमित्तेति तद्वारणार्थमिदं विशेषणमिति शङ्क्यं शक्तिग्रह एव स्वरूपसादृश्यस्य निमित्तत्वेन शक्तौ निमित्तत्वाभावात् । अन्यथा सिंहो देवदत्त इत्यत्र सिंहसदृश इति प्रतीतिवत् गौरयमिति मुख्यप्रयोगेऽपि सादृश्यप्रतीतिप्रसङ्गात् । अत एव व्युत्पत्तिः सादृश्ये न गम्यत इत्युक्तम् । पद्धतावपि समयप्रतिपत्तौ सादृश्यमुपधानमित्युक्तं सन्न्यायरत्नावल्यां वाच्यार्थसादृश्यार्थे शब्दस्य वृत्तिर्गौणीत्येतन्मात्रस्यैवोक्तेश्च ।





**चषकः— अव्यवहितामिति**। मुख्यार्थबाधप्रतिसंहितिनियन्त्रितव्यवहितिविनिर्मुक्तामित्यर्थः। शास्त्रीय-नानाव्यवहृतीनामेकार्थतां गमयति **अभिधेति**।

**॥ तत्रादौ गौणीवृत्त्यभावनिरासः ॥**

२७　**सु०— कश्चिदाह; गौणी नाम वृत्तिर्नास्ति, सादृश्यस्यापि सम्बन्धत्वेन लक्षणाया-मन्तर्भूतत्वादिति; त(न्मतमपा)न्निराकर्तुं पश्चादुद्दिष्टापि गौणी प्रथमं लक्षिता । स्वातन्त्र्यं ह्येवमस्या ज्ञापितं स्यात् ।**

**यदि खलु कश्चिद् ब्रूयात्, लक्षणा नाम नास्ति सम्बन्धस्याप्येकस्थानत्वादि-सादृश्यरूपत्वेन गौण्यामन्तर्भूतत्वादिति; तदा किं वक्तव्यम् । नैवं लौकिकी प्रतीतिरिति चेत्, तत्किं सादृश्यं सम्बन्धत्वेन प्रतियन्ति लौकिकाः ।**

**परि०— सम्बन्धत्वेनेति** । संयोगादिरेव लक्षणाबीजं न तु सम्बन्ध इति वक्तुमशक्यत्वेन विशिष्टधीनिर्वाहकम्, सम्बन्धमात्रमित्येव वाच्यत्वात् । इदमनेन सदृशमिति विशिष्टबुद्धिनियामकत्वस्य सादृश्यस्यापि सत्त्वादिति भावः । **प्रतियन्तीति** । जानन्तीत्यर्थः । प्रत्युत इमौ सदृशौ न सम्बद्धाविति सादृश्यं न सम्बन्ध इत्येव प्रतियन्तीति भावः ।

**गु०दी०— प्रतियन्ति लौकिका** इत्युपलक्षणम् ।

**वं०प०— एकेति** । प्रवाहतीरयोरेकप्रदेशस्थत्वरूपैकस्थानत्वमस्ति । तद्यथाकथञ्चित्सादृश्यतया व्याख्येयम् । **स्वातन्त्र्यं** अन्यत्रान्तर्भावायोग्यत्वम् । मृद्गवकादावित्यत्र 'इवे च (?)प्रतिकृतौ' प्रतिकृतौ वाच्यायामिवार्थे कप्रत्ययः भवतीति सूत्रेण कप्रत्यये प्रसिद्धगौरिव विद्यमानं गवकमिति ध्येयम् । अत एव प्रतिमादावपि रामोऽयं लक्ष्मणोऽयं सीतेयमित्यादिरपप्रयोग एव । अपि तु राम इव स्थितं रामकं लक्ष्मण इव स्थितं लक्ष्मणकं सीतेव स्थितं सीताकमित्येव प्रयोक्तव्यम् । अत एव कश्चन लोकोऽपि 'रामं सीतां लक्ष्मणं जीविकार्थे विक्रीणीते जन्म तस्याशु धिक् धिक् । अत्र श्लोके योऽपशब्दं न वेत्ति व्यर्थप्रज्ञं पण्डितं चापि धिग्धिगि'ति ।

**आनन्दः**— पश्चादुद्दिष्टस्य प्रथमं लक्षणकरणे किं सिद्धमत आह **स्वातन्त्र्यमिति** । निराकरणयुक्तिमाह **यदि खल्विति**।

**श्रीनिधि०**— पिशुनः (?) स्वातन्त्र्यं ह्येवमस्या इति । अन्यथा लक्षणाप्रभेदोऽयमित्यपि शङ्केतेति भावः । यथा हि कश्चित् कस्मैचित् प्रथमतः तांबूलं ददाति । कस्मैचित् प्रथमतः दक्षिणां ददाति । तेन तयोः साम्यं ज्ञायत इति भावः ।

**शे०वा०**— उपलक्षणा च गौणी चेति निर्देशक्रमेण लक्षणाया एव प्रथमं लक्षणीयत्वात् कुतः क्रमभङ्ग इत्यतः प्रयोजनसद्भावान्नानुपपत्तिरित्याह **कश्चिदिति** । परशब्दस्य परत्र वृत्तित्वाविशेषाद्गौणी लक्षणातो भिन्ना नास्तीत्यर्थः । मुख्यार्थसादृश्यं निमित्तीकृत्य वृत्तिर्गौणी तत्सम्बन्धं निमित्तीकृत्य वृत्तिर्लक्षणेति भेदकस्य लक्षणस्य सत्त्वात् कथं भेदाभाव इत्यतो, भवेदेतदेवं यदि लक्षणभेद एव स्यान्न चैतदस्ति सादृश्यस्य सम्बन्धत्वेन लक्षणभेदाभावादित्याह **सादृश्यस्यापीति** । न संयोगादिरेव सम्बन्धो लक्षणानिमित्तं स्यात् किन्तु विशिष्टधी-निर्वाहकं सम्बन्धमात्रम् । अस्ति चेहापीदमनेन सदृशमिति विशिष्टधीरिति सादृश्यस्य सम्बन्धत्वसिद्धिरिति भावः । **एवमिति** । पश्चाल्लक्षणीयाया गौण्याः पूर्वं लक्षणकथनेनेत्यर्थः ।

सम्बन्धत्वेन लौकिकप्रतीतिरेव सम्बन्धत्वसाधिका । सादृश्यस्य च तदभावान्न सम्बन्धत्वमिति कथं गौण्या लक्षणान्तर्भाव इति भावेन सम्बन्धत्वेन लोकप्रतीतेरेव तत्साधकत्वं परमुखेनैव वाचयितुं प्रतिबन्दीं तावद् गृह्णाति **यदि खल्विति** । सादृश्यस्य सम्बन्धत्वाद्युक्तो गौण्या लक्षणान्तर्भावो लक्षणायास्तु कथं गौण्यामन्तर्भावः, सम्बन्धस्य सादृश्यत्वाभावादित्यत आह **सम्बन्धस्यापीति** । **सादृश्यरूपत्वेनेति** । तद्विशेषत्वेनेत्यर्थः । अङ्गीकृत्य चेदं प्रतिबन्द्यभिधानम् । वस्तुतस्तूक्तप्रतीत्या सादृश्यस्य न सम्बन्धत्वं सिद्ध्यति । तथा हि । यथेदमनेन संयुक्तमिति प्रतीत्यां न संयोगो विशेषणविशेष्ययोः सम्बन्धतया सिद्ध्यति । दण्डीत्यत्र दण्डस्येवेह संयोगस्यैव विशेषणत्वात् किन्तु संयोगस्य संयोगिना सह समवाय एव सिद्ध्यति । तथा चोक्तप्रतीत्या सादृशस्य धर्म्यादिना सहान्यः सम्बन्धः सिद्ध्यतु न तु सादृश्यस्य सम्बन्धत्वम् । न हि तन्निरूप्यत्वमेव तत्सम्बन्धत्वम् । दीर्घत्वादेरपि ह्रस्वादिसम्बन्धत्वापातात् । किन्तु तत्सम्बन्धवत्त्वव्याप्तं तत् । यदि हि सम्बन्धान्तरं विनैव संयोगादिनेव चैत्रो दण्डी रूपी ज्ञातश्चेति धीवत् सादृश्येनैव सिंहवान् देवदत्त इति धीः स्यात् तदैवं सादृश्यस्य सम्बन्धत्वं सिद्ध्येत् । न च एतदस्तीत्यन्यत्र विस्तरः ।

**वा०र०**— स्वमते गौणीतो लक्षणाभेदप्रकारे निरूपिते तर्कताण्डवीयप्रकारानुसारेणाह **न संयोगादि-रेवेति** । **निमित्तं स्यादिति** । निमित्तं भवतीत्यर्थः । उक्तस्थलीयतर्कताण्डवानुसारेणाह **अङ्गीकृत्य चेदम्** इत्यादिना **विस्तर** इत्यन्तेन ।

**विठ्ठल०**— **सम्बन्धस्यापीति** । सादृश्यं निमित्तीकृत्य या वृत्तिः सा खलु गौणी । तथा च गङ्गायां घोष इत्यादौ गङ्गातीरोभयनिष्ठस्य गङ्गातीरसम्बन्धस्यैकस्थानत्वादिलक्षणसादृश्यरूपत्वे तन्निमित्तीकृत्य प्रवृत्ताया अपि गौण्यामन्तर्भूतत्वादित्यर्थः । यथा सम्बन्धस्य सादृश्यत्वेन प्रतीतिर्नास्ति तथा सादृश्यस्यापि सम्बन्धत्वेन प्रतीतिर्नास्तीत्यभिप्रायेणाक्षिपति **तत्किमिति** ।





**चषकः**— मतान्तरनिराक्रियाख्यफलसद्भावात् 'उपलक्षणा च गौणी चे'ति निर्देशविनिमयेन गौण्याः प्रथमं लक्षणाभिधानं नानौचितीमर्हतीत्याशयेन मतान्तरं दर्शयति **कश्चिदिति** । नैयायिक इत्यर्थः । मुख्यार्थ-सादृश्यनियन्त्रिता गौणी वृत्तिस्तत्सम्बन्धनिमित्ता लक्षणेति लक्षणभेदनिबन्धनो भेदोऽपि न सम्भवतीत्याह **सादृश्यस्येति** । संयोगसमवायादिसम्बन्धानां लक्षणायां विशिष्टप्रत्ययौपयिकत्वरूपसम्बन्धत्वेनैव निमित्ततया तादृशरूपस्य च सादृश्येऽप्यनपायादिति भावः । **एवमिति** । विनिमयाश्रयणेन लक्षणाभिधानेनेत्यर्थः । **एक-स्थानत्वादीति** । बहुव्रीहेर्भावप्रत्ययः । **प्रतियन्ति** जानन्ति ।

**॥ इति गौणीवृत्त्यभावनिरासः ॥**

* * *

**॥ तत्र लक्षणावृत्त्यभावनिरासः ॥**

२८ **सु०— तत्र गौणी द्विविधा, रूढारूढभेदात् । तत्राद्या यथा, मृद्गवकादौ गवादि-शब्दस्य । द्वितीया यथा गौर्वाहीक इति ।**

**अत्र स्वार्थसहचारिणो गुणा जाड्यमान्द्यादयो लक्ष्यमाणा गोशब्दस्य वाहीके वृत्तौ निमित्ततामुपयन्तीति केचित् । तदसत्, गौण्या लक्षणातो भेदाभावप्रसङ्गात्, गोशब्दस्य वाहीके वृत्तौ लक्ष्यमाणगुणानां निमित्ततायाश्चोपपत्तिशून्यत्वात् । लक्ष्यमाण-गुणसादृश्याद्गुणान्तरं ततो गुणी लक्ष्यत इति तु नानुभाविकम् ।**

**स्वार्थसहचारिगुणाभेदेन परार्थगता गुणा एव लक्ष्यन्त इत्यपरे । तदप्य(युक्तम्)-सत्, गुणानां भेदस्य साधयिष्यमाणत्वात्, वाहीके वृत्तौ निमित्ताभावाच्च ।**

**तस्मात्सदृशगुणाश्रयत्वं निमित्तीकृत्य परार्थे वृत्तिर्गौणीति साधूक्तम् ।**

**परि०**— न्यायविवरणोक्तविवरणाय विभागोदाहरणान्याह **तत्रेति** । **वाहीक इति** । 'बहि-षष्टिलोप ईकक्चेति' वार्तिके बहिर्भव इत्यर्थे बहिःशब्दादीकक्प्रत्यये किति चेति, आदिवृद्धौ टिलोपे रूपम् । अनागरिकः पुमानित्यर्थः ॥ **स्वार्थेति** । स्वार्थसम्बन्धितया वर्तमाना इत्यर्थः । **गुणान्तरमिति** । लक्ष्यत इत्यन्वेति । लक्षितलक्षणातो भेदाभावस्य पराभ्युपगमात् तं दोषमनुक्त्वा दोषान्तरमाह **इति तु नानुभाविकमिति** । **साधयिष्यमाणत्वादिति** । 'भिन्नाश्च भिन्नधर्माश्च पदार्था अखिला अपी'-त्यादिनेति भावः । **वाहीके वृत्तौ निमित्ताभावाच्चेति** । तैश्च गुणी लक्ष्यत इत्युक्तौ च अनानु-





भाविकत्वदोष इति भावः । **सदृशगुणाश्रयत्वमिति** । 'तुष्यतु दुर्जन' इति भावेन वा गुणसम्बन्धौ गौणीतिशब्दार्थव्युत्पादनाय वा गुणेत्युक्तम् । वस्तुतस्तु सादृश्यं निमित्तीकृत्येत्येवार्थः । सदृशस्य गुणः सादृश्यं तदाश्रयत्वमित्यर्थः ।

**गु०दी०**— लक्षणायां लक्षकगङ्गादिपदेनैव लक्ष्यतीरादिबोधनं न तु तद्वाचकपदस्यापि सह प्रयोगः । गौण्यां तु सिंहो देवदत्त इत्यादिरूपेण गौणसिंहपदस्य देवदत्तपदस्य च सह प्रयोगः । लक्षणायां सम्बन्धस्य निमित्ततामात्रम् । प्रतीतिस्तु गङ्गापदोपस्थापिततीरस्यैव । गौण्यां तु सादृश्यस्य निमित्तत्वं, नीलमुत्पलमित्यादाविव मुख्यैक्यस्य समानाधिकरणप्रयोगार्थत्वायोगेऽपि सादृश्यरूपामुख्यैक्यस्य समानाधिकरणप्रयोगार्थतया प्रतीतिरिति वैलक्षण्यस्य सर्वजनसम्प्रतिपन्नत्वात् । अत एव लक्षणागौण्योर्गौणी मुख्या । धर्मरूपसामानाधिकरण्यमात्रे व्यत्यासाद्धर्मिरूपमुख्यार्थयोरपरित्यागात् । लक्षणायां तु गङ्गादिपदवाच्यप्रवाहरूपमुख्यार्थस्य सर्वथा त्यागादतिजघन्यतेत्यपि द्रष्टव्यम् । **गौर्वाहिक** इत्यत्र वाहिको भारवाहकः 'भारवाहस्तु वाहिक' इत्यमरः । **लक्ष्यमाणगुणानाम्** इत्यत्र गोशब्देन लक्ष्यमाणानां गवि स्थितमान्द्यादिगुणानामित्यर्थः । अत एव हि मुख्यार्थसम्बन्धाः न तु वाहिकस्थिताः । **वाहिके वृत्तौ निमित्ताभावाच्च** इत्यत्र गुणान्तराणां लक्षणया तच्छब्दबोध्यत्वेऽपि वाहिके वृत्तौ शब्दवृत्तौ निमित्ताभावाच्चेत्यर्थः । न हि तीरं लक्ष्यमित्येतावता तीरस्थगृहाणामपि लक्ष्यताऽस्ति ।

**यादु०**— **गौर्वाहीक इति** । वाहीको नाम देशविशेषः । तत्रत्यः पुरुषोऽपि वाहीक इत्याहुः । **स्वार्थसहचारिण इति** । गोत्वसहचारिण इत्यर्थः । गुण इत्यादौ गुणशब्दो धर्ममात्रपर इति ज्ञातव्यम् । अत्र किं गोशब्दस्य स्वार्थसहचारिगुणेषु या वृत्तिरङ्गीकृता सैव गौणीत्यङ्गीक्रियते उत लक्ष्यमाणगुणनिमित्तकान्यत्रवृत्तिर्गौणीति विकल्पमभिप्रेत्याद्यं दूषयति **गौण्या इति** । द्वितीयं दूषयति **गोशब्दस्येति** । व्यधिकरणत्वादिति भावः । **गुणाभेदेनेति** । जडत्वमन्दत्वादिरूपसामान्यस्य सर्वत्रानुगतस्याभेदेनेत्यर्थः । **साधयिष्यमाणत्वादिति** । वैशेषिकपरीक्षायां सामान्यानां प्रातिस्विकत्वस्य साधयिष्यमाणत्वादित्यर्थः । **वाहीके वृत्ताविति** । गङ्गादिशब्दानां लक्ष्येषु तीरादिष्विव गोशब्दस्यापि लक्ष्यमाणगुणेष्वेव वृत्तिः स्यान्न तु वाहीके । लक्ष्यमाणगुणवत्त्वं निमित्तीकृत्य वाहीकवृत्तिरिति च नानुभाविकमिति भावः ।

**वं०प०**— **अत्र स्वार्थेत्यादि** । तथा च गुणानामेव निमित्तत्वेन सादृश्यं न निमित्तमिति भावः । **लक्ष्यमाणगुणाः** गोत्वसहचारिणो जाड्यादयः । **गुणान्तरं** वाहीकनिष्ठजाड्यादिरूपम् । ततो गुणी तद्वान्वाहीकः पुरुषः । **गुणाभेदेनेति** । गोत्वसहचरितानां जाड्यादीनां वाहीकनिष्ठानां च जाड्यादीनामभेदेनेत्यर्थः । तथा च सादृश्याद्गुणान्तरं ततो गुणी लक्ष्यत इति नोच्यत इत्यर्थः । **निमित्ताभावाच्चेति** । गङ्गादिशब्दानां लक्ष्येषु तीरादिष्विव लक्ष्यमाणगुणेष्वेव गोशब्दस्य वृत्तिः स्यान्न वाहीक इति पूर्ववदेव भावः ।





**आनन्दः— अत्र स्वार्थेति** । गोपदेन स्वार्थसहचरितजाड्यमान्द्यादयो लक्षितास्तद्द्वारेण गोपदेन वाहीको लक्ष्यत इति लक्षितलक्षणेयमित्यर्थः । **गोशब्दस्येति** । सादृश्यैव निमित्तत्वसम्भवे गुणानां निमित्तत्ववर्णन-मुपपत्तिशून्यमित्यर्थः । **वाहीक इति** । गोशब्दस्येति शेषः । तथा च गोशब्दस्य वाहीकगुणे प्रयोगः स्यान्न तु वाहीके निमित्ताभावादित्यर्थः ।

**श्रीनिधि०— लक्षणात इति** । लक्षितलक्षणात इत्यर्थः । **वाहीके प्रवृत्तौ निमित्ताभावादिति** । परार्थगता गुणा एव लक्ष्यन्ते तेन च वाहीको लक्ष्यत इति पक्षे लक्षणतो भेदाभावप्रसङ्गो दोषः । गुणानां भेदे च लक्ष्यमाणानां व्यधिकरणत्वेन निमित्तत्वायोगेनेति भावः ।

**शे०वा०— गौर्वाहीक इति** । अत्र वाहीको नाम देशविशेषः, तत्रभवः पुरुषोऽपि वाहीक इति ज्ञेयम् । अत्र वादिनां प्रवृत्तिनिमित्ते विप्रतिपत्तिमुद्भावयति **अत्रेति** । **स्वार्थसहचारिण इति** । गोत्वसहचारिण इत्यर्थः । **गौण्या इति** । स्वार्थसहचारिलक्ष्यमाणगुणनिमित्तकत्वोक्त्या मुख्यार्थसम्बन्धनिमित्तकत्वानपायेण गौण्या लक्षणातो भेदाभावप्रसङ्गादित्यर्थः । **गोशब्दस्येति** । प्रवृत्तिनिमित्तस्य वाच्यवृत्तित्वनियमात् । लक्ष्यमाणस्य च गोगत-जाड्यादेर्निमित्तस्य वाच्यवृत्तित्वाभावान्न वाहीके गोशब्दप्रवृत्तौ निमित्तत्वमिति भावः । लक्षितलक्षणैव गौणी न ततोऽतिरिक्तेति मतान्तरमाशङ्क्य दूषयति **लक्ष्यमाणेति** । **नानुभाविकमिति** । लक्षणात्रयस्याप्रामाणिकस्य कल्पनमयुक्तमिति भावः । गुणमात्रं लक्ष्यते पदार्थस्त्वाक्षिप्यत एवेति नानेकलक्षणाप्रसङ्ग इति मतान्तर-मुद्भावयति **स्वार्थेति** । न तु परार्थोऽभिधीयत इति शेषः । **साधयिष्यमाणत्वादिति** । 'भिन्नाश्च भिन्नधर्माश्च पदार्था निखिला अपि' इत्यादिना वैशेषिकपरीक्षायामिति शेषः । ततश्च अभेदस्याभावेन लक्षकस्य गोशब्दार्थस्य लक्ष्येण वाहीकगतजाड्यादिना अभेदरूपसम्बन्धदौर्घट्यान्न लक्षणेति भावः । न च मुख्याभेदाभावेऽपि यादृशा-तादृशभेदविवक्षया न सम्बन्धदौर्घट्यमिति वाच्यम् । तत्तुल्यगुणत्वरूपस्य तस्य लक्ष्यगतत्वेऽपि लक्षके असम्भवेन तत्तुल्यगुणवत्त्वस्य च लक्षके सत्त्वेऽपि लक्ष्ये असम्भवेन यादृशातादृशाभेदस्य विवक्षितुमशक्य-त्वादिति द्रष्टव्यम् । ननु लक्षकस्य लक्ष्येण तत्तुल्यगुणवत्त्वमेव सम्बन्धः । लक्ष्यस्य च लक्षकेण तत्तुल्यगुणत्व-मेवेति न सम्बन्धदौर्घट्यमित्यत आह **वाहीक इति** । परार्थस्य गोपदाप्रतिपाद्यत्वे तत्प्रतिपाद्यजाड्यादावेव गौर्जाड्यमिति प्रयोगापत्त्या गौर्वाहीक इति शब्दसामानाधिकरण्यानुपपत्तिरिति भावः ।

**वा०र०—** 'भेदाविमौ च सादृश्यात् सम्बन्धान्तरतस्तथा । गौणी शुद्धौ च विज्ञेयावि'त्येतत्काव्य-सूत्रस्य व्याख्यानावसरे वृत्तिकृते भावारोपाध्यवसानरूपौ सादृश्यहेतुभेदौ गौर्वाहीक इत्यत्र गौरयमित्यत्रेति व्यवहृतम् । तद्व्याख्यानावसरे साहित्यदीपिकायां लाडभास्करेण सादृश्याद्गौणी सम्बन्धान्तरतः शुद्धौ गौर्वाहीक इति गौणी सारोपा वाहीको नाम देशविशेषः तत्रत्योऽपि वाहीक इत्यादि प्रतिपादितं, तदनुसारेणाह **अत्र वाहीको नामेति** । ननु वाहीकदेशस्थस्यापि कथं वाहीकशब्दवाच्यत्वमिति चेन्न । देशवाचकवाहीकशब्दस्योपचारेण तत्रत्येऽपि प्रयोगोपपत्तेः । अत एव समर्थः पदविधिरिति सूत्रभाष्ये समर्थपदाश्रितत्वात् पदविधिरुपचारेण समर्थ

इत्युच्यत इति प्रतिपादनम् । तुल्यास्यप्रयत्नं सवर्णमिति सूत्रीयप्रदीपविवरणे आस्ये भवं आस्यमिति व्याख्यानं 'उपसर्गस्य घञ्यमनुष्ये बहुलमि'त्येतच्छेषीतत्त्वबोधिन्योः प्रतीहारो द्वारं, तत्र स्थितत्वात्पुरुषोऽपि प्रतीहार इत्युक्तिः । 'उपसर्गात्सुनोतिसुवती'ति सूत्रमञ्जर्यां ग्रहा दारा इत्येव तात्स्थ्यात् ताच्छब्द्यमित्याह । उपसर्गस्था-दितीत्युक्तिः । सम्माननोत्सञ्जनाचार्येति सूत्रीयकाशिकायां चार्वीबुद्धिस्तत्सम्बन्धादाचार्योऽपि चार्वीति प्रति-पादनम् । अभ्युपगमेऽप्यर्थाभावादिति सूत्रीयचार्वाकैरित्यनुभाष्यसुधायां चार्वीबुद्धिः तत्सम्बन्धादाचार्योऽपि चार्वी तस्येमे चार्वाका इत्यादेः प्रतिपादनम् । 'गोभिः श्रीणीत मत्सरमि'त्यादौ गोविकारेषु गोभिरित्यादि प्रयोगदृष्टान्तेन प्रकृतिशब्दस्य तद्विकारे प्रयोग इति परभाष्यानुसारेण यत्रार्थो नान्य इष्यते तेजोबन्नामक-मित्येतद्भाष्यावतारे वक्ष्यते च पानं देश इत्येतत्सूत्रीयक्षीरपानं येषां ते क्षीरपाणाः उशीनराः सुरापाणाः प्राच्या इत्येतत्प्रक्रियाशेष्यां पीयत इति पानं कृत्यल्युटो बहुलमिति कर्मणि ल्युट् । उशीनरादिशब्दादेशवाचिनः सोऽयमित्यारोपात्तद्वासिपुरुषेषु वर्तन्ते इति पुरुषाभिधानेऽपि देशाभिधानं नापह्रीयत इत्युक्तं च । जनपदे लुबिति सूत्रीयवृत्त्यादि ग्रन्थपर्यालोचनया पञ्चालादिशब्दानां पञ्चालादिदेशेष्विव तत्र भव इत्यर्थेऽण्प्रत्ययस्य प्राप्तस्यापि लोपे सति पुरुषेष्वपि पञ्चालादिशब्दानां बहुवचनान्तानामेव प्रयोग इति जरद्वैय्याकरणमतरीत्या प्रकृतेऽप्यणो लुपि सति वाहीकशब्दो देशस्थपुरुषस्यापि वाचीति प्राप्तेश्च । तदशिष्यं संज्ञाप्रमाणत्वादिति पाणिना तु जरन्मतं निराकुर्वता देशस्य तस्य पुरुषाणां च पञ्चाल इति संज्ञैवेत्यादेः प्रतिपादनात् तद्रीत्या वाहीकशब्दस्य देशतत्रत्यपुरुषोभयवाचकत्वस्यैव प्राप्तेश्च । अत्राधिकमुमर्जीकबौद्धधिक्कारेऽस्मत्कृते ज्ञेयम् । तस्माद्देशवाचिवाहीकशब्दस्य देशस्थपुरुषे उपचारो वा वचनवृत्तिरेव वास्तीति तत्र भावोऽपि वाहीक इत्युच्यत इति युक्तम् । एतेनैतदपि निरस्तम् । यदमुर्जीकबौद्धः प्राह । वाहीकशब्दस्तत्रभव इति भवार्थेऽणन्तत्वात् पुरुषविशेषवाचक इत्यभिप्रायः । किं वा पुरुषविशेषलक्षकः शक्यसम्बन्धप्रदर्शनार्थं तत्स्थ इत्युक्तमिति । नाद्यः तत्र भव इत्येतदपवादेन वृद्धा छ इति सूत्रेण छप्रत्यये शालीयो मालीय इतिवद्वाहीकीय इति रूपप्रसङ्गात् 'वहीकश्च वहीकश्च विपाशायां पिशाचकौ । तयोरपत्यं वाहीका नैषा सृष्टिः प्रजापतेरि'ति भारतविरोधाच्चे-त्यादि । उक्तरीत्योभयवाचकत्वादेरेव प्राप्त्याण्प्रत्ययादिकल्पनानवकाशात् अस्तु भवार्थेऽण्प्रत्ययान्तो वाहीकशब्द इत्यपि पक्षः । न चोक्तानुपपत्तिः । वृद्धा छ इत्यस्य तत्र भव इत्येतदपवादत्वेऽपि वा नामधेयस्य वृद्धसंज्ञेति स्मरणेन नामधेयस्य वृद्धसंज्ञाया विकल्पप्राप्तेर्देशविशेषनामधेयवाहीकशब्दस्यापि वृद्धसंज्ञापक्षे वाहीकीय इति प्राप्तावपि तदभावपक्षे छप्रत्ययाप्राप्तावण्येव सति यस्येति चेत्यकारलोपे वाहीके भवो वाहीक इत्येव रूपप्राप्तेः ओर्गुण इत्येतत्सूत्रीयसंज्ञापूर्वको विधिरनित्य इतीत्येतत्परिभाषया छविधेरनित्यतया प्राप्त्यभावोपपत्तेश्च । अत एव निर्दोषवेदोत्पन्नं ज्ञानं नारमिति तत्त्वप्रकाशिकास्थव्युत्पत्तिपक्षे छप्राप्त्या नारीयमिति प्राप्नोतीत्याशङ्का-मुत्थाप्य तट्टीकाकारैरुक्तविधेरनित्यत्वेनैव परिहारः कृतः । 'वाहीकश्च वहीकश्च विपाशायामि'त्यादि भारतविरोध-रूपद्वितीयदूषणं तु अत्यन्ताज्ञानमूलम् । तथा हि । भारते हि कर्णपर्वणि चत्वारिंशाध्याये शल्यं प्रति कर्णस्य वचनमिदमिति वाच्यम् । तत्र च प्रथमाध्यायमारभ्य चत्वारिंशाध्यायपर्यन्तं चत्वारिंशाध्यायेऽपि 'बाह्लीकदेशं मद्रांश्च कुत्सयन् वाक्यमब्रवीत् । बहिष्कृता हिमवता गङ्गया च बहिष्कृताः । सरस्वत्या यमुनया कुरुक्षेत्रेण





चापि ये । पञ्चानां सिन्धुषष्ठानां नदीनां ये पुराश्रिताः । तान् धर्मबाह्यानशुचीनि'त्यारभ्य 'अरहा नाम बाह्लीका' इत्येतत्पर्यन्तं बाह्लीकस्यैव प्रकृततया बाह्लीकशब्दनिर्वचनार्थमेवोक्तवाक्यप्रवृत्तिसिद्ध्या पूर्वत्राप्रकृतबाह्लीकशब्द-निर्वचनस्यासङ्गतत्वेन तत्परतया अयुक्तायाः स्वीकारायोगात् । अत एव तेषां त्रयोदशसुता भवितारोऽथ बाह्लीका इति द्वादशस्कन्धप्रथमगतभागवतवाक्यटीकायां 'बाह्लीकाः बाह्लीकदेशपतय' इति व्याख्यातम् । एवं 'पाञ्चाल-बाह्लीका अवर्धन्ते'ति मणिमञ्जरीव्याख्यानेऽपि बाह्लीकशब्दस्य देशतदधिपतिवाचित्वमित्युक्तिश्च । लेखकदोषेण तत्तत्पुस्तकेषु क्वचिद्बाह्लीका इति पवर्गतृतीयस्य वाह्लीका इति याद्यष्टकान्तर्गतचतुर्थपाठेऽपि निर्वचनपरवाक्ये बहिश्च नाम बाह्लीकश्च विपाशायामित्येव पाठसत्त्वेन बहिकश्च बहीकश्चेति पाठस्य शिष्यद्वारा ज्ञातस्य भ्रान्ति-मूलकतया लेखनायोग्यत्वेन तन्मूलकविरोधोद्भावनस्य सुतरामयोगाच्च एतन्निर्वचनपरवाक्यादुत्तरत्रापि भारते 'बाह्लीका नाम ते जनाः बाह्लीकेषु निशामितमि'त्यादौ बाह्लीकशब्दस्यैव प्रयोगाच्च भवत्कल्पितपाठे वाहीकस्यैव बाह्लीकस्यापि वहीकपुत्रत्वमिति बाह्लीकस्यैव वाहीकस्यापि बाहीकपुत्रत्वमिति च कल्पनायातश्च । अन्यथा वहीकपुत्रस्य बहीकपुत्रत्वस्याप्यनुपपत्त्या तयोरपत्यमित्यस्यानुपपत्तिप्रसङ्गात् । तथा च वाहीकशब्दविषये भारतविरोधवद्बाहीकशब्दविषयेऽपि भारतविरोधप्रसङ्गः । तथा हि । ओदिति सूत्रीयैवमप्यगौर्गौः समपद्यत गौरभवत् अत्र प्राप्नोति । एवं तर्हि गौणमुख्ययोर्मुख्ये सम्प्रत्ययः । तद्यथा गौरनुबध्यः । न वाहीको बध्यते कथं तर्हि वाहीके वृध्यात्वे भवतः गोस्तिष्ठति गामानयेति । अर्थाश्रये एतदेवं भवति । शब्दाश्रयं च शब्दमात्रे तद्भवति शब्दाश्रये च वृद्ध्यात्वे इत्येतद्भाष्यसम्बन्धिकैय्यटस्य व्याख्यानावसरे प्रदीपविवरणे भाष्यकैय्यटयोर्बाहीक इति पवर्गतृतीयस्य पाठोऽस्तीति सिद्धं कृत्वा विहितकर्मभ्यो बहिर्भूतो बाहीकः बहिषष्टिलोपश्चेति ईकक्टिलोपौ इति व्याख्यानेन बाहीकशब्देऽप्यर्थान्तरसिद्ध्या तस्यापि भवत्कल्पितभारतवाक्यविरोधेनानुपपत्तिप्रसङ्गः । 'दित्यदि-त्यादित्यपत्युत्तरपदाण्ण्य' इत्येतच्चतुर्थप्रथमपादसूत्रे । बहिषष्टिलोपो यञ् वेति वार्तिकं तदपन्यस्य वृत्त्यादौ बाह्यं ईकक्च वाहिक इत्युदाहरणाच्च किति चेति सूत्रेणादिवृद्धिः । वाहीक इति याद्यष्टकान्तर्गतवकारपाठ एव भाष्येऽपीत्यङ्गीकारे च प्रकृतोपयोगितया अर्थ उक्त इति विवरणविरोधः । तत्पाठपक्षेऽपि वहते वृद्धिश्चेत्युणादि-सूत्रेण वहतेरीकक्प्रत्यये वृद्धौ च वाहीकशब्दनिष्पत्त्याकारं वहतीति वाहीक इति व्युत्पत्तिप्राप्त्योक्तभारत-विरोधेन तस्याप्यनुपपत्तिप्रसङ्गः । उक्तं च रमायामुणादिचतुर्थपादे वहते वृद्धिश्च वाहीको गौर्वाहश्चेति तस्मा-द्भारतीयत्वेन वहिकश्च वहीकश्चेति पाठकल्पनवत् तद्विरोधाभिधानं च अज्ञानमूलम् ।

यदपि तद्विरोधोपपादनाय तत्रापत्यार्थेऽण्प्रत्ययान्तो वाहीकशब्दः पुरुषविशेषवाचक इत्युक्तत्वादिति प्रतिपादितम्, तत्कथं परस्य न लज्जाकरमिति स एव जानातु । न तु त्वदुदाहृते वहीकश्चेति श्लोके तथोक्तिरस्ति । एतेनैव शक्तिग्राहकेत्यादिकं लक्षणापक्षदूषणं गर्भस्रावेणैव निरस्तम् । पूर्वोक्तरीत्या बाह्लीकशब्दस्यैव भारते निरुक्त्या वाहीकशब्दस्य तत्रानिरुक्त्या मञ्चादिशब्दानामिव वाहीकशब्दस्य पुरुषे रूढिलक्षणाङ्गीकारेऽपि बाधका-भावात् । अत एव स्वोक्तशक्तिग्राहकभारतबलेन वाहीकशब्दस्य पुरुषवाचकत्वमित्यभिप्रायः प्राचीनटिप्पणी-काराणामिति वचनं च 'स्वयं नष्टः परं नाशयती'त्याभाणकमापन्नम् । अबद्धाभिप्रायं स्वपरमगुरुयदुपत्याचार्य-





प्रमुखेषु कल्पयतस्तद्द्रोहापातश्च । तस्मादत्यन्ताज्ञानमूलकमेव भारतवाक्यविरोधोद्भावनमित्यलम् । वाहीकशब्दस्य देशविशेषवाचकत्वं तु एङ्प्राचां देश इति प्रथमाद्यपादान्त्यसूत्रे वाहीकग्रामेभ्यश्चेति चतुर्थद्वितीयगतसूत्रे अन्तर्घनो देश इति तृतीये तृतीयगतसूत्रे जनपदे लुबिति चतुर्थद्वितीयसूत्रे अन्यत्रापि तत्तत्सूत्रे काशिकामञ्जर्याद्युक्तिरीत्या स्पष्टमवगम्यते । उक्तं च उक्तसूत्रेषु देवदत्तो नाम वाहिकग्रामः सैपुरस्को(?) नगरं च वाहीकग्रामौ । आराणो नाम वाहीकग्रामः । कास्तीरं नाम वाहीकग्रामः । दाशारूप्यं नाम वाहीकग्रामः इत्यादि । अन्तर्घनो देशे वाहीकग्रामविशेषस्य संज्ञेयमिति सिद्धान्तकौमुद्यामपि हनहिंसेत्येतद्धातुवृत्तौ तु अन्तर्घन इति वाहीकेषु देशे विशेषस्य संज्ञेत्युक्तम् । अत्राधिकं प्रमेयं प्राकृतवाहीकशब्दविचारे तत्र तत्र उपयुक्तमधिकं च प्रमेयं अस्मत्कृतउमर्जीकबौद्धधिक्कारे ज्ञेयम् इति सकलमकलङ्कम् ।

एतत्प्रसङ्गे बहिषष्टिलोपो ईकक्चेति वार्तिक इति राघवेन्द्री शोध्या । भेदाविमौ चेत्युदाहृतकाव्यसूत्रस्य वृत्तौ गौर्वाहीक इत्यत्रेति प्रक्रम्यात्र हि स्वार्थसहचारिण इत्यादिना वादिमतप्रदर्शनानुसारेण मूलेऽत्र स्वार्थसहचारिण इत्यादिना मतोपन्यासः । वृत्तौ केचिदन्य इत्येवोक्तेऽपि दोषस्पष्टतायै तदसदित्यादिना दूषणप्रदर्शनम् । साहित्यदीपिकायां अत्र वादिनां प्रवृत्तिनिमित्ते विवादोऽस्ति तं दर्शयितुमाहेत्याद्युक्तम् । तदनुसारेणाह **अत्र वादिनामिति** । टीकान्तरे तु एकदेशिमतं दूषयितुमुपन्यस्यतीत्यवरोऽस्ति । व्यक्तिरूपार्थसहचारित्वं जाड्यादीनां न सम्भवतीत्यतो जातिरूपार्थपरतया स्वार्थपदं व्याचष्टे **गोत्वेति** । अत्र हि स्वमतानुसारेण विभागसमर्थनाय प्रवृत्तेन स्वार्थसहचारिगुणलक्षणया वाहीके वृत्तौ लक्षणातो भेदाभावप्रसङ्ग उच्यते । तत्र ये वादिनो गुणलक्षणामभ्युपयन्ति ते लक्षणागौण्योर्भेदमुपेत्य शक्यसम्बन्धरूपलक्षणास्वरूपं चोपेत्यैव तथाप्युपयन्तीत्यतः तान्प्रति भेदाभावापादनं युक्तमित्याशयेनाह **स्वार्थसहचारीति** ।

यद्यपि काव्यप्रकाशकृन्मते मुख्यार्थसम्बन्धस्य लक्षणालक्षणत्वेऽपि लक्षणाया गौणी शुद्धा चेति रूपतया गौण्या लक्षणापेक्षया भेदो नास्ति तथापि शुद्धलक्षणापेक्षया गौण्याख्यलक्षणाया भेदः वर्तत एवेति तन्मतेऽपीदं दूष्यमेवं । अत एव सादृश्याद्गौणौ सम्बन्धान्तरतः शब्दावित्युपाधिकीर्तनम् । अस्मिन्पक्षे प्रवृत्तिनिमित्तस्य लक्ष्यमाणत्वमित्यादि साहित्यदीपिकायाम् । लक्ष्यतावच्छेदके निमित्तत्वासम्भव इति टीकान्तरे च लक्ष्यतावच्छेदकस्य प्रवृत्तिनिमित्तायाः अभावादिकं प्रातिपदिकमस्ति । तन्मध्ये व्यधिकरणत्वरूपदोषस्य गोशब्दस्येत्युत्तरमूले नोक्तिरस्त्येव । प्रवृत्तिनिमित्तत्वस्य शक्यत्वे शक्यवृत्तित्वे च सति स्वभिन्नशक्यानधिकरणत्वरूपतया लक्ष्यमाणगुणानां लक्ष्यतावच्छेदकभूतानां शक्यत्वाद्यभावेन प्रवृत्तिनिमित्तत्वायोगः । गौशब्दस्यासङ्केतितवाहीके शक्तिकल्पनं चेति दूषणद्वयमप्युपलक्षणया अत्राभिप्रेतं बोध्यम् । गौण्या इति मूलस्य लक्षणायामिव जाड्यादिषु सम्बन्धपुरस्कारेण वृत्त्यङ्गीकारे साक्षात्परम्परासम्बन्धौदासीन्येन शक्यसम्बन्धं निमित्तीकृत्य वृत्तिरिति लक्षणालक्षणस्यैव प्राप्त्या सादृश्यनिमित्तकत्वाप्राप्तेर्भेदाभावप्रसङ्गादित्यर्थपरतयापि योजना स्वार्थसहचारीत्यनेन कृतेति गम्यते । **सम्बन्धेति** । गुणलक्षणार्थमेव सम्बन्धस्यापेक्षितत्वादिति भावः ।





उपलक्षणं चैतत् । लक्ष्यमाणगुणानां निमित्तत्वे सादृश्याद्गौणावित्युक्तसादृश्यनिमित्तकत्वोपाध्यभावप्रसङ्गेन इत्यपि द्रष्टव्यम् । एवं काव्यप्रकाशरीत्या स्वरीत्या चैतद्दूषणं पुनः शोध्यमस्ति । व्यधिकरणत्वमुपपत्तिशून्यत्वादित्यनेनोक्तं मूले, तदुपपादयति **प्रवृत्तिनिमित्तस्येति** । गुणमात्रलक्षणायां गुणिलाभेन स्यादित्यतः टीकान्तरानुसारेण तल्लाभं पूरयति **परार्थस्त्विति** । **नानेकेति** । लक्षणाद्वयप्रसङ्गेऽपि न तत्र प्रसङ्ग इत्यर्थः ।

न तु परार्थोऽभिधीयत इति वृत्तिवाक्यानुसारेण शेषं पूरयति **न त्विति** । आक्षेपेणैव वाहीकादिशब्दादेव गुणलाभात् अन्यलभ्ये चाभिधाकल्पनावैय्यर्थ्यादिति भावः । **अभेदरूपसम्बन्धेति** । अत्र स्वार्थसहचारिगुणाभेदरूपसम्बन्धस्यैकदेशोत्कीर्तनलक्ष्यगुणानां लक्ष्यगतगुणैरिति शेषपूरणेन व्याख्यानमभिप्रेतं न तु लक्ष्यकलक्ष्ययोरेवाभेदस्य निषेधनं गुणानां भेदस्येति मूलानुसारेण वक्ष्यमाणभेदसाधकप्रमाणोपन्यासानन्तरं ततश्च इत्यस्य शङ्किताभेदनिराकरणपरतयैव योज्यतायाः स्पष्टत्वात् उत्तरत्र लक्ष्यकलक्ष्ययोः सम्बन्धान्तरनिराकरणं तु पूर्वमाशङ्कितस्वार्थसहचारिगुणाभेदरूपसम्बन्धे परेण विवक्षया पोषिते अस्तु तावता गुणानां सादृश्यरूपो भेदः तावता मितस्य सम्बन्धत्वं वक्तुं शक्यमिति प्राचीनसम्बन्धमेव विकल्प्य विशिष्यनिराकरणरूपमिति न स्वतन्त्रता ज्ञेयेति द्रष्टव्यम् ।

गुणाभेदेनेत्यस्य गुणसाजात्येनेति टीकान्तरव्याख्यानमर्थतो दूषयति **न च मुख्येति** । लक्षकगतगुणानां लक्ष्यगतगुणैरिति शेषः । **यादृशतादृशेति** । सजातीयत्वरूपेत्यर्थः । अस्तु तावता गुणानां सादृश्यं तथापि लक्षकलक्ष्ययोः सम्बन्धस्तु दुर्वचन एव, लक्षणभूतगोशब्दार्थस्य लक्ष्येण सम्बन्धो हि तल्लक्षकगुणतुल्यगुणत्वं वा लक्ष्यगुणतुल्यगुणवत्वं वा । नाद्यः, तस्य गत(?)लक्ष्यगतत्वेऽपि लक्षके गोशब्दार्थेऽभावात् । न द्वितीयस्तस्य लक्षके सत्त्वेऽपि लक्ष्येऽभावादित्याह **तत्तुल्येति** । **यादृशतादृशाभेदस्येति** । गुणानां सजातीयत्वरूपाभेदस्येत्यर्थः । उभयत्रैकस्यैव सम्बन्धस्यानिर्वचनेऽपि सम्बन्धद्वयाङ्गीकारान्नानुपपत्तिरिति शङ्कते **ननु लक्षकस्येति** । वाहीके वृत्तौ निमित्ताभावादित्येतन्न यथाश्रुतं समञ्जसम् । आक्षेपादेव वाहीकलाभ इति शङ्कित्रा वृत्तेरनङ्गीकारादित्यतस्तद्योजयति **परार्थस्येति** । उक्तं च साहित्यदीपिकायां किञ्च जाड्यादिगुणमात्रप्रतीतौ गौ जाड्यमिति स्यादिति । टीकान्तरेऽपि । अत्र परार्थस्याक्षेपलभ्यत्वे समानाधिकरण्यानुपपत्तिरिति अस्वरस इति । यद्यपि गुणानां लक्षणया प्रतिपाद्यत्वेऽपि अभेदेन वाहीकान्वय इत्यङ्गीकर्तुं शक्यं तथापि अभेदस्य सर्वैरनङ्गीकृतया गौर्वाहीक इति शब्दमर्यादया गुणभेदबोधस्य चानङ्गीकाराच्च तथा वक्तुं न शक्यम् । भेदेनान्वयोऽप्यनुपपन्न एव भेदोपस्थापकविभक्तिराहित्येन नामार्थयोर्भेदान्वयस्य स्वरूपायोग्यत्वादित्याशयः ।

**स०व्र०— गौर्वाहीक इति** । वाहीको नाम देशविशेषः । तत्रत्यः पुरुषः वाहीक इत्याहुः । **स्वार्थसहचारिण इति** । गोत्वसहचारिण इत्यर्थः । अत्र किं गोशब्दस्य स्वार्थसहचारिगुणेषु या वृत्तिरङ्गीकृता सैव गौणीत्यङ्गीक्रियते किं वा लक्ष्यमाणगुणनिमित्तकं वृत्त्यन्तरमिति विकल्पमभिप्रेत्याद्यं दूषयति **गौण्या इति** । द्वितीयं दूषयति **गोशब्दस्येति** । व्यधिकरणत्वादिति भावः । **वाहीके वृत्ताविति** । गङ्गादिशब्दानां लक्ष्येषु





तीरादिष्विव गोशब्दस्यापि लक्ष्यमाणगुणेष्वेव वृत्तिः स्यान्न वाहीक इति भावः । वस्तुतस्तु लक्षणतो भेदाभावप्रसङ्गादित्यस्य लक्षितलक्षणातो भेदाभावप्रसङ्गादित्यर्थः । दूषणान्तरमाह **गोशब्दस्येति** । तथा च विशेषोत्त्युपरि कथं विकल्प इति शङ्कानवकाशः । **गुणानां भेदस्य साधयिष्यमाणत्वादिति** । 'भिन्नाश्च भिन्नधर्माश्चे'त्यादिनेति शेषः । **वाहीके वृत्तौ निमित्ताभावाच्चेति** । पुनस्तेन गुणी लक्ष्यते चेत् लक्षणातो भेदाभाव इति कथितो दोष एवेति भावः ।

**विठ्ठल०— वाहीक इति** । मूर्ख इत्यर्थः । भारवाहको वा । यद्यपि भारवाहके पुंसि भारिकशब्द एव 'भारवाहस्तु भारिक' इत्यमरकोशः प्रसिद्धः, तथापि अदन्ताद्वाहशब्दात् भारो भारवाहनमस्यास्तीत्यर्थे अत इति ठनाविति ठन्प्रत्यये ठस्येक इति इकादेशे च निष्पन्नः वाहीकशब्दः भारवाहकस्य वाचक इति ध्येयम् । केचित्तु वाहिको नाम देशविशेषः, तत्रस्थः पुरुषो वाहीक इत्याहुः । गौर्वाहीक इत्यत्र न गोशब्दो गौण्या वृत्त्या वाहीकपरः किं तु गोसहचारिणां गुणानामेव लक्षक इत्येकस्य मतमाशङ्क्य निराह **अत्रेति** । **लक्ष्यमाण इति** । गोशब्देनेति शेषः । **गोशब्दस्य वाहीके वृत्ताविति** लक्षितलक्षण इति तात्पर्यं एतच्चाग्रे स्पष्टीभविष्यति । **गौण्या इति** । मुख्यार्थगतगुणयोगेन वृत्तेरपि लक्षणत्वाङ्गीकार इति ग्राह्यम् । **उपपत्तिशून्यत्वादिति** । गोशब्देन लक्ष्यमाणानां गोगतानां गुणानां स्वलक्षकशब्दस्य वाहीके वृत्तौ निमित्ततया अनुपपन्नत्वादित्यर्थः । गोशब्दस्य वाहीकगतगुणलक्षकत्वमित्यपरमाशङ्क्य निराकरोति **स्वार्थसहचारीति** । **गुणानां भेदस्येति** । भिन्नादभिन्नधर्माश्चेत्यादिना प्रतिपदार्थं गुणानां भेदस्य साधयिष्यमाणत्वादित्यर्थः । **वाहीके वृत्ताविति** । गोशब्दस्य स्वार्थगतगुणभेदेन परार्थगतगुणलक्षणायां गोशब्दस्य वाहीकगतगुणेषु वृत्तौ निमित्तं संपादितं स्यान्न तु वाहीके गौणशब्दवृत्तौ निमित्तं किमपीति भावः ।

**चषकः— गौर्वाहीक इति** । वाहीको नाम देशविशेषः । तथा चोक्तं कर्णपर्वणि 'पञ्चानां सिन्धुषष्ठीनामन्तरं ये समाश्रिताः । वाहीका नाम ते देशा न तत्र दिवसं वसेत्' इति । एतेन धर्मबहिर्भूतत्वात् वाहीका इत्युक्तं भवति । शतद्रुः, वियाशी, इरावती, वितस्ती, चन्द्रभागेति पञ्च नद्यः । सिन्धुनदस्तु षष्ठः तन्मध्यपतितो देशो वाहीक इति तद्व्याख्यातारः । व्युत्पत्त्यन्तरं तु तत्रैव दर्शितम् । 'वहिकश्च वहीकश्च विपाशायां पिशाचकौ । तयोरपत्यं वाहीकाः नैषा सृष्टिः प्रजापतेरि'ति । एतच्च विवेचनं वाहीकग्रामेभ्यश्चेत्यादावुपयोक्ष्यत इति पाणिनीयाः । एवं च तत्रभवः पुरुषोऽपि वाहीक इति ज्ञेयम् । **स्वार्थसहचारिणः** स्वपदोपात्तगोशब्दप्रवृत्तिनिमित्तगोत्वसमानाधिकरणाः । गोत्वसमानाधिकरणगुणेषु गोशब्दस्य या वृत्तिरूरीकृता सैव गौणीत्युपेयते । लक्ष्यमाणगुणनिमित्तकान्यत्र वृत्तिर्वेत्यभिसंहितकल्पद्वयीघटकाद्यकल्पं पराचष्टे **गौण्या इति** । द्वितीयं प्रतिविधत्ते **गोशब्दस्येति** । निमित्तनिमित्तिनोः सामानाधिकरण्यविरहादिति भावः । लक्षितलक्षणायामेव गौण्या अन्तर्भावमिच्छतां मतं न्यक्कुरुते **लक्ष्यमाणेति** । पदार्थगता गुणा एव लक्ष्यन्ते तदाश्रयीभूता व्यक्तिस्तु आक्षिप्यत एवेति मतान्तरं दुदूषयिषुरनुवदति **स्वार्थेति** । **साधयिष्यमाणत्वादिति** । वैशेषिकपरीक्षायां 'भिन्नाश्च भिन्नधर्माश्चे'-





त्यादिनेति पूरणीयम् । **वाहीका इति** । गङ्गादिपदानां तीरादिपदसामानाधिकरण्यवत् वाहीकपदार्थे गोपद-निरूपितवृत्त्यभावेऽपि यत्र जाड्यमान्द्यादौ वृत्तिः तद्वाचकपदसामानाधिकरण्यमेव गोपदे प्रसज्येत न तु वाहीक-पदसामानाधिकरण्यमिति भावः ।

**॥ इति लक्षणावृत्त्यभावनिरासः ॥**

* * *

**॥ तत्र लक्षणायाः द्वैविध्यम् ॥**

**२९ सु०— लक्षणाऽपि द्वेधा, रूढारूढभेदात् । तत्राद्या यथा, राजाऽयं गच्छतीति । द्वितीया यथा, गङ्गायां घोष इति ॥**

**केचिदभिधेयाविनाभूतप्रतीतिर्लक्षणोच्यत इत्याहुः, तेषां मञ्चाः क्रोशन्तीत्यादौ लक्षणा न स्यात्, स्याच्च शब्दात्प्रतीतेन लिङ्गेनानुमितार्थस्य । अथाविनाभावोऽत्र सम्बन्धमात्रम्, तथाऽपि लक्षितलक्षणायामव्याप्तिः; न हि तत्राभिधेयसम्बन्धिनी वृत्तिः, किन्तु लक्षितसम्बन्धिनी; यथा प्राग्विरुद्धा इदानीं परस्परमेकीभूता इति । परम्परया अयमर्थः अभिधेयसम्बन्धीति चेत्, तर्हि किमनया क्लिष्टकल्पनया; प्रयोगयुक्तसम्बन्ध इति यथोक्तमेवास्तु ।**

**परि०**— न्यायविवरणोक्तं विवृण्वंस्तत्रोक्तविभागतदुदाहरणान्याह **लक्षणापि द्वेधेत्यादिना** । **राजाऽयं गच्छतीति** । शिबिकादावुपविष्टेऽपि राजनि दृष्टेऽपि राजवाहकेषु गच्छत्सु राजाऽयं गच्छतीति प्रयोगो लौकिकानामित्यर्थः । गर्वेण भिक्षुकादौ राजाऽयं गच्छतीति लौकिकप्रयोगो यथेत्यर्थ इत्येके । ननु क्रोशनसमये मञ्चपुरुषाविनाभावोऽस्तीत्यतो दोषान्तरमाह **स्याच्चेति** । **शब्दात्** धूमोऽस्तीति शब्दात् । **प्रतीतेन** धूमरूपलिङ्गेनानुमितार्थस्य वह्नेः धूमशब्दो लाक्षणिकः स्यादित्यर्थः । **सम्बन्धमात्रमिति** । मुख्यार्थेन सह लक्ष्यार्थस्येति योज्यम् । **एकीभूता इति** । राजगतैक्यवाचिना एकीभूतशब्देन तेषां बुद्धीनामैक्यं लक्षित्वा लक्षितमत्यैक्यसम्बन्धिन्येव विषयैक्ये लक्षणा न तु मुख्यार्थराजैक्यसम्बन्धिनीति भावः । **इति यथोक्तमिति** । मुख्यार्थसम्बन्धनिमित्ता वृत्तिर्लक्षणेति यथाचार्योक्तमेवेत्यर्थः ।





**गु०दी०— राजाऽयं गच्छति** इत्यत्र राजकटकेऽपि राजशब्दप्रयोगादित्यर्थः । **मञ्चाः क्रोशन्तीत्यादौ** इत्यत्र मञ्चपदलक्ष्यमञ्चस्थपुरुषाणां मञ्चाविनाभावादित्यर्थः ।

**यादु०— राजाऽयमिति** । सपरिवारस्य राज्ञो गमनदशायां राजाऽयं गच्छतीति बहुलः प्रयोगोऽस्ति । तत्र राजाऽराजसमुदाये राजशब्दस्य रूढलक्षणेत्याहुः । **प्रतीतिरिति** । प्रातिपदिकमित्यर्थः । ननु क्रोशनसमये मञ्चपुरुषयोरविनाभावोऽस्त्येवेत्यस्वरसादाह **स्याच्चशब्दादिति** । **यथोक्तमेवेति** । तत्र च प्रयोगशब्देन सामर्थ्य-मात्रस्य विवक्षितत्वेनोक्तदोषपरिहारः पूर्वमेवोक्त इति भावः ।

**वं०प०— राजाऽयमिति** । यथा कथञ्चिद्रथ्यापुरुषं दृष्ट्वाऽयं महाराजो गच्छति । अस्य का संसार-चिन्ताऽस्तीत्यर्थः । ततश्चाप्रयोजनादियं रूढलक्षणेति ज्ञेयम् । **अभिधेयेति** । गङ्गापदाभिधेयः प्रवाहः तदविनाभूतं यत्तीरादि **तत्प्रतीतिः** तत्प्रतीतिजनिका शब्दवृत्तिरित्यर्थः । **मञ्चा इति** । मञ्चस्थपुरुषाणां मञ्चपदाभिधेय-मञ्चाविनाभावाभावादित्यर्थः । लिङ्गस्याभिधेयत्वोपपादनाय शब्दात्प्रतीतेनेत्युक्तम् **अथेति** । तथा च मञ्चाः क्रोशन्तीत्यत्र न व्यभिचारः । तत्राप्यभिधेयमञ्चसम्बन्धस्य पुरुषे सत्त्वादित्यर्थः । अत्र स्याच्चेत्युक्तदूषणे सत्येव दूषणान्तरमाह **तथाऽपीति** । **तदर्थं** उत्स्रष्टुम् । **अत्र** वृत्तिकारणचिन्तायाम् । प्रयोजनं न वक्तव्यमित्यर्थः ।

**आनन्दः— राजाऽयं गच्छतीति** । **यथेति** । गच्छन्तीं सेनां दृष्ट्वा तत्र राजा गच्छतीति प्रयोगो दृष्ट इति भावः । **तेषां मञ्चा इति** । मञ्चशब्दाभिधेयस्य पुरुषैरविनाभावो नास्तीति भावः । **लक्षितसम्बन्धिनीति** । लक्षितसम्बन्धिनीत्यर्थः । **यथा प्राग्विरुद्धा इति** । अत्र हि विषयैक्येन मत्यैक्यं लक्षिते मत्यैकेन तु मतिमता-मैक्यं लक्ष्यत इत्यर्थः ।

**श्रीनिधि०— राजायं गच्छतीति** । सेनायामिति भावः । **अविनाभूत्यहशब्देनापेक्ष्यत इति** । नन्वपेक्षायाश्चेतनधर्मत्वात्कथमिदम् । प्रयोक्तरि लक्षणयेदमिति चेन्न । नापि प्रयोक्तेत्यस्य वैयर्थ्यापातात् इति चेत् न । शब्दे शक्तिमुख्यसम्बन्धादिवन्नियतसामग्री न भवतीत्यत्र तात्पर्यात् । **अविनाभूतप्रतीतिरिति** । अविनाभूता च सा प्रतीतिश्चेत्यर्थः । **तथापि लक्षितलक्षणायामिति** । शब्दात्प्रतीतेन लिङ्गेनानुमितार्थे अतिव्याप्तिदोषे सत्येव दोषान्तरमितीदम् । **यथोक्तमेवेति** । उक्तप्रकारानतिक्रमेणेत्यर्थः । 'यथा गच्छसि चेत्कान्त पन्थानः सन्तु ते शिवाः । ममापि जन्म तत्रैव भूयाद्यत्र गतो भवानि'त्यत्र तात्पर्यवृत्तिस्तु विषं भुंक्ष्वेत्यत्र । अनयोर्भेदश्च झटित्येव विपरीतलक्षणया विवक्षितार्थबोधस्तात्पर्यवृत्त्या किञ्चिद्विमर्शपूर्वं ध्वनि-तार्थबोधस्तु व्यञ्जनवृत्त्येत्याहुः ।

**शे०वा०— राजाऽयमिति** । सपरिवारस्य राज्ञो गमनदशायां राजाऽयं गच्छतीति बहुलः प्रयोगोऽस्ति । तत्र राजाऽराजसमुदाये राजशब्दस्य रूढलक्षणेत्यर्थः । **अभिधेयाविनाभूतेति** । अत्र ज्ञानरूपैव लक्षणेति प्राचीन-





मतानुसारेण ज्ञानम् । नव्यमतानुसारेण प्रतीयते अनेनेति प्रतीतिर्व्यापार इति प्रतीतिशब्दः प्रतीतितद्धेतु-व्यापाररूपोभयपरो विवक्षितः । तथा च अभिधेयाविनाभूतोपस्थितिर्वा तद्धेतुभूतः शक्यसम्बन्धरूपव्यापारो वा लक्षणेति पर्यवसितं भवति । **मञ्चाः क्रोशन्तीत्यादाविति** । आदिपदेन कुन्ताः प्रविशन्तीत्यादेर्ग्रहणम् । मञ्चपुरुषयोः कुन्तकुन्तिनोश्चाविनाभूतत्वाभावात् पुरुषादिप्रतीतिरूपाया तद्धेतुमञ्चपुरुषादिसम्बन्धरूपाया वा लक्षणायामव्याप्तिरिति भावः । ननु क्रोशनसमये मञ्चपुरुषयोः प्रवेशसमये च कुन्तकुन्तिनोरप्यविनाभावो-ऽस्तीति नाव्याप्तिरित्यस्वरसादाह **स्याच्चेति** । तथा च धूमोऽस्तीति वाक्यबुद्धधूमजन्यवह्न्यनुमितौ तद्धेतुव्यापारे चातिव्याप्तिरिति भावः । **अथेति** । यद्यपि सम्बन्धमात्रविवक्षायामप्यतिव्याप्तिरेव धूमवह्न्योरपि सम्बन्धसद्भावेन वाक्यबुद्धलिङ्गजन्यलिङ्गिप्रतीत्यादेरप्यभिधेयसम्बन्धवत् प्रतीत्यादित्वस्य सत्त्वात्तथाऽप्यव्याप्तिमात्रपरिहारार्थोऽयं यत्न इति द्रष्टव्यम् । **लक्षितलक्षणायामिति** । न च लक्षितलक्षणायां लक्षितसम्बन्धिनि वृत्तावप्यभिधेय-सम्बन्धिनि वृत्तिरविकलैव लक्ष्यस्यापि बोध्यत्वेनाभिधेयत्वात् । रूढिलक्षणानुरोधेन मधुमत्यामभिधेयशब्दस्य बोध्यमात्रपरताया एवाभिधानात् । ततश्च बोध्यसम्बन्धिनि वृत्तेस्तत्रापि सत्त्वान्नाव्याप्तिरिति वाच्यम् । अभिधेय-शब्दस्य मुख्यार्थपरत्वाश्रयणेनाव्याप्तेरभिधानात् । वस्तुतस्तूक्तविवक्षायामप्यतिव्याप्तावेव तात्पर्यमिति बोध्यम् । **किमनया क्लिष्टकल्पनयेति** । अविनाभावशब्दस्य लक्ष्येण सह परम्परासम्बन्धघटकत्वविवक्षायां नियतसम्बन्ध-रूपाविनाभावांशेन सम्बन्धेनैव तद्घटनान्नियमांशवैयर्थ्यमिति भावः ।

**वां०र०**— अविनाभूत इति करणोक्तिः सम्प्रदायमते लक्ष्यार्थोऽपि स्थितिर्वेति सारबोधिन्यनुसारेणाह **अत्र ज्ञानरूपैवेति** । साहित्यदीपिकायां प्रतीतिः प्रत्यायकत्वमित्युक्तं तत्र व्यापारप्राधान्यविवक्षेत्यतो न दोषः । **कुन्ता इति** । केशविशेषाः कुन्ताः । **मञ्चेति** । मञ्चपदेषु तत्स्थपुरुषाणां, कुन्तपदेन तद्वतां लक्षणेति भावः । **अविनाभूतत्वाभावादिति** । मञ्चं विहायान्यत्र पुरुषगतौ कुन्तानां कृन्तनेनापगमे च सम्बन्धाभावादित्याशयः । क्रोशनसमये मञ्चपुरुषयोरविनाभाव इति तर्कताण्डवानुसारेण शङ्कानिराकरणपरतयोत्तरवाक्यमवतार्य व्याचष्टे **ननु क्रोशनेत्यादिना भाव इत्यन्तेन । धूमोऽस्तीति वाक्येति** । अभिधेयाविनाभूतेत्यत्राभिधेयेनाविनाभूतं नियतसम्बन्धवत् तत्सम्बन्धनिरूपकमिति यावत् । तेन धूमाविनाभूतत्वं च वह्नेर्युक्तमिति ज्ञेयम् । ननु यदा शब्देनाभिधेयाविनाभूतार्थप्रतीतिः तदा शब्दस्य तत्र प्रतीयमानार्थे लक्षणेति पराशयः । वह्न्यनुमितिस्तु धूम-जन्येति न शब्दजन्या । टीकायामपि तथोक्तं **बुद्धधूमजन्यवह्न्यनुमितावित्ति** । तथा च कथं तत्रातिव्याप्तिरिति चेन्न । मूले हि शब्दात्प्रतीतेन लिङ्गेनानुमितार्थस्य लक्षणा स्यात् वाच्याविनाभूतार्थप्रतीतित्वादित्युक्तम् । तत्र शब्दव्यापारो धूमव्यापारश्चेति द्वयं स्वीकृतम् । शब्दो हि न धूममात्रप्रतिपादनाय प्रवृत्तस्तस्यानाकाङ्क्षिततया तत्प्रतिपादनवैय्यर्थ्यापत्तेः । किन्तु धूमप्रतीतिजन्येन धूमाग्न्योः व्याप्तेः । प्रष्टाऽवधृतत्वात् धूमेन वह्निं ज्ञास्यतीति धूमप्रतिपादनद्वारा वह्निसद्भावज्ञापनतात्पर्येणैव प्रवृत्त इति वह्निज्ञापनायापि शब्दव्यापारः इति सिद्धत्वात् । तथा च शब्दाद्धूमे ज्ञाते वह्नेः पृष्टत्वे सति धूमसद्भावप्रतिपादनेन पृष्टस्य वह्नेर्धूमस्य चाविनाभावादत्र धूमाविनाभूतो वह्निरेव वक्तृप्रतिपादितो भवतीति प्रष्टा जानात्येवेति वह्नितात्पर्यकधूमोऽस्तीति वाक्यपरम्परया





वह्न्यनुमितिजनकत्वात् पराशयत्वेन भवतु वर्णितस्य शब्देन यदा अविनाभूतार्थप्रतीतिः तदेत्युक्तार्थस्य तत्र सत्त्वेनातिव्याप्तेः सुलभत्वात् अन्ततः धूमोऽस्ति न वेति पृष्टेन धूममात्रतात्पर्यकधूमोऽस्तीति वाक्ये प्रयुक्ते धूमजिज्ञासायाः वह्निजिज्ञासाप्रयुक्तत्वेन प्रष्टा तद्वाक्यात् धूमसद्भावं विज्ञाय धूमाग्न्योर्व्याप्तिरवधृततया शब्दाज्ज्ञातेन वह्निमनुमिनोतीति धूमपरवाक्यमपि परम्परया अविनाभूतार्थप्रतीतिजनकमित्यतिव्याप्तिरिति । अथवा धूमोऽस्तीति वाक्यं धूमाग्न्युभयतात्पर्यकं अज्ञातवह्निधूमकेन वह्निसद्भावज्ञानेच्छुना वह्निरस्ति किमिति पृष्टो वक्ता धूमोऽस्तीत्याह । तत्रोभयतात्पर्याददौ धूमं विज्ञाय पश्चादविनाभावबलेन वह्निं च परम्परया शब्दादेव जानातीति सर्वसम्मतत्वात् । अत एव मुख्यार्थबाधे तद्योग इत्यत्रत्य-तद्योगशब्देन प्रमाणान्तरानुत्थापकसम्बन्धस्यैव ग्रहणमाश्रित्य तेन धूमपदाद्व्याप्तिसम्बन्धेन वह्निस्मरणे प्रसङ्गाभावः । तस्यानुमोत्थापकत्वादिति सारबोधिन्यामुक्तम् । उक्तं चान्यत्र वह्नितात्पर्यकत्वं धूमोऽस्तीति वाक्यस्य तत्तद्ग्रन्थेषु परैः न्यायामृते सत्यज्ञानादिवाक्यानामखण्डार्थतानुमानभङ्गेन ह्यग्निबोधनार्थस्य धूमोऽस्तीति वाक्यस्य न धूमे तात्पर्यमित्यस्याप्ययमेवाशयः । तर्कताण्डवे धूमोऽस्तीति वाक्यबुद्धेति वाक्यं तु एतट्टीकावाक्यप्रवृत्तिरूपमिति उक्त एव तस्यार्थः । इदं पुनरवशिष्यते तात्पर्यवृत्तेरतिरिक्ताया अभावाद्वाचकत्वस्य च प्रकृते योगात् कथं तात्पर्यमिति, तदपि न, अस्यातिप्रसङ्गस्य तात्पर्यवृत्त्यङ्गीकारिणः प्रत्येव क्रियमाणतया स्वसिद्धान्तावमर्शानिवसरात् । 'यथा क्रुद्धः पिता पुत्रं मरेत्याक्षेपपूर्वकमि'त्येतत् तृतीयानुव्याख्याव्याख्यावसरे तदर्थप्रतीत्यनुसारेण प्रयुक्तत्वरूपस्य तात्पर्यस्य लोकवेदसाधारणस्याङ्गीकारेण तस्य वाक्यस्य यथा न पुत्रमरणविधाने तात्पर्यं किन्तु स्वविहितकरणे तथा द्वेषेण स्मरणे मुक्तिर्भवतीत्यादि प्रतिपाद्ये इयं च व्यञ्जनावृत्तिरिति केचित् । तात्पर्यवृत्तिरित्यपरे, वाक्यलक्षणानुमानं चेत्याचार्या इति प्रतिपादनेन तात्पर्यस्यापि सद्भावाच्च । विशदं चैतत्कर्मनिर्णयरोट्यामित्यलम् ।

अथ मन्यसे साक्षाच्छब्दजन्याविनाभूतार्थप्रतीतिरिति वा वृत्त्यविनाभूतार्थप्रतीतिर्वेति विवक्ष्यत इति । तदसारम् । गङ्गादिशब्देनापि साक्षात्तीरप्रतीतेर्वा वृत्तिविचारावसरे वृत्त्या तत्प्रतीतेर्वा वक्तुमशक्यत्वात् । लक्षणालक्षणे यावद्दोषपरिहारोपयोगिविवक्षाकरणेन परोक्तलक्षणसमर्थनस्याग्रहातिरिक्तनिमित्तशून्यत्वाच्च । अत एव परम्परयाभिधेयसम्बन्धिनिवृत्तिर्लक्षणयैव लक्षणमन्ते प्रवृत्त्य तर्हि किमनया क्लिष्टकल्पनया । प्रयोगयुक्तसम्बन्ध इति यथोक्तमेवास्त्वित्येव मूले दूषणं वक्ष्यते न तु तत्र दोषान्तरपरिहारेण तत्समर्थनायासपूर्वकमधिकदोषान्वेषणं कृतम् । अन्यथा शक्यसम्बन्ध इत्यस्यापि शक्यधूमसम्बन्धस्य वह्नौ सत्त्वात् तत्र लक्षणाप्रसङ्ग इत्यादि दूषणायासपरिहारायासप्रसङ्ग इत्यलम् ।

**मधुमत्यामिति** । टीकान्तरे शक्येति व्याख्यानेऽपीति भावः ।

**स०व्र०— राजाऽयमिति** । सकलपरिवारसहितस्य राज्ञो गमनदशायां राजाऽयं गच्छतीति बहुलप्रयोगोऽस्ति । तत्र राजाऽराजसमुदाये राजशब्दस्य रूढलक्षणेत्यर्थः । **अविनाभूतप्रतीतिरिति** । अविनाभूत-





प्रत्यायकत्वमित्यर्थः । **स्याच्च शब्दात्प्रतीतेनेति** । इदं समव्याप्त्यभिप्रायेणेति बोध्यम् । **यथेति** । 'मञ्चाः क्रोशन्ति' इत्यत्र 'मञ्चस्थाः क्रोशन्ति' इत्येव प्रतीतेः, 'अयो दहति' इत्यादिवत् 'दहतीव' इत्यत्रेवार्थाप्रतीतेः, मञ्चपदस्य तत्र लक्षणावत् 'सर्वसम्बन्धिप्रतीतिविषया एकीभवन्ति' इति प्रतीत्यभावात् 'एकत्वाश्रय-विषयकप्रतीतिमन्तो भवन्ति' —इत्येव प्रतीतेः अनुभवसिद्धत्वात् 'एकीभवन्ति' इत्यस्यैव लक्षितलक्षणेति द्रष्टव्यम् । केचित्तु 'सर्व'शब्दस्यैव लक्षणा इत्याहुः ।

**स०ना०— प्रयोगयुक्तसादृश्यमिति** मूलसुधायां **केचित्तु अभिधेयाविनाभूतप्रतीतिरिति** । अभिधेया-विनाभूतप्रतीतिर्यदा तदा लक्षणेत्याहुः । लक्षणया सा प्रतीतिर्भवतीति यावत् । अयं भावः । वृत्तिर्द्विविधा मुख्यामुख्या चेति । आद्या शब्दनिष्ठा । द्वितीयार्थनिष्ठा । शब्दस्तु शक्तिवशादर्थं बोधयति । अर्थस्तु स्वस्या-न्वयानुपपत्तौ अर्थान्तरं लक्षयतीति । अभिधेयाविनाभूतेत्यत्र अभिधेयं अविनाभूतं येनेति विग्रहमाश्रित्य लक्ष्यलक्षणयोः व्याप्तिर्विवक्षिता । आहोस्वित् अभिधेयं अविनाभूतं सम्बद्धं येनेति सम्बन्धमात्रं विवक्षितं इति विकल्पं मनसि निधायाद्यं दूषयति **तेषामिति** । अस्मिन्प्रयोगे तेषां मते मञ्चरूपार्थस्य लक्षकत्वं न स्यात् इत्यर्थः । **स्याच्चेति** । लिङ्गे अविनाभावस्य सत्त्वाल्लिङ्गेन लिङ्गिप्रतीतिलक्षणयेति स्यात् इत्यर्थः । द्वितीयं शङ्कते **अथेति । परस्परं एकीभूता इतीति** । अयमत्र विवेकः । विरुद्धा एकीभूता इति तावत् आत्मप्रयोगोऽस्ति । स च न पदयोर्मुख्यार्थे नार्थवान् बाधात् । अतो कस्यचित्पदस्य लक्षणा आश्रितव्या । तत्र न तावत् विरुद्धपदस्य तेषामतिविषयार्थे लक्षणा सम्भवति । विरोधदशापन्नमतिविषयार्थलक्षणायां विरुद्धेष्विव तन्मति-विषयेष्वपि ऐक्यस्य बाधितत्वात् इदानींतनमतिविषयार्थलक्षणायामपि च्विप्रत्ययार्थस्य बाधो दुष्परिहरः । ततो अकामेनापि एकीभवन्तीति पदान्तर्गत-एकशब्दस्य एकविषयकत्वमतिमत्त्वरूपधर्मे लक्षणा वक्तव्या । कथं तर्हि इयं लक्षितलक्षणेति चेत् इत्थम् । एकस्य शब्दस्य विषयनिष्ठं ऐक्यमर्थः । तस्य प्रकृते अयोगात् तेन शब्देन एकार्थमविषयकत्वं मतिगतं च लक्षणया उपस्थाप्यते तदप्यनुपपन्नमिति तं परित्यज्य तत्सम्बन्धिविरुद्धपुरुषगत एकार्थविषयकमतिमत्त्वं लक्षणयैवोपस्थाप्यते । इयांस्तु विशेषः । यत्र शब्दः मुख्यार्थं प्रथमतः उपस्थाप्य तदनुपपत्तिदर्शने अर्थान्तरमुपस्थापयति सा लक्षणा । यत्र तु प्रथमतो मुख्यार्थमुपस्थाप्य तदनुपपत्तौ अर्थान्तरमुपस्थाप्य तस्याप्यनुपपत्तौ अर्थान्तरमुपस्थापयति **सा लक्षितलक्षणेति** । द्विरेफ-शब्देऽप्ययं विवेको द्रष्टव्यः । तथा हि यदा द्विरेफशब्द द्विरेफो गायतीति प्रयोगे स्वार्थं रेफद्वयमुत्थाप्य तदनुपपत्त्या भ्रमरशब्दमुपस्थाप्य तस्याप्यनुपपत्तौ तद्वाच्यमर्थं स्वयमेवोपस्थापयति । तदा लक्षितलक्षणा यदा तु द्विरेफशब्दः मुख्यार्थानुपपत्त्या भ्रमरशब्दं उपस्थाप्य कृती भवति । उपस्थितो भ्रमरशब्द एव स्वार्थं उपस्थापयति । तदा द्विरेफशब्दस्य लक्षणैव न तु लक्षितलक्षणा । भ्रमरशब्दस्य तु शक्तिरेव न लक्षणा नापि लक्षितलक्षणेति ।

**विट्ठल०— राजाऽयं गच्छतीति** । रथादावुपविश्य वर्तमाने रथगमनेन गच्छतीति प्रयोग इत्यर्थः । मुख्यार्थसम्बन्धे लक्षणेत्यस्माभिरभिहितम् । केचित्तु मुख्यार्थाविनाभाववति लक्षणेत्याहुः । तन्मतमाशङ्क्य





निराकरोति **केचिदिति**। ननु क्रोशनसमये मञ्चपुरुषाविनाभावोऽस्तीत्यतो दोषान्तरमाह **स्याच्चेति**। धूमोऽस्तीति शब्दात्प्रतीतेन धूमरूपलिङ्गेनानुमितार्थस्य वह्नेर्धूमशब्दो लक्षकः स्यादित्यर्थः। **यथोक्तमिति**। मुख्यार्थसम्बन्धनिमित्ता वृत्तिर्लक्षणेति यथोक्तमित्यर्थः।

**चषकः— राजाऽयमिति**। परिवारविशेषिते राज्ञि राजपदस्य रूढलक्षणेत्यर्थः। **अभिधेयाविनाभूतेति**। उपस्थितिर्लक्षणेति चिरन्तनमते प्रतीतिशब्दो भावसाधनः, तदनुपगन्तृनव्यमते च करणसाधन इति मतभेदेन तदुपस्थितिः तद्धेतुभूतशक्यसम्बन्धरूपव्यापारो वा लक्षणेत्यर्थः। **मञ्चाः क्रोशन्तीत्यादाविति**। आदिपदं यष्टीः प्रवेशयेत्यादिपरिग्राहकम्। तथा च मञ्चादिपदलक्ष्याभिमतपुरुषाणां तत्तत्पदाभिधेयाविनाभूतत्वराहित्येन तदुपस्थितेः तत्सम्बन्धस्य वा लक्षणात्वं न सङ्गच्छेतेति भावः। दशाविशेषे तत्राप्यविनाभावस्य सूपपादतया अरुचिमनुसन्दधान आह **स्याच्चेति**। द्रव्यं गुणवत्त्वादित्यादौ हेतुवाक्यावगतलिङ्गेनानुमीयमानद्रव्यत्वस्यापि तदविनाभूततया तद्गोचरानुमितौ तद्धेतुभूतव्यापारे वातिप्रसङ्ग इति भावः। **अथेति**। अव्याप्तिपरिजिहीर्षयैवायं ग्रन्थः प्रववृते नातिप्रसङ्गापनिनीषयेत्यवसेयम्।

**॥ इति लक्षणायाः द्वैविध्यम् ॥**

* * *

**॥ तत्र व्यञ्जनायाः वृत्त्यन्तरत्वाभावः ॥**

**३० सु०— व्यञ्जनं नामापरा वृत्तिरस्तीति चे(त्)न्न, अनुमानतया तस्य शब्दशक्तित्वानङ्गीकारात्। यथोक्तम्, वचनलिङ्गानुमा हि सेति।**

**परि०— व्यञ्जनं नामेति**। अस्तङ्गतः सवितेत्युक्ते ब्राह्मणस्य सन्ध्या कार्येति, पान्थस्य पुरतो न याहीति, चोरस्य चौर्यकर्मण्युद्योगः कार्य इत्यादिरर्थः प्रतीयते। तादृशार्थप्रतीतिहेतुः व्यञ्जना वृत्तिर्नाम इत्यर्थः। **यथोक्तमिति**। कर्मनिर्णये उक्तमित्यर्थः। सा अर्थान्तरधीर्वचनरूपलिङ्गजन्यानुमितिरूपेत्यर्थः।

**यादु०— व्यञ्जनं नामेति**। यथा 'गच्छ गच्छसि चेत्कान्ते पन्थानः सन्तु ते शिवाः। ममापि जन्म तत्रैव भूयाद्यत्र गतो भवानि'त्यत्र भार्यामरणं व्यज्यते। **अनुमानतयेति**। देशान्तरजन्मनो मरणाविनाभावादिति भावः। प्रपञ्चयिष्यते चैतत्तृतीये।





**आनन्दः— व्यञ्जनं नामेति** । आप्तोक्ते विषं भुंक्ष्वेत्यादि वाक्ये व्यंजननामिका हि वृत्तिः प्रतीयते । तत्र हि प्रसिद्धार्थं विहायार्थान्तरमेव व्यक्तं प्रतीयत इति भावः । **अनुमानतयेति** । अयं मह्यं क्रुद्धो वर्तते आप्तत्वे सति प्रमाणविरुद्धकर्तव्यतावादित्वादित्यनुमानादित्यर्थः । **वचनलिङ्गानुमेति** । मुख्यार्थप्रयोग इत्यर्थः ।

**शे०वा०**— ननु 'विषं भुंक्ष्व', 'गच्छ गच्छसि चेत्कान्त', इत्यादौ वाचनिकार्थव्यतिरिक्तस्य निषिद्ध-भोजनवर्जन-गमनाकर्तव्यत्वादिरूपार्थविशेषप्रतीतेरुपायान्तरेणासम्भवाच्छब्दजन्यत्वमविवादम् । न च शब्दस्य तत्राभिधा समयाभावात् नापि लक्षणा गौणी वा सम्भवति तद्धेत्वभावादिति व्यञ्जनरूपवृत्त्यन्तरमेव तत्र शब्दव्यापारत्वेनाश्रयणीयं तत्कथं तिस्रः शब्दस्य वृत्तय इति वृत्तेस्त्रैविध्याभिधानमित्याशङ्कते **व्यञ्जनं नामेति** । **व्यञ्जनं** व्यापारः ।

**अनुमानतया तस्येति** । तस्य विषं भुंक्ष्वेत्यादिवचनस्यानुमानतया निषिद्धभोजनवर्जनादिरूपार्थाव-गमकत्वेन शब्दप्रमाणतया तदभावेनाभिप्रेतार्थप्रतीतेरशाब्दत्वान्न तदन्यथाऽनुपपत्तिमात्रत्वप्रमाणकं तस्य व्यञ्जनस्य शब्दवृत्तित्वमङ्गीकर्तुं शक्यमिति योजना ।

अयमाशयः । निषिद्धभोजनवर्जनादिप्रतीतेः शाब्दत्वे हि शब्दव्यापारतया व्यञ्जनमङ्गीकर्तव्यं स्यान्न चैतदस्ति । यतो विषं भुंक्ष्वेत्यादावुदाहरणे या निषिद्ध-भोजनवर्जन-गमनाकर्तव्यत्वादिरूपार्थप्रतीतिरुत्पद्यते सा तावच्छब्दजन्यैव न भवति । तथा च कथं तत्र व्यञ्जनरूपवृत्त्यन्तरकल्पनावकाशः । नापि शब्दाजन्यत्वे-ऽकरणकक्रियोत्पत्तिप्रसङ्गः । अनुमानस्यैव तत्र करणत्वाङ्गीकारात् । तथा हि । अयमिदानीं क्रुद्धो वर्तते, आप्तत्वे सति प्रमाणविरुद्धकर्तव्यतावादित्वात् । क्रोधश्चास्य सन्निहितान्निषिद्धभोजनादेव दृष्टकारणपरित्यागेनादृष्टस्य कल्पयितुमशक्यत्वात् । ततोऽयमेतद्भोजनाकर्तव्यत्वाभिप्रायवान् मद्भोजनजनितक्रोधवत्वादिति वक्त्रभिप्राय-मनुमायेदं मया वर्जनीयं मदकार्यत्वेनाप्ताभिप्रेतत्वादित्यनया प्रणाड्या निषिद्धभोजनवर्जनादिप्रतीतिर्वचन-लिङ्गानुमितानुमितिरेव न तु व्यञ्जनरूपशब्दवृत्तिरनन्यलभ्यस्यैव शब्दार्थत्वात् । एवं 'गच्छ गच्छसि चेत्कान्ते'-त्यत्रापि देहान्तरसंयोगरूपजन्मनः पूर्वदेहसम्बन्धेऽनुपपद्यमानतया पूर्वदेहवियोगरूपमृतिरेव जन्मनाऽनुमीयते । ततश्च गमनं न कर्तव्यं प्रियामृतिहेतुत्वादिति गमनाकर्तव्यताप्रतीतिरप्यनुमितानुमितिरेव । यद्यपि च गुरु-निदेशादिना प्रियामृतिहेतोरपि कर्तव्यत्वदर्शनेन व्यभिचारान्न प्रियामृतिहेतुत्वेन गमनाकर्तव्यताऽनुमातुं युक्ता । तथापि नाश्यमानेष्टाधिकेष्टाहेतुत्वविशेषितेन प्रियामृतिहेतुत्वेनाकर्तव्यत्वानुमानमुपपद्यत एव । गुरुनिदेशादौ तु नाश्यमानेष्टाद्भार्यादिः सकाशादधिकस्य गुरुनिदेशजन्येष्टस्य सत्त्वेन तत्र हेत्वगमनेनाव्यभिचारात् । तथा चायमत्र प्रयोगः । प्रकृतगमनं न कर्तव्यं नाश्यमानेष्टाधिकेष्टाहेतुत्वे सति इष्टनाशहेतुत्वात् सम्मतवदिति । ततश्च उदाहृतस्थलेऽभिप्रेतार्थप्रतीतेरशाब्दत्वान्न शब्दवृत्तिकल्पनमुपपन्नम् ।

अथाऽपि स्यात् । यत्र प्रयोजनप्रतिपिपादयिषया लाक्षणिकशब्दप्रयोगः तत्र नान्यतः पावनत्वादि-प्रतीतिरपि तु तस्मादेव शब्दादिति वाच्यम् । न च निर्व्यापारस्य तत्प्रतिपादकत्वमतिप्रसङ्गादिति व्यापारो वाच्यः ।





न च प्रयोजने व्यञ्जनादृतेऽन्यः शब्दव्यापारः सम्भवतीति व्यञ्जनरूपवृत्त्यन्तरमवश्यमाश्रयणीयमिति चेदत्र कश्चित् । गङ्गायां घोष इत्यादौ ये पावनत्वादयो धर्मास्तटादौ प्रतीयन्ते तत्र गङ्गाशब्दस्यासङ्केतिततया प्रयोजनेऽभिधाया असम्भवेन तया तदसिद्धावपि लक्षणयैव तत्सिद्धिसम्भवेन वृत्त्यन्तरस्याकल्पनीयत्वात् । ननु पावनत्वादौ न लक्षणा सम्भवति । तद्बीजाभावात् । लक्षणायां हि मुख्यार्थे इतरान्वयानुपपत्तिर्बीजम् । न च गङ्गाशब्दस्य लक्ष्यं तटं मुख्यार्थः । नापि गङ्गाशब्दमुख्यार्थस्य स्रोतस इव लक्ष्यस्य तटस्यापि घोषाधारत्वानुपपत्तिः । ततश्च हेत्वभावान्न लक्षणा सम्भवतीति चेन्न । किमिदं लक्षणाबीजत्वम् । न तावज्जनकत्वम् । गङ्गातीरयोः सम्बन्धस्यानुपपत्तिज्ञानाजन्यत्वात् । नापि तज्ज्ञापकत्वम् । अनुपपत्तिज्ञानमन्तरेणापि गङ्गातीरयोः सम्बन्धस्य चक्षुरादिना ग्रहात् । नापि तत्तात्पर्यग्राहकत्वम् । तात्पर्यव्याख्यान्तरतोऽपि तद्ग्रहात् । अथ लक्षणाजन्यशाब्दबोधे सहकारित्वं तदिति चेन्न । यष्टीः प्रवेशयेत्यादौ व्यभिचारेण तदनुपपत्तेः । तात्पर्यविषयानुपपत्तिरत्राप्यस्तीति चेत् । तर्हि प्रकृतेऽपि सैव बीजं भविष्यतीति कथं बीजाभावः ।

नन्वथाऽपि सम्बन्धस्य लक्षणाबीजत्वात् गङ्गाशब्दार्थस्य तीरस्य लक्षणीयैः पावनत्वाद्यैरसम्बन्धान्न लक्षणा सम्भवतीति चेत् । तीराद्यैः प्रयोजनस्य साक्षात्सम्बन्धासम्भवेऽपि प्रयोजनाश्रयसम्बन्धित्वरूपपरम्परासम्बन्धसत्त्वेन लक्षणोपपत्तेः । स्यादेतत् । गङ्गायां घोष इत्यादौ लक्षणाप्रयोजनशैत्यपावनत्वादेः सत्त्व एव गङ्गाशब्देन तटादेर्लक्षणादर्शनाल्लक्षणायाः प्रयोजनवत्त्वं नियतम् । ततश्च पावनत्वादौ लक्षिते यदि किञ्चित्प्रयोजनं स्यात् तदा प्रयोजनस्यापि लक्ष्यत्वम् । न च प्रयोजने लक्ष्ये किञ्चित्प्रयोजनान्तरमस्ति । अस्ति चेत् तस्यापि लक्ष्यतया तत्प्रयोजनान्तरगवेषणायामपर्यवसानादनवस्थाप्रसङ्ग इति चेन्न । लक्ष्यप्रतीतेरेव प्रयोजनत्वात् । तथापि प्रयोजनान्तरं तत्र नास्तीति चेत् । ततः किम् । लक्षणाया हि प्रयोजनवत्त्वेन नियमो न तु लक्ष्यप्रतीत्यतिरिक्तप्रयोजनवत्त्वेनापि गौरवादप्रयोजकत्वाच्च । अथ नानार्थस्थले तावदर्थविशेषप्रत्यये प्रकरणादि निर्णायकम् । तथा च यत्र प्रकरणादिशून्यार्थान्तरं प्रतीयते तत्र नाभिधा मूलं सहकार्यभावात्, नापि लक्षणा अयोगात्, अतः सिद्धं वृत्त्यन्तरमिति चेत् । प्रकरणादीनामननुगतत्वेन सहकारित्वासम्भवात् । तात्पर्यग्राहकत्वेन तेषामनुगम इति चेत् । तर्हि लाघवात् तात्पर्यग्रह एव सहकार्यस्तु । स चेहाप्यस्त्येवेति किं वृत्त्यन्तरेण । ननु च लक्षणा पदवृत्तिः, इयं च पदतदेकदेशवाक्यरचनार्थभङ्ग्याद्याकाराश्रितेत्याश्रयभेदाद्भेद इति चेन्न । असिद्धेः । तदेकदेशादयो ह्यर्थविशेषतात्पर्यग्राहका एव न तु तत्प्रतिपादका इति कथमाश्रयभेदः । नन्वेवमपि लक्ष्ये तात्पर्यज्ञानं लक्षणासहकारि न तु व्यङ्ग्यार्थे तात्पर्यग्रहो नियतः । काव्यादौ तात्पर्याविषयस्यापि व्यङ्ग्यस्य चमत्कारादिति चेत् । व्यङ्ग्ये तात्पर्यग्रहस्यानपेक्षायां गङ्गायां घोष इत्यादौ शैत्यादेरेव प्रतिभासो न केशवालुकादिमत्त्वस्येति नियमाभावप्रसङ्गात् । वासनाविशेषपरिपाकात् तन्नियम इति चेत् । तर्हि लक्षणास्थलेऽपि स एव नियामकोऽस्तु कृतं तात्पर्यग्रहणेनेति न व्यञ्जनेन कृत्यमिति, तन्न । लक्षणायाः प्रयोजनवत्त्वनियतिमभ्युपगच्छता प्रयोजने न लक्षणाऽङ्गीकर्तुमुचिता । तल्लक्षणायाः प्रयोजनाभावात् । न च लक्ष्यप्रतीतिरेव प्रयोजनमिति न तदभाव इति वाच्यम् । शब्दव्यापारविशेषलक्षणाजन्यज्ञानस्य वा ज्ञानरूपाया वा





प्रयोजनमिह निरूप्यते । तत्र पक्षद्वयेऽपि लक्ष्यप्रतीतिः प्रयोजनतया न वक्तुं शक्यते । न हि लक्ष्यप्रतीतेर्लक्ष्यप्रतीतिरेव प्रयोजनम् । अभेदेन साध्यसाधनभावायोगात् । प्रयोजनत्वस्य साध्यत्वरूपत्वात् । न च एवं पावनत्वादेरप्येतदजन्यत्वात् प्रयोजनत्वं न स्यादिति वाच्यम् । शैत्यपावनत्वादिप्रतीतेरेव तज्जन्यतया मुख्यप्रयोजनत्वेऽपि प्रयोजनज्ञानविषयतया पावनत्वादेरपि प्रयोजनत्वोपपत्तेः ।

किं चास्ति तावदभिधायां रूढलक्षणायां रूढगौण्यां च प्रयोजनानपेक्षत्वमरूढलक्षणायामरूढगौण्यामेव च तदपेक्षत्वमिति सर्वेषां सम्मतिः । तद्यदि लक्ष्यार्थप्रतीत्याऽरूढलक्षणायाः प्रयोजनवत्ता उच्यते हन्त तर्हि अभिधादेरप्यभिधेयाद्यर्थप्रतीत्या प्रयोजनत्वोपपत्तेर्वृत्तिमात्रस्यापि सप्रयोजनत्वप्राप्त्योक्तविभागोच्छेदप्रसङ्गः । ततश्च न लक्षणायाः प्रयोजनवत्त्वमात्रनियमोऽपि तु लक्ष्यप्रतीत्यतिरिक्तप्रयोजनवत्त्वमेवेति न लक्ष्यप्रतीतेः प्रयोजनत्वं वक्तुं युक्तम् । तथा च प्रयोजनस्यापि लक्ष्यत्वे प्रयोजनपरम्परा आश्रयणीयैवेत्यनवस्था स्यादेवेति न प्रयोजनस्य लक्षणया लाभ इति यत्किञ्चिदेतत् ।

वयं तु ब्रूमः । प्रयोजने शक्त्याद्यभावेऽपि, सति मुख्येऽस्मदायत्ते शब्दप्रयोगे कस्मादवाचकपदप्रयोग इत्यवाचकपदप्रयोगान्यथाऽनुपपत्त्यैव पावनत्वादिबोधसम्भवेन न तदन्यथाऽनुपपत्त्या व्यञ्जनरूपवृत्त्यन्तरस्वीकारो युक्त इति सङ्क्षेपः ।

निषिद्धभोजनवर्जनादिप्रतीतेरानुमानिकत्वे आचार्यवाक्यं सम्मतित्वेनाह **यथोक्तमिति** । कर्मनिर्णय इति शेषः । सा निषिद्धभोजनवर्जनादिप्रतीतिर्वचनलिङ्गकानुमानकरणिकेति तदर्थः ।

**वा०र०**— काव्यप्रकाशे तत्र व्यापारो व्यञ्जनात्मक इत्येतत्काव्यसूत्रमुदाहृत्य व्यञ्जनोपपादिता । यत्र वाचनिकार्थादन्यस्तात्पर्यार्थः प्रतीयेत । लौकिकवाक्येषु न तत्र साक्षाद्वचनं बोधकम् । वचनलिङ्गानुमाहि सेति कर्मनिर्णयव्याख्यानावसरे ननु 'विषं भुंक्ष्व', 'गङ्गायां घोष' इत्यादिकस्य तात्पर्यवृत्तिस्थलतया शङ्कापूर्वकं यत्रेति वाक्यमवतारितम् । उक्तन्यायामृते 'गच्छ गच्छसि चेत्कान्ते'ति 'विषं भुङ्क्षे'ति च वाक्यमुदाहृत्य अनुमितानुमितत्वमुपपादितं तत्सर्वानुसारेण व्यजनं नामेति मूलाशयमाह **ननु विषं भुङ्क्षेत्यादिना** । एवं कर्मनिर्णयटीकायामुक्तस्थलीयन्यायामृते चोक्तं 'विषं भुङ्क्षे'त्यादिकमुदाहरणं दर्शयतैव 'अस्तङ्गतः सविते'त्युदाहरणमात्रस्य मुख्यतः उपादानमसदिति सूचितम् । वचनलिङ्गानुमितानुमितित्वस्याभिप्रायतया न्यायामृते युक्ततया तथाव्याख्यानाभावायोगश्च ज्ञातव्यः टीकान्तरे । ननु व्यञ्जनानिरूपणापरस्य तत्र व्यापारो व्यञ्जनात्मक इत्येतत्काव्यसूत्रस्य तत्र प्रयोजनज्ञाने इति सारबोधिन्यां तत्र प्रयोजनोपादानत्वादौ विषय इति साहित्यदीपिकायां तत्र लाक्षणिके व्यञ्जनात्मकः व्यङ्ग्योपस्थितिहेतुरिति काव्यकौमुद्यां तत्रेति प्रयोजन इत्यर्थ इति मधुमत्यां च करणात् तदनुसारेण गङ्गायां घोष इत्यादि लक्षणामूलकव्यञ्जनास्थले वा तत्रैवाभिधामूलकव्यञ्जनोदाहरणतया लक्ष्यमाणाभिधामूलं तु इत्यादि ग्रन्थोदाहृतसंयोगविप्रयोगसहचर्यादियुक्तशङ्खचक्रो हरिइत्यादिवाक्ये वा तटादिगतशैत्यपावनत्वादिरूपप्रयोजनज्ञानायैव व्यञ्जनावृत्तेः सद्भाव इत्यर्थकतया





तत्काव्यसूत्रे इति तट्टीकाभ्यो व्यञ्जनावृत्तिप्रयोजनज्ञानायेति प्रतिपादनसिद्धगङ्गातटादिगतशैत्यपावनत्वादि-प्रतिपिपादयिषया प्रयुक्ते गङ्गायां घोष इत्यादौ शैत्यादिप्रतीतिव्यञ्जनारूपवृत्त्यभावेन सिद्ध्येदित्यादि रूपेणैव व्यजनं नाम परावृत्तिरस्तीत्येतन्मूलस्यावतार्यतया विषं भुङ्क्ष्वेत्यादि वाक्ये व्यङ्ग्यनिषिद्धभोजनाकर्तव्यत्वादि-प्रतीत्यर्थतया तदङ्गीकारावश्यकतापरत्वेनैतन्मूलावतारो न युक्तः । आवश्यकं च प्रयोजने लक्षणा नास्ति किन्तु व्यञ्जनैवेत्येतत्प्रमेयनिराकरणं टीकाकृतोऽपि । अथापि स्यादित्यादिनोत्तरत्र तथा शङ्कासमाधानाभ्यां प्रति-पादनात् तत्कथमेतदिति चेत् सत्यम् । यद्यप्युक्तकाव्यसूत्रानुसारेण प्रयोजने व्यञ्जनाख्यः शब्दव्यापारस्वीकार्य इत्येव प्राप्नोति तथापि तत्र वक्ष्यमाणाभिधा 'मूलं त्वि'त्यादिना ग्रन्थेन संयोगविप्रयोगाख्यगुणेन वा साहचर्यादिना वोपेत 'सशङ्खचक्रो हरिरि'त्यादि 'सलक्ष्मणो राम' इत्यादावर्चान्तरस्मृतिप्रतिबन्धरूपाभिधानियन्त्रणाख्य-वाचकत्वस्य प्रतिपादनेनाभिधामूलकव्यञ्जनास्थलस्यापि काव्यकृत्सम्मतत्वेनोदाहरणस्य यथासम्भवमादरण-सम्भवेन तार्किकादिग्रन्थेषु यथायथमुदाहरणस्वीकारेण च तदनुसारेण कर्मनिर्णयटीकायां 'विषं भुङ्क्ष्वे'त्यस्यैव 'गङ्गायां घोष' इत्यस्यापि मुखतमुपादानात् तत्र विवेकेनोदाहरणत्वं ज्ञेयमिति ज्ञापनार्थं निषिद्धभोजनाद्य-कर्तव्यत्वव्यञ्जकाभिधामूलकव्यजनावृत्त्युदाहरणत्वेन 'विषं भुङ्क्ष्वे'त्यादिकमेवोपादयत् तत्र व्यञ्जनावृत्तिसद्भाव-शङ्कापरत्वेनैतन्मूलं योजितमित्यदोषः ।

कर्मनिर्णयटीकायां द्वितीयत्वेनोदाहृत 'गङ्गायां घोष' इत्यत्रापि प्रयोजनप्रतिपत्त्यर्थतया व्यञ्जनावृत्ति-शङ्काप्यथापि स्यादित्यादिना करिष्यते । एवं च ग्रन्थकारेणोदाहरणस्वारस्यमाविष्कुर्वता कर्मनिर्णयटीका-व्याख्यानमपि कृतं भवति । अथापि स्यादित्यादिग्रन्थोऽनुमानतयेत्येतन्मूलस्य वर्णकान्तरपरतया प्रवृत्त इति स्पष्टमेव । यथा च तदर्थत्वं तथा एतदुपपादनावसरे वक्ष्याम इति सूरयो विदांकुर्वन्तु । इत्यादावित्यादिपदेन गङ्गायां घोष इत्यादि गृह्यते कर्तव्यत्वादीत्यादिपदेन शैत्यपावनत्वादि गृह्यते । नाभिधा समयाभावादित्यादि काव्यप्रकाशानुसारेणाह । न च शब्दस्य तत्र भिदेत्यादि समयः सङ्केतः । शिष्टं काव्यप्रकाशतट्टीकारीत्या अनुसन्धेयमित्याशयेन लक्षणगौण्योः साधारणदूषणमेवाह **तद्धेत्विति** । मुख्यार्थबाधादिकं विनैव लक्षणा-स्त्वित्यादिकमपि न च शब्द इत्यादिना काव्यप्रकाश एव निराकृतम् । शिष्टमुत्तरत्र प्रतिपादयिष्याम इति भावः । अनुमानतया तस्येत्यत्रत्यतस्येत्यस्यावृत्तिं मनसि निधाय व्यञ्जनं वृत्त्यन्तरमिति शङ्कित्रभिमतोदाहरण-परामर्शपरतया आद्यं योजयन् व्यञ्जनपरतया द्वितीयं च योजयन्नपेक्षितपूरणेन तत्तद्व्याख्याति **तस्य विषं भुङ्क्ष्वेत्यादि वचनस्येति** । एतेन यथा श्रुते अन्वयानुपपत्तिरपेक्षितार्थाप्रतिपादनं चेति दोषशङ्का निराकृतेति ज्ञेयम् । **शब्दप्रमाणतयेति** । उक्तं च कर्मनिर्णयटीकायां शाब्दजैव न भवतीति । **तदन्यथानुपपत्तिमात्रेति** । व्यञ्जनायां प्रमाणान्तरं तु नास्त्येव । निषिद्धभोजनाद्यकर्तव्यत्वादिरूपार्थविशेषप्रतीत्यन्यथानुपपत्तिरपि नास्ति । अनुमानतस्तत्प्रतीतेः सम्भवेनान्यथोपपन्नादित्याशयः । भवदीयानङ्गीकारोऽप्रयोजक इति ब्रूयात् अतो व्याख्यातं 'नाङ्गीकर्तुं शक्यमि'ति कर्मनिर्णयटीकायाम् । एतदुक्तं भवति । प्रथमोदाहरणे तावद्या निषिद्धेत्यादिना विषं भुङ्क्ष्वेति वाक्ये वचनलिङ्गानुमितित्वमुपपादितं तदनुसारेणाशयमाह **अयमाशय इति** । वचनलिङ्गानुमा अतो





नाकरणिकेतीति प्राक्तनतट्टीकानुसारेणोक्तं **नापि शब्देति** । विषं भुङ्क्ष्वेत्येतदुदाहरणे तावदनुमानप्रकारं दर्शयति **अयमिदानीमिति** । अतो मयेदं न कार्यमित्यस्याभिप्राय इति विशिष्टवचनलिङ्गेन वक्तुराशयोऽनुमीयत एवेति भागरोट्ट्यामभिप्राय उक्तः, तदनुसारेणानुमानप्रयोगान्तरमाह **ततोऽयमेतद्भोजनेति** । एतद्भोजनजनितेति हेतौ पाठः । क्वचिन्मद्भोजनेति पाठः, तस्याप्ययमेवार्थः । अनुमीयत एवेत्यत्र ततश्चेदं मया वर्जनीयमित्यादिः शेषः पूरितः । तमाह **इदं मया वर्जनीयमिति** । **वचनलिङ्गानुमितेति** । वचनलिङ्गेनानुमितः क्रोधस्तेनाभिप्रायस्यानुमितिः । ततश्च तदकर्तव्यत्वानुमितिरिति शेषः । यद्वचनलिङ्गेत्यत्र लिङ्गपदावृत्तिः । तथा च वचनं लिङ्गं यस्यासौ वचनलिङ्ग इति क्रोधो ग्राह्यः । तेनानुमितो वक्त्राभिप्रायः । तेनानुमितिर्भोजनाकर्तव्यत्वस्येति योज्यम् । अत्र निषिद्धभोजनवर्जनप्रतीतिरित्येव पाठः । आदिपदोपादानपाठे तु पूर्वोक्तक्रोधादेर्ग्रहणायादिपदान्तेन गमनाकर्तव्यत्वादिप्रतीतेः उत्तरत्रोपपाद्यमानाया ग्रहणायोग इति शङ्कानवकाशः ।

**शब्दवृत्तिरिति** । तत्र कल्पनीयेति शेषः । कथं तत्र व्यञ्जनेति प्रक्रमानुसारात् अनन्यलभ्यो हि शब्दार्थ इति न्यायामृतोक्तं हेतुमाह **अनन्येति** । उदाहृतस्थलीय 'गच्छ गच्छसि चेत्कान्ते'त्यत्र तु 'जन्मना मृत्यनुमितिरि'त्यादि न्यायामृतानुसारेणोदाहरणान्तरेऽप्यनुमानत्वमुपपादयति **एवं गच्छ गच्छसि चेदिति** । 'पन्थानः सन्तु ते शिवाः । भूयान्ममापि तत्रैव जन्म यत्र गतो भवानि'ति श्लोकशेषः । देहान्तरसंयोगश्च जन्मेत्यादि तरङ्गिणीं मनसि कृत्वा न्यायामृतमर्थतोऽनूदितमिति ज्ञेयम् । **गमनं न कर्तव्यमिति** । ननूक्तरीत्या जन्मना मृत्यनुमानसम्भवेऽपि न मृतिहेतुत्वेन गमने कर्तव्यत्वानुमानं युज्यते । मरणस्य शतवर्षोत्तरं जरादिनापि सम्भवेन गमनहेतुताक्षेपकत्वायोगादिति कश्चित् । तन्न । जराद्यभावविशिष्टमरणस्य गमनहेतुत्वाक्षेपकत्वसम्भवादित्याशयात् । **गुरुनिदेशादिनेति** । आज्ञादिनेत्यर्थः । आदिपदेनात्मत्राणलोकापकीर्तिपरिहारादिकं गृह्यते । यत्र स्थले गुरुणा कार्यविशेषार्थमाज्ञप्तः शिष्यो गन्तुकामः तदीयभार्या च भर्तृगमनमनिष्टं मत्वा मरणार्थमुद्यता तदा शिष्येण प्रियामरणप्रसङ्गेऽपि गुरुनिदेश एव कार्यः क्रियते च । एवमात्मत्राणादावपीति ज्ञेयम् । ततश्च गमनं न कर्तव्यमिति प्राचीनप्रयोगमेव हेतुविशेषणदानेन व्यभिचारपरिहारे हेत्वन्तरप्रसङ्ग इत्यतो विशिष्टतया आह **ततश्चायमिति** । **नाश्यमानेति** । अनेन सामान्यव्याप्तिमूलकत्वं च प्रयोगस्य सूचितम् । **प्रियामृतीति** । विशेषस्येष्टनाशेति सामान्यतया व्याख्यानात् सम्मतवत् । स्वकीयवस्त्रदावाग्निसंयोगवदित्यर्थः । **अथापि स्यादिति** ।

यद्यपि निषिद्धभोजनाकर्तव्यत्वादि प्रतिपादनाय व्यञ्जनवृत्तिरङ्गीकार्येत्याशयकतया व्यञ्जननामाऽपरा वृत्तिरस्तीति चेदित्येतन्मूलव्याख्यानात् तदनुसारेणैव प्रयोजनप्रतिपिपादयिषा स्थलेऽपि शङ्कायाः समानत्वात् तत्परिहारन्यायेनैव परिहारस्यापि सिद्धेश्च पृथगाशङ्काद्ययोगः । तथापि प्रयोजने लक्षणेति केषाञ्चित्पक्षदूषणपरकाव्यप्रकाशाद्यनुसारेण लक्षणापक्षदूषणसमर्थनपूर्वकं मूलोक्तानुमानतयैव प्रयोजनप्रत्यायकत्वमपीति सिद्धान्तप्रकारमावेदयितुं विषं भुङ्क्ष्वेत्यादिस्थलीयाभिधामूलकव्यञ्जनावृत्त्यतिरिक्तलक्षणामूलकव्यञ्जनावृत्तिस्थलतया परसम्मतेऽपि न व्यञ्जनतया कृत्यम् । अनुमानतयैव गङ्गायां घोष इत्यादेः प्रयोजनप्रतीतिजनकत्वसम्भवादित्युपपादनव्याजेन तत्राव्यापारो व्यञ्जनात्मक इत्यादि प्रागुदाहृतकाव्यसूत्राद्युक्तप्रयोजनप्रतीत्यर्थं व्यञ्जनेति पक्षं





दूषयितुं च पृथगाशङ्कादीति न दोषः । एतेनैतदपि सूचितम् । न्यायसिद्धान्तमञ्जर्यां हि 'व्यञ्जनं च वृत्त्यन्तरं लक्षणयैव तदर्थसिद्धेरि'त्युपक्रमे सामान्यतो व्यञ्जनायाः शङ्कासमाधाने कृते उत्तरत्र स्यादेतत् 'गङ्गायां घोष' इत्यादौ लक्षणाप्रयोजनमित्यादिना विशेष्योदाहरणमुपादाय प्रयोजनप्रत्यायकतया व्यञ्जनामाशङ्क्य तन्निराकरणं कृतम् । तत्कथं पूर्वमप्युदाहरणविशेषस्योपादेयतया तत्परित्यागायोगात् ।

न चेदमेवोदाहरणम् । अत एव शितिकण्ठेन गङ्गायां घोष इत्यत्रैव व्यञ्जनमित्यादि मूलं योजितमिति चेन्न । तथा सति पवनत्वादिप्रतीतिः प्रयोजनं तज्ज्ञानार्थतया व्यञ्जना आवश्यकीति प्रथमतो वक्तव्यस्य सम्मुग्धतया वचनं तल्लक्षणोक्त्यनन्तरं तत्र प्राप्तानुपपत्तिपरिहाराय तदनुवादावसरे च स्पष्टं तदुक्तिरित्यस्य अस्वारस्यापातात् पुनर्व्यञ्जनाय लक्षणातो भेदमाशङ्कते **स्यादेतदितीति** । भास्करीयावतारायोगश्च । प्रागुक्तलक्षणे पक्ष एव प्राप्तानुपपत्तिशङ्कारूपत्वात् । अथ कथञ्चिद्भास्करोक्तरीत्या गतोऽस्तकर्म इति वाक्यशेषस्य प्रथमत उदाहरणत्वमभिप्रेतमिति मन्यसे तर्हि गङ्गायामित्यादिपरतया व्याख्यानं शितिकण्ठीयमनुपपन्नम् । उभयत्रोप-लक्षणयोभयग्रहणमिति तु न सम्भवति । गतोऽस्तमर्क इत्यादौ व्यज्यमानसन्ध्योपासनाकर्तव्यत्वादेर्लक्षणया बोधमङ्गीकृत्य तत्रापि लक्षणान्तरपरम्परया अनवस्थाप्रतिपादनपरतयोत्तरग्रन्थयोजने तत्र लक्षणप्रयोजनं शैत्य-पावनत्वादिप्रतीतिः । न च तत्प्रतीतिर्लक्षणासाध्येत्यादिग्रन्थानुपपत्तिः । तन्मर्यादया प्रागुपात्तोदाहरणातिरिक्तस्थले स्वतन्त्रविचारप्रतीतेः । समानन्यायतयोदाहरणद्वयेऽप्येष विचारः शितिकण्ठादिभिरेकदेशोपादानं त्वपरामर्शात् । गङ्गायामित्यस्य प्रागनुपादानात् स्पष्टमनुवादश्चेति चेन्न । काव्यप्रकाशकृता लक्षणामूलां व्यञ्जनामभिधाया-भिधामूलकव्यञ्जनावृत्तेरभिधानात् तदनुसारेणोदाहरणानामपि व्यवस्थिततया पूर्वमभिधायाभिधामूलकव्यञ्जनास्थले व्यञ्जनाया उपयोगाभाव इति प्रतिपाद्येदानीं लक्षणामूलकव्यञ्जनास्थलविचारः । अत एवाभिधास्थले मुख्यार्थ-बाधादिरूपलक्षणबीजाद्यसम्भवशङ्कादिकं, लक्षणास्थले तु तच्छङ्काभावः । अत एव च तदनन्तरतास्येति प्रमेय-व्यवस्थासम्भवे उभयत्रैतद्विचाराश्रयणायोगात् । अत एव गच्छ गच्छसीत्यादावभावादिति पूर्वग्रन्थेऽभिधा-मूलकस्थलमेवोदाहृतम् । तर्हि गच्छगच्छसीत्यादिस्थले लक्षणया बोधितमागा इत्यर्थे प्रयोजनाभावशङ्का न परिहृता स्यादिति चेत् तर्हि टीकाकारंमन्याः पूर्वोत्तरग्रन्थयोर्विषयविवेककरणात् समर्थाः यत्किञ्चित्प्रतीत-मात्रमर्थतया वर्णितवन्त इति प्राप्तमिति ग्रन्थमर्यादाव्याकुलतात्र प्राप्तेति प्रयोजने व्यञ्जना स्वीकर्तव्येति शङ्का तु काव्यप्रकाशतट्टीकाद्यनुसारेणैव । तत्र हि यस्य प्रतीतिमाधातुमित्यादिसूत्रव्याख्यानोपपादनावसरे उक्तम् । न हि गङ्गातीरे घोष इति वक्तुं प्रतिपादको न जानाति न वा तत्प्रयोगे प्रकृतार्थप्रतीतिरेव न भवति येनैवं लक्षणां कुर्यादृते प्रयोजनप्रत्ययात् । सा च प्रतीतिर्नानुमानजन्या । व्याप्तलिङ्गाप्रतिभासेऽपि जायमानत्वेन शब्दैक-साध्यत्वात् समयाभावेनाभिधया प्रयोजनप्रत्ययायोगात् लक्षणाया अप्ययोगात् मुख्यार्थबाधासम्भवात् तद्योगाभावाच्च । प्रयोजनेऽपि लक्षणाङ्गीकारे लक्षणायाः प्रयोजनवत्त्वनियमेन तत्प्रयोजनस्यापि प्रतीतिर्लक्षणये-त्यङ्गीकारेऽनवस्था । सा च पूर्वलक्षणाप्रतिबन्धकारित्वान्मूलक्षयकारिणीत्यादि प्रमेयप्रतिपादनात् तत्रत्यप्रमेय-सङ्ग्रहरूपन्यायग्रन्थेष्वपि .......मित्यनुसारिप्रमेयाधिक्येऽपि प्रधानप्रमेये विशेषाभावात् न्यायसिद्धान्तमञ्जरीकृतापि





सङ्ग्रहकरणेऽपि लक्षणापक्षसमर्थनायाधिकलेखनात् । परन्तु तदपि निराकर्तुं टीकाकृताधिकांशस्य काव्यप्रकाशाद्युक्तप्रमेयस्य च सङ्ग्रहेण मञ्जर्यनुसारेणानुवादः कृतः । अत एव मध्ये पावनत्वाद्यैर्लक्षणीयैर्गङ्गाया असम्बद्धादित्येषा शङ्का मञ्जर्यामपरिहृतापि तद्ग्रन्थानुसारेणाशङ्क्य परिहृतेति ज्ञेयम् । **यत्रेति** । गङ्गायां घोष इत्यादावित्यर्थः । **प्रयोजनेति** पावनत्वादिरूपेत्यर्थः । गङ्गायां घोष इत्यादौ ये पावनत्वादय इति वक्ष्यमाणत्वात् ।

**(?) अन्यत इति** । अनुमानादिप्रमाणान्तरादित्यर्थः । **व्यञ्जनादत इति** । नाभिधासमयाभावादित्यादि पूर्वग्रन्थोक्तरीत्येत्याशयः । **कश्चिदिति** । पूर्वोत्तरग्रन्थयुक्तीरेव सङ्कलय्य कश्चित्पक्षत्वेन इहोपन्यासः । न्यायसिद्धान्तमञ्जर्यामपि सङ्कलनसिद्धमधिकं चोपयुक्तं मिलित्वा व्यवहृतमिति प्रागेवोक्तम् । ततः कश्चिदित्यस्य न्यायसिद्धान्तमञ्जरीकार इत्यपि व्याख्यातुं युक्तम् । तदुक्तलक्षणासमर्थनं प्रदूषयितुमेव व्यञ्जनापक्षोज्जीवनकरणात् स्वयं च स्वसिद्धान्तानुसारेण समाधानस्य वयं त्वित्यादिना करिष्यमाणत्वादिति ज्ञेयम् । अकल्पनीयत्वादिति पाठे अत्र कश्चिदित्युक्तव्यञ्जनवृत्तिर्नाङ्गीक्रियेतेति प्रतिज्ञायां हेतुसमर्पकत्वात् पञ्चमीप्रयोगः । अकल्पनीयमिति पाठस्तु यथाश्रुत एव । मञ्जरीग्रन्थानुसारि टीकाग्रन्थस्थले तट्टीका शितिकण्ठीयास्ति । तदनुसारेण भास्करीयानुसारेण च अविरोधस्थले व्याख्यानं कार्यम् । **टीकाजनकत्वमिति** । प्रकृतानुसाराल्लक्षणाजनकत्वमित्यर्थः । (?)

अनुपपत्तेरेव बीजत्वोक्तावपि अनुसंहिताया एव तस्यास्तद्बीजत्वमिति सिद्धत्वादित्याशयेन अनुपपत्तिज्ञानेत्युक्तम् । **तात्पर्यग्राहकत्वमिति** । गङ्गादिशब्दस्य लक्ष्ये तटादौ यत्तात्पर्यं तद्ग्राहकत्वमित्यर्थः । **तात्पर्यव्याख्येति** । प्रकरणादिरूपेत्यर्थः । वक्ष्यति च तात्पर्यग्राहकत्वेन तेषामनुगम इति । तद्ग्रहणादित्यत्र तच्छब्देन तात्पर्यस्य समासे गुणभूतस्यापि बुद्ध्या विवेकेन परामर्शः । **प्रवेशयेत्यादाविति** । आदिपदेन कुन्ताः प्रविशन्तीत्यादेः काकेभ्यो दधि रक्ष्यतामित्यादेश्च सङ्ग्रहः । **व्यभिचार इति** । यष्ट्यादिपदैर्लक्षणया यष्टिधरादिबोधस्थले यष्ट्यादीनां प्रवेशनाद्यन्वयानुपपत्तेरभावेन तस्याः सहकारित्वप्रयोजकव्यतिरेके व्यभिचार इत्यर्थः । यत्र लक्षणा तत्रान्वयानुपपत्तिरिति नियमे व्यभिचार इत्यर्थकथनं तु केषाञ्चिदयुक्तम् । सहकारित्वस्य कारणतावच्छेदकत्वरूपत्वमङ्गीकृत्योक्तकुसृष्ट्या व्यभिचारस्य कल्पनेति निमित्ताभावात् सहकरोतीति व्युत्पत्तिसिद्धसहकारिशब्दार्थस्य प्रधानकारणानुकूलत्वरूपतया कारणत्वस्यैव सत्त्वेन तत्र व्यभिचारोद्भावनोपपत्तेः । अन्यथा निमित्तकारणादेरपि सहकारित्वमेवाश्रयणीयं स्यात् । अन्ततो वध्यापुंप्रयोगादिस्थले परेणापि अदृष्टविलम्बः कार्याभावप्रयोजक आश्रीयते । न च तत्रादृष्टं कारणतावच्छेदकं कार्यमात्रकारणतया भवताप्यभ्युपेतत्वादिति दिक् ।

तात्पर्यविषयेति मधुमत्यां तु तात्पर्यानुपपत्त्या तद्विषयीभूतान्वयानुपपत्त्या वा लक्षणा स्यादित्याशङ्कापरिहारकतया योगः फलेनेत्येतदवतारितम् । अतः टीकान्तरे तात्पर्यानुपपत्तिमात्रे उक्तेऽपि न दोषः । भोजनादिप्रकरणे यष्टिधारादिप्रवेशस्यैव तात्पर्यविषयतया तत्प्रतिभासानुपपत्तिरेव तदनुपपत्तिः । न तु भातस्यार्थस्यानुपपत्तिः प्रतीतार्थग्रहणे तात्पर्यविषयार्थप्रतिभासायोगात् तदर्थतया प्रयुक्तशब्दस्यानुपपत्तिवैय्यर्थ्यरूपेत्यादि वा बोध्यम् ।





एवमनुपपत्तिरूपलक्षणाबीजभावमाशङ्क्य तत्परिहारः कृतः । अधुना न प्रयोजनं इति काव्यवृत्ति-व्याख्यानरूप ननु तीराद्यैः प्रयोजने तस्य साक्षात्सम्बन्धाभावेऽपि प्रयोजनेत्यादि मधुमत्यनुसारेण शक्यार्थ-सम्बन्धाभावमाशङ्क्य परिहरति **नन्वथापीत्यादिना** । **सत्त्व एवेति** । अन्यथा स्वायत्तन्यायविरोधप्रसङ्ग इति भावः । **लक्षणाया इति** । रूढलक्षणाव्यतिरिक्तलक्षणाया इत्यर्थः । **ततश्चेति** । नियमादित्यर्थः । अन्यथा नियमभङ्गापत्तिः । तदभ्युपगमे तु प्रयोजनरूपव्यापकाभावे व्याप्यलक्षणत्वायोग इत्याशयः । **गौरवादिति** । व्यापकतावच्छेदकगौरवादित्यर्थः । गौरवस्य प्रामाणिकत्वशङ्कानिरासायाह **अप्रयोजकत्वाच्चेति** । **नानार्थस्थल इति** । सैंधवमानयेत्यादाविति शेषः । **प्रकरणादीति** । भोजनगमनादिरूपेति योज्यम् । प्रकरणादीत्यादिपदेन संयोगादेः परिग्रहः । वृत्तिकृता संयोगविप्रयोगसाहचर्यविरोधितादेर्गणनात् सशङ्खचक्र इत्यत्र शङ्खचक्रे विना हरिरेव नियम्यते । लक्ष्मणसहचर्ये रामशब्दो दाशरथि राम एव नियम्यते इत्यादि बोध्यम् । **अभिधेति** । शक्त्या प्रतिपादकत्वादित्यर्थः । यद्वा न्यायरीत्या शक्तिरित्येवार्थः ।

**सहकारीति** । प्रकरणादि सहकारिसमवधानाभावेऽभिधामात्रस्य मूलत्वायोगादित्यर्थः । **अयोगादिति** । अभिधास्थले लक्षणाया विरुद्धत्वादित्यर्थः । **सहकारित्वेति** । अर्थविशेषप्रतिपत्ताविति शेषः । **तात्पर्येति** । अर्थविशेषतात्पर्येत्यर्थः । **इयं चेति** । व्यञ्जता चेत्यर्थः । **पदतदेकदेशेति** । तेन तथाङ्गीकारात् तन्मतेनेयं शङ्केति बोध्यम् । असिद्धमेव विवृणोति **तदेकदेशादयो हीति** । **काव्यादौ तात्पर्येति** । 'सुरथो नाम राजाऽभूत् समस्ते क्षितिमण्डल' इत्यादौ कवितात्पर्यविषयीभूतस्यापि सुरथनामको राजा क्षितिमण्डले ते तव समोऽभूदि-त्यर्थस्य व्यङ्ग्यस्येत्यर्थचमत्कारात् प्रतीयमानत्वादित्यर्थः । **केशवालुकादीति** । गङ्गासम्बन्धेन वालुकादे-स्तत्रत्यजनवासप्रयुक्तकेशादेश्च सम्भवादिति भावः । **वासनेति** । गङ्गादिसंसेवनस्य शैत्यपावनत्वार्थताया अनुभूतत्वात् तदनुभवजन्यसंस्कारविशेषस्य परिपाकादुद्बोधात् तन्नियमोऽर्थविशेषस्यैव प्रतिभास इत्यर्थः । पुण्यसंस्कारविशेषस्येत्यर्थकथनं तु कस्यचिदशब्दार्थरूपं कथमनुभवारूढमिति स एव जानातु । पावनत्वादि-प्रतीत्यर्थं पुण्यस्योपयोगसम्भवेऽपि शैत्यादिप्रतीत्यर्थं न तस्योपयोगः । यदि च धर्माधर्मशब्दितादृष्टस्य कार्यमात्रकारणतया शैत्यादिप्रतीतावप्युपयोग इति मतं, तर्हि केशादिप्रतीतावप्यदृष्टस्यावश्यकतया केशादि-प्रतीतिव्यावर्तनाय पुण्यसंस्काराश्रयणमनर्थकमित्यलम् । प्रयोजनेत्यादिव्याख्यानरूपशब्दव्यापारविशेषलक्षणे-त्यादिमधुमत्यनुसारेण दूषयति **तन्न लक्षणाया इत्यादिना** । टीकान्तरादिपर्यालोचनया वृत्त्यर्थज्ञाने स्पष्टमेतत् । ननु लक्ष्यव्यङ्ग्ययोर्युगपदेव प्रतीतिः । पावनत्वादिविशिष्टे तीर एव लक्षणाङ्गीकारेण तीरे तीरत्ववत्पावन-त्वादेरप्युपस्थितिसम्भवात् न च प्रयोजनाभावः । अधिकार्योपस्थितेरेव तत्त्वात् । न च घोषान्वयानुपपत्त्या तदुपपादकतया तीरत्वविशिष्टस्यैव वृत्तिविषयत्वम्, न तु पावनत्वादेरपीति वाच्यम् । तात्पर्यानुपपत्तेरेव तस्यापि वृत्तिविषयत्वसम्भवात् तात्पर्यानुपपत्तेर्लक्षणाबीजत्वस्य च यष्टीः प्रवेशयेत्यादि लक्षणोपपादकतया आवश्यक-त्वादिति चेन्मैवम् । शक्यसम्बन्धो हि लक्षणा । न चात्र शक्येन प्रवाहेन तीरस्य पावनत्वादिना चैकः सम्बन्धो-ऽस्तीति कथं विशिष्टे लक्षणा । यदि च तीरत्वाविशिष्टस्य बोधाय तीरलक्षणावत्पावनत्वादिविशिष्टतीरबोधनाय





तीरे लक्षणान्तरमिति मन्यसे तर्हि पावनत्वादिबोधकवृत्तिरेव व्यञ्जनेत्यङ्गीक्रियताम् । लक्षणाबोधितार्थातिरिक्तबोधकत्वात् । ननु सापि लक्षणैव धर्मिकल्पनात इति न्यायेन वृत्त्यन्तरस्याकल्पनीयत्वादिति चेन्न । तर्हि तन्न विवादमात्रम् । तीरत्वविशिष्टतीरोपस्थितेरिव पावनत्वादिविशिष्टोपस्थितेः स्वतन्त्रप्रयोजनतया तन्न्यायानवकाशश्चेत्यलं प्रसङ्गेन ।

वस्तुतो लक्षणायां सम्बन्धज्ञानापेक्षा व्यञ्जनायां तु न सम्बन्धज्ञानापेक्षेति लाघवात् सैवाश्रयणीयेत्यादि परोक्तं मनसि निधायाह **यत्किञ्चिदेतदिति** । यदेतल्लक्षणायां व्यञ्जनायां अन्तर्भावंवचनं यत्किञ्चित्फलवदित्यर्थः । एवं परोक्तप्रयोजने लक्षणापक्षं प्रदूष्य प्रयोजनमिव न वृत्तिहेतुः किन्तु सति मुख्येऽस्मदायत्ते शब्दप्रयोगे कस्मादकस्मादमुख्यं प्रयुंज्महीति वक्त्रप्रतिपत्त्रा चानुसन्धीयत इत्येतद्वक्ष्यमाणमूलानुसारेण स्वयं पावनत्वादि प्रयोजनस्यान्यथानुपपत्तिप्रमाणगम्यत्वान्न तत्र लक्षणादि कल्प्यमित्याह **वयं तु ब्रूम इति** । अन्यथानुपपत्तिप्रमाणस्य स्वतन्त्रस्य स्वमतेऽभावादुक्तं सङ्क्षेप इति । अयमाशयः । न च लिङ्गानुमा हि सेत्युक्तप्रकारेण विषं भुंक्ष्वेत्यादौ वचनलिङ्गानुमितक्रोधेन द्विषदन्नभोजनस्य स्वीकार्यत्वेन वक्त्रभिप्रायमनुमाय भोजने स्वेन वर्जनीयत्वानुमानवत् पावनत्वादावपि स्वायत्तप्रयोगे वाचकशब्दपरित्यागेन लाक्षणिकशब्दलिङ्गेन अयं पावनत्वादिप्रतिपादनाभिप्रायवान् अस्मदायत्ते प्रयोगेऽवाचकशब्दप्रयोक्तृत्वात् इति वक्त्रभिप्रायमनुमाय तीरं पावनत्वादिगुणकं तथात्वेन वक्त्रभिप्रेतत्वादित्येवं पावनत्वादिज्ञानं वचनलिङ्गानुमितानुमितिरेवेति न दोष इति । एतेनैतदपि प्रत्युक्तम् । सम्बन्धज्ञानापेक्षतया लक्षणातो व्यञ्जनायास्तदनपेक्षया लाघववदन्यथानुपपत्तिपक्षेऽपि सम्बन्धरूपाविनाभावापेक्षतया व्यञ्जनैवाश्रयणीयेति शक्यार्थसम्बन्धस्य लक्षणापेक्षानुपपत्तिर्व्यञ्जनापक्षे च तदनुपपत्त्यभाव इत्येव प्रागभिहितमिति यत्किञ्चित्सम्बन्धानपेक्षित्वस्य व्यञ्जनास्थले प्रागनभिहिततया अविनाभावाभावे व्यञ्जनाया अप्यनुत्थानेन तथा तदनपेक्षताया वक्तुमशक्यत्वेन चाविनाभावरूपसम्बन्धज्ञानापेक्षत्वेऽपि अनुपपत्तेरभावात् । तदेतदाह **इति सङ्क्षेप इति** ।

ननु यस्माच्छब्दात् यस्यार्थस्य निश्चयः तत्रार्थे तस्य शब्दस्य वृत्तिः कल्प्यते । घटादिशब्दानां घटादिरूपार्थतथात्वदर्शनात् व्यञ्जनायां च गच्छ गच्छसीत्यादौ माऽगा इत्यत्र तात्पर्यमुन्नीयते सम्भाव्यते वा न तु माऽगा इति निर्णीयते इत्यतो न व्यञ्जनाख्यवृत्त्यन्तरमङ्गीकार्यमिति सिद्धान्तमञ्जर्यां वस्तुत इत्यनेनोक्तपक्षं वा दूषयितुं सङ्क्षेप इत्युक्तम् । अयमाशयः । तात्पर्यानुमानपक्षमुक्त्वापि पुनः सम्भावनोक्ता । तत्रानुमानपक्ष एव सर्वत्रास्तु । अनुमितिसामग्री तु कथञ्चिदुपपाद्या न तु सम्भावनापि वाच्या । किञ्चित्तात्पर्यस्य सम्भावनामात्राङ्गीकारेण माऽगा इत्यर्थनिर्णयानङ्गीकारे गमनान्निवृत्तिः न स्यात् । न हि प्रवृत्तिनिवृत्ती क्वचिच्छङ्कयापि भवत इति सर्वत्र तथात्वमङ्गीकर्तुं शक्यम् । किञ्च माऽगा इत्यर्थनिर्णयाभावे भोजनोद्देशेन गमनार्थमुद्यतो मागा इत्यर्थनिर्णयाय निर्णायकं स्त्रीवाक्यान्तरमपेक्षत इति वाच्यमिति तदेवास्तु बाधकमित्यलमितीति सर्वमवदातम् । **वक्ष्यतीति** अनुवादपाठः ।





**स०व्र०— व्यञ्जनं नामेति** । व्यञ्जनं व्यापारः । तद् द्विविधम् । लक्षणामूलम् अभिधामूलं चेति । गङ्गायां घोष इत्यत्र पावनत्वादिप्रयोजनप्रतिपिपादयिषया गङ्गायामिति लाक्षणिकशब्दप्रयोगात् तत्र प्रतीयमानपावनत्वस्य प्रमाणान्तरेणाप्रतीतेः शब्देनैव तत्प्रतीत्यवश्यम्भावात् पावनत्वादौ गङ्गाशब्दस्यासङ्केतितत्वेनाभिधया गङ्गाशब्देन तद्बोधासम्भवात् गङ्गाशब्दस्य स्रोतस्सम्बद्धत्वेन तटलक्षकत्ववत् तटे बाधाभावेन मुख्यार्थानुपपत्त्यभावात् गङ्गाशब्दस्य पावनत्वाद्यैरसम्बन्धेन शक्यसम्बन्धाभावाच्च प्रयोजनाभावेन लक्षणाहेतुमुख्यार्थबाधादित्रयस्याभावात् लक्षणयापि तद्बोधकत्वानुपपत्त्या व्यञ्जनवृत्त्यैव तद्बोधकत्वाभ्युपगमाल्लक्षणामूलं व्यञ्जनमिदम् । अभिधामूलं तु इन्द्रशत्रुरित्यत्र शब्दद्वयस्यापि शक्तत्वात् बहुव्रीह्यवगमस्य प्रकारान्तरेणासम्भवेन स्वरेणैव वक्तव्यत्वात् तस्य च तत्र शक्तिलक्षणयोरभावेन व्यञ्जनावृत्त्यैव तदवगम इति । तथा च तादृशविधान्तरसद्भावात् त्रित्वमनुपपन्नमिति भावः । अन्यच्चोदाहरणं यथा 'गच्छ गच्छसि चेत्कान्त, पन्थानः सन्तु ते शिवाः । ममापि जन्म तत्रैव भूयाद्यत्र गतो भवान्' इत्यत्र भार्यामरणं व्यज्यत इत्यादि । इदं तु लक्षणामूलमिति द्रष्टव्यम् । शक्त्याद्यभावेऽपि सत्यस्मादायत्ते शब्दप्रयोगे कस्मादवाचकं प्रयोजनाभावात् प्रयोक्तव्यमिति अन्यथानुपपत्त्यैव पावनत्वादिबोधसम्भवेन अन्यथानुपपत्त्यभावेन न वृत्त्यन्तरमभ्युपेयमित्याह **अनुमानतयेति** ।

**विट्ठल०**— ननु 'गच्छ गच्छसि चेत्कान्त पन्थानः सन्तु ते शिवाः । ममापि जन्म तत्रैव भूयाद्यत्र गतो भवानि'त्यत्र देशान्तरजन्मना भार्यामरणरूपार्थो व्यज्यते । अतो व्यञ्जनं नाम वृत्त्यन्तरमङ्गीकार्यमिति शङ्कते **व्यञ्जनं नामेति** । **अनुमानतयेति** । देशान्तरजन्मनो मरणाविनाभूतत्वादिति भावः । **यथोक्तमिति** । कर्मनिर्णय इति शेषः । सा अर्थान्तरे धीर्वचनरूपलिङ्गजन्यानुमितिरूपेत्यर्थः ।

**चषकः— व्यञ्जनं नामेति** । 'निर्मृष्टं सखि चन्दनं स्तनतटे निर्मृष्टरागोऽधरः नेत्रे दूरमनञ्जने पुलकिता तन्वी तवेयं तनुः । मिथ्यावादिनि दूतिबान्धवजनस्याज्ञातपीडागमे वार्पी स्नातुमितो गतासि न पुनस्तस्याधमस्यान्तिकमि'त्यत्र अधमपदे दूत्युपभोक्तृत्वनिरूपिता व्यञ्जनाख्या वृत्तिरालङ्कारिकैः शक्तिलक्षणाप्रतिसन्धानाभावदशायामप्यन्वयबोधनिर्वाहायोपेतेत्यर्थः । **अनुमानतयेति** । स्तनतटचन्दनमार्जनादीनामुपभोगाविनाभूतत्वादिति भावः । विवेचनीयं चेदं साधनलक्षणे ।

**॥ इति व्यञ्जनायाः वृत्त्यन्तरत्वाभावः ॥**

* * *

**॥ तत्र तात्पर्यस्यापि वृत्त्यन्तरत्वाभावः ॥**

३१ **सु०— तात्पर्यवृत्तिस्तु नातिरिच्यत इति स्वयमेवाचार्यो वक्ष्यति ।**





**परि०— वक्ष्यतीति** । 'वाचकत्वं हि तात्पर्यं यदर्थमखिला रवा' इति ज्ञानपादे । एतच्चोपलक्षणम् । 'न च वाचनिकार्थ(क)स्तात्पर्यार्थ इति विशेषः तन्मानाभावादि'ति कर्मनिर्णये उपपादितं चेति ध्येयम् । अतो न तल्लक्षणानुक्तिर्दोषायेति भावः ।

**यादु०— स्वयमेवेति** । 'वाचकत्वं हि तात्पर्यं यदर्थमखिला रवा' इत्यत्र वक्ष्यतीत्यर्थः ।

**शे०वा०—** निषिद्धान्नभोजनवर्जनादिप्रतीतेर्वचनलिङ्गकानुमितित्वेन अशाब्दत्वान्नोक्तार्थप्रतीत्यर्थमुक्तोदाहरणेषु तात्पर्यवृत्तिरङ्गीकार्येत्याह **तात्पर्यवृत्तिस्त्विति** । वक्ष्यते 'वाचकत्वं हि तात्पर्यमि'त्यादिना तृतीयस्य चतुर्थ इति शेषः । यदत्र वक्तव्यं तत् तत्रैव वक्ष्यामः ।

**वा०र०—** ननु यदि मुख्यामुख्यवृत्तिविषयत्वातिरिक्तं तात्पर्यं नास्ति कथं तर्हि विषं भुङ्क्ष्वेत्यादेर्लौकिकवाक्यस्य निषिद्धभोजनवर्जनादौ तात्पर्यमित्यादिना तात्पर्यवृत्तिमाक्षिप्य लोकवेदसाधारणं तात्पर्यं तदर्थप्रतीतीच्छया प्रयुक्तत्वरूपमङ्गीकृत्य तात्पर्यवृत्तिरिति रिक्ता नाङ्गीक्रियत इत्यादि प्रमेयं बह्वत्र प्रतिपादनीयमभिप्रेत्याह **यदत्र वक्तव्यमिति** ।

**स०व्र०— वक्ष्यतीति** । 'वाचकत्वं हि तात्पर्यं यदर्था अखिला रवाः' इत्यादिना वक्ष्यतीत्यर्थः ।

**विठ्ठल०— वक्ष्यतीति** । 'वाचकत्वं हि तात्पर्यं यदर्था अखिला रवाः' इति ज्ञानपादे वक्ष्यतीत्यर्थः । अतो न तल्लक्षणानुक्त्या न्यूनतेति भावः ।

**चषकः— स्वयमेवेति** । 'वाचकत्वं हि तात्पर्यं यदर्था अखिला रवाः' इत्यादिनेत्यादिः ।

**॥ इति तात्पर्यस्यापि वृत्त्यन्तरत्वाभावः ॥**

* * *

**॥ तत्र सादृश्यसम्बन्धयोरतिरिक्तानां गौणीलक्षणावृत्तिहेतुत्वाभावः ॥**

**॥ तत्रादौ पूर्वपक्षः ॥**

३२ **सु०—** ''ननु मुख्यार्थानुपपत्तिं तत्सादृश्यं प्रयोजनं चापेक्ष्य गौणी प्रवर्तते । मुख्यार्थानुपपत्तितत्सम्बन्धप्रयोजनान्यपेक्ष्य तु लक्षणा । यथोक्तम् 'मुख्यार्थबाधे तद्योगे रूढितोऽथ प्रयोजनात् । अन्यार्थो लक्ष्यते यत्सा लक्षणारोपिता क्रिये'ति । तत्कथं सादृश्यसम्बन्धावेवोक्ताविवि''त्यत आह **पूर्वेति** ।

**अनु०—— पूर्वायोगे परग्रहः ॥**

**परि०—— यथोक्तमिति ।** काव्यप्रकाशे हेतुत्रयं लक्षणाबीजमुक्तमित्यर्थः । बाधे तद्योग इति निमित्तार्थे सप्तम्यौ । मञ्चाः क्रोशन्तीत्यादौ रूढितः । गङ्गायां घोष इत्यादौ प्रयोजनात् । पावित्र्यसामीप्यादिज्ञापनस्य प्रयोजनत्वात् । यत् यस्माद्व्यापारात् अन्यार्थोऽमुख्यार्थो लक्ष्यते ज्ञायते सा आरोपिता क्रिया स आरोपितः शब्दव्यापारः लक्षणेत्यर्थः । शब्दव्यापारस्यारोपितत्वं च मुख्यार्थ-व्यवहितार्थनिष्ठत्वं ज्ञेयम् । गौणवृत्तावुक्तहेतुत्रयसम्मतित्वपक्षे तु तद्योग इत्यत्र तत्सादृश्य इत्यर्थः । लक्षणेतिपदस्थाने गौणीति पदं च ध्येयम् । अन्यत् समानम् । अत्र श्लोके अमुख्यवृत्तौ मुख्यार्थ-बाधतद्योगप्रयोजनरूपं हेतुत्रयमुक्तम् । रूढित इत्यस्य लक्षणाप्रभेदरूपत्वेन अहेतुत्वात् क्वाचित्कत्वाच्च । तत्र तद्योगरूपहेतुरभिमतः । अन्यौ हेतू दूषणीयौ ।

**यादु०—— मुख्यार्थबाध इति ।** मुख्यार्थयोगतद्बाधाभ्यामन्यार्थो लक्ष्यते प्रतिपाद्यते इति· यत् सा लक्षणेत्यन्वयः । न तु लक्ष्यत इत्यस्य लक्षणयोच्यत इत्यर्थः । आत्माश्रयत्वप्रसङ्गात् । अत्र यदित्यनेन लक्ष्यत इत्याख्याते गुणीभूतं प्रतिपादनमात्रं परामृश्यते । यद्वा यद्यस्माद्व्यापारादन्यार्थो लक्ष्यते सा लक्षणेत्यर्थः । सर्वनाम्नां विधेयलिङ्गत्वस्य व्युत्पत्तिसिद्धत्वात् सेत्युक्तम् । 'रूढितोऽथ प्रयोजनादि'ति लक्षणाविभागपरं रूढलक्षणा प्रयोजनलक्षणेति द्विविधेति । न तु · लक्षणकोट्यन्तर्भूतम् । एकैकान्तर्भावेऽव्याप्त्यापत्तेः । उभयान्तर्भावे-ऽसम्भवप्रसङ्गात् । ननु स्वार्थं बोधयित्वा विरते शब्दे पश्चादर्थः तीरं प्रतिपादयतीत्यर्थधर्म एव लक्षणा नाम, न तु शब्दधर्मोऽतः कथं शब्दो लाक्षणिक इति व्यवहार इत्यत आह **आरोपिता क्रियेति** । शब्देऽध्यस्तो व्यापार इत्यर्थः । सत्यमर्थगतो व्यापार एव लक्षणेति । तथापि वाच्यगतो व्यापारो वाचके शब्दे आरोप्यते अतः शब्दो लाक्षणिक इति व्यवह्रियते परीक्षकैरित्येतच्छ्लोकार्थः ।

**आनन्दः——** रूढितः अथ च प्रयोजनाद्वा येन पदेन अन्यार्थो लक्ष्यते सा लक्षणा अनारोपिता क्रियते ।

**शे०वा०——** लक्षणागौण्योर्मुख्यार्थानुपपत्त्यादिहेतुत्रयसापेक्षत्वे काव्यसूत्रसम्मतिमाह **यथोक्तमिति ।** द्वितीयोल्लासे काव्यप्रकाशकृतेति शेषः । अत्र य इत्यर्थे यदित्यव्ययम् । तथा च योऽन्योऽर्थो लक्ष्यते सा लक्षणे-त्यन्वयः । लक्ष्यत इत्यस्य च प्रतिपाद्यत इत्येवार्थः । न तु लक्षणयोच्यत इत्यर्थः । तथा सत्यात्माश्रयापातात् । यद्यप्यत्र स लक्षणेति वक्तुमर्हति तथाऽपि सर्वशब्दानां विधेयोद्देश्यवाचकशब्दान्यतरलिङ्गग्राहकत्वं व्युत्पत्तिसिद्ध-मिति विधेयवाचकलक्षणाशब्दस्य स्त्रीलिङ्गत्वात् सेत्युक्तम् । अत एवाधारोऽधिकरणमिति सूत्रस्य य आधारः तदधिकरणमिति व्याख्यानं युक्तम् । यद्यपि चैवमपि यदा परामृष्टस्य प्रतिपाद्यस्य तदा परामर्शे तत्र लक्षणा-त्वविधानमनुपपन्नम् । तथापि सविशेषणे हीति न्यायेन तत्प्रतिपादने पर्यवसाने न दोषः । अत एव काव्यदर्पणे





यदित्यनेन गुणीभूतं प्रतिपादनं परामृश्यत इत्युक्तमित्यवधेयम् । अत्र च लक्षणाशब्दः शुद्धलक्षणापरो गौण्याख्याशुद्धलक्षणापरश्च । मुख्यार्थबाधो ज्ञाप्यार्थबाधः । तेन निर्वचनानुपपत्ते रूढिलक्षणामूलभूतायाः सङ्ग्रहः । अन्यथा कर्मणि कुशल इत्यत्र कुशलशब्दस्य कुशादानकर्तरि शक्त्यभावात्सङ्ग्रहो न स्यात् । अत्रान्वयानुपपत्तिवत्तात्पर्यानुपपत्तिरपि द्रष्टव्या । तेनाजहत्स्वार्थलक्षणापरपर्याया उपादानलक्षणाया अपि सङ्ग्रहः कृतो भवति । योगश्च सम्बन्धरूपः सादृश्यरूपश्च । अत एव 'भेदाविमौ च सादृश्यात् सम्बन्धान्तरतस्तथा । गौणौ शुद्धौ च विज्ञेयावि'त्युत्तरत्र वक्ष्यति । तथा च मुख्यार्थबाधतद्योगाभ्यां शक्त्यविषयार्थप्रतिपत्तिर्लक्षणेति प्राञ्चः । नवीनास्तु यदित्यव्ययं यस्मादित्यर्थे । तथा च यस्माद्व्यापारादन्योऽर्थः प्रतिपाद्यते सा लक्षणेत्यर्थः । युक्तश्चायं पक्षः । अन्वयप्रतियोग्युपस्थित्यर्थं वृत्तिकल्पनात् । ततश्च शक्यसम्बन्ध एव लक्षणेति पर्यवसन्नं भवति ।

न चैवमभिधेयाविनाभूतेत्यागामिग्रन्थविरोधः स्यादिति वाच्यम् । प्रतीयतेऽनेनेति प्रतीतिरिति करणव्युत्पत्त्या प्रतीतिशब्दस्य तत्रैव विश्रान्तेः । अत एव तद्भूर्लाक्षणिकः शब्द इत्युपसञ्जहार सूत्रकारः । वृत्तिकृताऽप्युक्तम्, आरोपिता क्रिया आरोपितः शब्दव्यापार इति । उपस्थितेरेव लक्षणात्वे आरोपितो व्यापार इत्यसाधु । उपस्थितेर्व्यापारत्वाभावात् । न च शक्यसम्बन्धस्य लक्षणात्वे तद्योग इति व्यर्थम् । मुख्यार्थबाधतद्योगयोर्लक्ष्यप्रतीत्यनुकूलत्वे समानेऽपि मुख्यार्थबाधो मुख्यार्थान्वयप्रतिबन्धद्वारा, शक्यसम्बन्धस्तु साक्षादेव तदुपस्थापक इति स एव लक्षणेति प्रतिपादनार्थत्वात् । न चैवमपि हेत्वभावात् न लक्षणेत्यनन्तरोक्तेः न मुख्यार्थबाधादित्रयं हेतुरिति पञ्चमोल्लासेन च विरोधः । न हि शक्यसम्बन्धाभावे शक्यसम्बन्धाभावो, न वा शक्यसम्बन्धो हेतुर्घटत इति वाच्यम् । प्रयोजनं न लक्षणाजन्यज्ञानाविषयो हेत्वभावादित्यत्र प्रथमस्य तात्पर्यात् । नाभिधा समयाभावादित्यत्र साध्यावैशिष्ट्यभयेन प्रयोजनम्, नाभिधाजन्यज्ञानविषय इत्यस्यावश्यवाच्यत्वेनोक्तप्रकारस्य आश्रयणीयत्वात् । मुख्यार्थभावरूढिप्रयोजनरूपहेतुत्रयसापेक्षत्वे द्वितीयस्य तात्पर्यात् । वस्तुतो लक्षणापदस्योभयव्युत्पन्नतया क्वचित्किञ्चित्पुरस्कृत्याभिधानमिति न पूर्वापरविरोधः । वृत्तित्वं तु करणव्युत्पत्तिमूलमेवेति द्रष्टव्यम् । रूढितोऽथ प्रयोजनादिति विभागपरं रूढलक्षणा प्रयोजनलक्षणा चेति, न तु लक्षणान्तर्गतम् । एकैकस्यान्तर्भावेऽव्याप्तिप्रसङ्गात् । उभयान्तर्भावे त्वसम्भवप्रसङ्गात् । ननु गङ्गायां घोष इत्यत्र स्वार्थे स्रोतसि प्रत्यायिते गङ्गाशब्दो निवृत्तव्यापारो भवति । ततः प्रत्यायितं स्रोतस्तीरं लक्षयतीत्यर्थधर्मोऽयं लक्षणा नाम, न शब्दधर्मः तत्कथं शब्दो लाक्षणिक इति तत्राह **आरोपिता क्रियेति** । आरोपितः शब्दव्यापारो वाच्यधर्म एव शब्दे आरोप्यत इति लाक्षणिकः शब्द उच्यते । तत्प्रतिपादितस्यैवार्थस्य लक्ष्यकत्वादिति प्राञ्चः । नवीनास्तु लाक्षणिकमपि पदमनुभावकमेव । आरोपितत्वोक्तिस्तु साक्षात्सम्बन्धाभावनिबन्धनेति तर्कदृष्ट्या प्राहुः । ततश्चायं सूत्रार्थः । रथादिकर्मणि कुशल इत्यादौ दर्भग्रहणाद्ययोगात् गङ्गायां घोष इत्यादौ गङ्गादीनां घोषाद्यधिकरणत्वासम्भवात् मुख्यार्थस्य बाधे सति च विवेचकत्वादौ सामीप्ये च सम्बन्धे रूढितः प्रयोगबाहुल्यरूपप्रसिद्धेः । तथा गङ्गातटे घोष इत्यादेः प्रयोगात् येषां न तथा प्रतीतिः तेषां पावनत्वादीनां धर्माणां तथा प्रतिपादनादात्मनः प्रयोजनाच्च । मुख्येनामुख्यार्थो लक्ष्यते यत्स आरोपितः शब्दव्यापारः । मुख्यार्थव्यवहिततीरादिनिष्ठो लक्षणा इति ।

**वा०र०— लक्षणागौण्योरिति** । यद्यपि काव्यसूत्रकृन्मते गौणी लक्षणातुल्यतया स्वतन्त्रा (?) वृत्तिमाश्रित्य तत्रापि मुख्यार्थबाधादिकं हेतुरिति नोक्तम् । 'स्याद्वाचको लाक्षणिकः शब्दोऽत्र व्यञ्जकस्त्रिधे'ति वाचकलाक्षणिकव्यञ्जकभेदेन शब्दत्रैविध्यस्य तदुपयोगितया अभिधालक्षणाव्यञ्जना चेति वृत्तित्रयस्यैव च तेनाभिधानात् । अत एव च मुख्यार्थबाध इत्येतत् कारिकोक्तमेव लक्षणालक्षणत्वेन ततश्चायं सूत्रार्थ इत्यादिना वक्ष्यते तथापि लक्षणायां शुद्धा गौणी चेति विभागमाश्रित्य परेणोभयविधलक्षणाकथनादस्माभिः शुद्धलक्षणाया लक्षणात्वेन गौण्याश्च गौणीत्वेनैव निर्देशात् तदुभयस्वरूपनिरूपणपरं सूत्रं प्रकृते साधकतया युक्तमुदाहर्तु-मित्याशय इति ज्ञेयम् । काव्यसूत्रकृतेति शेष इति पाठः । प्रकाशपदं लेखकागतम् । काव्यसूत्रेत्यवतारे उक्तेः । वृत्तिकृतापीति वक्ष्यमाणत्वाच्च । अत एव व्यञ्जनास्थले काव्यसूत्रेति वृत्तिकारेति व्यवहार इति न दोषः । .........नुसारेण व्याख्यानं तावदाह **अत्र य इत्यर्थ इत्यादिना** । **तथापि सर्वनामेति** । उद्दिश्यमानप्रति-निर्दिश्यमानयोरैक्यमापादयन्ति सर्वनामानि क्रमेण तल्लिङ्गभाजि भवन्तीति इको गुणेति सूत्रे मञ्जर्यामुक्तन्याय-स्यार्थानुवादोऽयं उद्दिश्यमानप्रतिनिर्दिश्यमानशब्दयोरनूद्यमानविधीयमानार्थकत्वेन विधेयोद्देश्यपदाभ्यां तदर्थ-ग्रहणात् उक्तं न्यायमभिप्रेत्यैव साहित्यदीपिकायामपि सा लक्षणेति प्रतिनिर्दिश्यमानलिङ्गोपादानमित्युक्तमिति ज्ञेयम् । न्यायकल्पनामूलमाह **अत एवेति** । **यदेति** । यच्छब्देनेत्यर्थः । **अनुपपन्नमिति** । अर्थस्य लक्षणा-विषयतया लक्षणात्वाभावादित्याशयः । **तत्प्रतिपादन इति** । लक्ष्यत इत्याख्याते गुणीभूतप्रतिपादन इत्यर्थः । तथैव साहित्यदीपिकायां लाडभास्करेणोक्तेः । अत एव तद्वाक्यं प्रमाणयति **अत एवेति** । योगज्ञाप्यार्थस्य रूढार्थवन्मुख्यार्थत्वाभावस्य तेनोक्तत्वात् तदनुसारेणाह **मुख्यार्थबाध इति** । **शक्त्यभावादिति** । तथा च कुशादानकर्तृत्वस्य मुख्यार्थत्वाभावेन तदनुपपत्तिर्वक्तुमशक्येति तत्सङ्ग्रहानुपपत्तिरित्यर्थः । **तेनाजहत्स्वार्थेति** । काकेभ्यो दधीत्यादौ ज्ञाप्यार्थबोधोऽपि नास्तीत्यतस्तत्सङ्ग्रहाय तात्पर्यानुपपत्तिरपि वाच्येत्याशयः ।

एतेनैतदपि प्रत्युक्तम् । यत्कैश्चिदुक्तं काकेभ्य इत्यादौ बीजाभावेन लक्षणैव नास्ति अतात्पर्यके काकमात्रतात्पर्यके वा तदभावावश्यकत्वादिति अतात्पर्यके वा काकमात्रतात्पर्यके वा लक्षणाया अनावश्यक-त्वेऽपि यत्र दध्युपघातकमात्राभिप्रायो न काकमात्राभिप्रायश्च तत्र लक्षणां विना तद्बोधायोगात् । न हि तत्र वृत्त्यभावे तद्बोधः सम्भवतीति शुद्धाशुद्धलक्षणासङ्ग्रहाय विभागेन सम्बन्धं निरूपयति **योगश्चेति** । सारबोधिन्यां अन्यार्थप्रतीतिहेतुशब्दव्यापारो लक्षणेत्यर्थः । इत्युक्तेऽपि टीकान्तरे वस्तुतस्तद्धेतुः सम्बन्धो लक्षणेति तत्त्वं उपस्थितिहेतोरेव वृत्तित्वादिति प्रतिपादनात् तदनुसारेणाह **नवीनास्त्विति** । यदित्यस्य यत इत्यर्थकत्वे प्रतीतिर्लक्षणोच्यत इत्यादि विरोधात् तथा न वक्तुं शक्यमिति केषाञ्चिद्व्याख्यानदूषणं परिहरति **न चैवमिति** । **तद्भूर्लाक्षणिक इति** । अत्र स्याद्वाचको लाक्षणिकः शब्द इत्येतदादिसूत्रस्थशब्दशब्दस्य सम्बन्धः । तद्भूतत्वं च तदाश्रयत्वं हेतुत्वायोगात्, तथा च लाक्षणिकः शब्दः तद्भूः वाचकाश्रयः । शक्यसम्बन्धाभावे लक्षणाया अयोगेन लाक्षणिकस्य वाचकाश्रयत्वोक्तेरिति भावः । मधुमत्याद्यनुसारेणोत्तरो ग्रन्थो बोध्यः । मुख्यार्थबाधे इत्येतत्सूत्रीयवृत्त्यनुसारेण सूत्रार्थमाह **ततश्चायं सूत्रार्थ इति** । अथ प्रयोजनादित्यत्र अथेत्यस्य विकल्पार्थत्वा-





शयेनाह **तथा गङ्गेति** । येषां पावनत्वादीनामिति वक्ष्यमाणमिहापि सम्बध्यते । **प्रतिपादनादात्मन इति** । तदात्मकात्प्रयोजनादित्यर्थः । प्रयोजनात् प्रयोजनमुद्दिश्येति ल्यप्लोपनिमित्ता पञ्चमी । नन्वेवं हेतुद्वैविध्येऽननुगम इति चेत् । अत्र मिश्राः अन्यतरत्वे नानुगममाहुः । केचित् तु रूढिप्रयोजने भेदके न स्वरूपनिर्वाहके प्रत्येकं हेतुत्वे अननुगमात् । समुदाये च हेतुत्वासम्भवादित्याहुः । वस्तुतस्तु रूढ्यभावसहकृतप्रयोजनाभावाभावस्य लक्षणेऽनुप्रवेशान्नाननुगम इति सारबोधिनीकारः ।

**स०व्र०— मुख्यार्थबाध इति** । मुख्यार्थयोगतद्बाधायां अन्यार्थो लक्ष्यते प्रतिपाद्यत इति यत् सा लक्षणेत्यन्वयः । न तु लक्ष्यत इत्यस्य लक्षणयोच्यत इत्यर्थः । आत्माश्रयत्वप्रसङ्गात् । अत्र यदित्यनेन लक्ष्यत इत्याख्यातगुणीभूतप्रतिपादनमात्रं परामृश्यते । यद्वा यत् यस्मात् व्यापारादन्यार्थो लक्ष्यते सा लक्षणेत्यर्थः । सर्वनाम्नो विधेयलिङ्गत्वस्य व्युत्पत्तिसिद्धत्वात् सेत्युक्तम् । रूढितोऽथ प्रयोजनादिति लक्षणाविभागपरं रूढलक्षणा प्रयोजनलक्षणेति, न तु लक्षणकोटयन्तर्भूतम् । अव्याप्त्यसम्भवप्रसङ्गात् । एकैकान्तर्भवे अव्याप्तिः उभयान्तर्भवे तु असम्भव इति । ननु स्वार्थं बोधयित्वा विरते शब्दे पश्चादर्थः तीरं प्रतिपादयतीत्यर्थधर्म एव लक्षणा नाम, न तु शब्दधर्मः, अतः कथं शब्दो लाक्षणिक इति व्यवहार इत्यत आह **आरोपिता क्रियेति** । शब्देऽध्यस्तो व्यापार इत्यर्थः । सत्यमर्थगतो व्यापार एव लक्षणेति । तथापि वाच्यगतो व्यापारो वाचके शब्दे आरोप्यते अतः शब्दो लाक्षणिक इति उच्यते **परीक्षकैरिति** ।

वाचकस्वरूपं निरूपितम् । लाक्षणिकस्वरूपमिदानीं निरूपणीयम् । तच्च लक्षणाद्वारम् । तद्वाँल्लाक्षणिक इति वक्ष्यति । अतो लक्षणास्वरूपं तावन्निरूपयति 'मुख्यार्थबाधे तद्योगे रूढितोऽथ प्रयोजनात् । अन्यार्थो लक्ष्यते यत्सा लक्षणाऽऽरोपिता क्रिये'ति । मुख्यार्थबाधतद्योगाभ्यां अन्यार्थो लक्ष्यते प्रतिपाद्यते इति यत् सा लक्षणेत्येतावल्लक्षणम् । यच्छब्देन लक्ष्यते इत्याख्यातगुणीभूतं प्रतिपादनमात्रं परामृश्यते ।

अन्यस्त्वाह यतो व्यापारादन्यार्थो लक्ष्यते सा लक्षणेति । प्रतिनिर्दिश्यमानलिङ्गोपादानमत्र । अन्यथा लक्ष्यत इति यत्सा लक्षणेत्युक्ते यच्छब्देन लक्ष्यत्वपरामर्शः स्यात् । न ह्येषा लक्षणा । लक्ष्यत्वं हि लक्ष्यधर्मः । लक्षणा तु लक्षकधर्म एवेति । तच्च (सम्यक्?) लक्ष्यत इत्यत्राख्याते गुणीभूतप्रतिपादनमात्रं परामृश्यत इत्युक्तं स्यात् । तत्प्रतिपादनम् । प्रतिपादन एव धर्मे । रूढितोऽथ प्रयोजनादिति लक्षणाविभागपरम् । रूढिलक्षणा प्रयोजनलक्षणेति । न तु लक्षणकोट्यन्तर्भूतम् । तथात्वे अव्याप्त्यसम्भवौ स्याताम् । एकैकस्यान्तर्भवेऽव्याप्तिः । उभयान्तर्भवे त्वसम्भवः । ननु गङ्गायां घोष इत्यत्र स्रोतसि प्रत्यर्पिते गङ्गाशब्दो निवृत्तव्यापारोऽभूत् ततः प्रत्यर्पितं स्रोतः तीरं लक्षयतीत्यर्थधर्मोऽयं लक्षणा नाम, न तु शब्दधर्मः । तत्कथं शब्दो लाक्षणिक इत्याशङ्क्याह **आरोपिता क्रियेति** । आरोपितशब्दव्यापार इत्यर्थः । वाच्यधर्म एव शब्दे आरोप्यते तत्प्रतिपादितस्यैवार्थस्य लक्षकत्वात् । आरोपे हेतुमाह **सान्तराऽर्थनिष्ठ इत्यादि**।

लाक्षणिकशब्दस्वरूपं विवेक्तुं लक्षणां तावद्विवेचयति **मुख्यार्थबाध इति**। अत्र य इत्यर्थे यदित्यव्ययम्। तथा च योऽन्योऽर्थो लक्ष्यते प्रतिपाद्यते सा लक्षणेत्यन्वयः। न तु लक्षणयोच्यत इत्यर्थः। आत्माश्रयात्। यद्यपि 'स लक्षणा' इति वक्तुमर्हति; तथापि सर्वशब्दानां विधेयोद्देश्यवाचकशब्दान्यतरलिङ्गग्राहकत्वं व्युत्पत्तिसिद्धमिति विधेयवाचकलक्षणाशब्दस्य स्त्रीलिङ्गत्वात् सेत्युक्तम्। अत एवाधारोऽधिकरणमिति सूत्रस्य य आधारः तदधिकरणमिति व्याख्यानमुक्तम्। यद्यपि चैवमपि यदा परामृष्टस्य प्रतिपाद्यस्य तदा परामर्शे तत्र लक्षणाविधानमनुपपन्नं तथापि सविशेषणे हीति न्यायैर्वा तत्प्रतिपादनं पर्यवसन्नम्। अत एव काव्यदर्पणे पितृचरणैरुक्तं यदित्यनेन गुणीभूतं प्रतिपादनं परामृश्यत इति। **मुख्यार्थबाधः** ज्ञाप्यार्थबाधः। तेन निर्वचनानुपपत्तेः रूढिलक्षणामूलभूतायाः सङ्ग्रहः। अन्यथा कुशलशब्दस्य कुशादानकर्तरि शक्त्यभावात् सङ्ग्रहो न स्यात्। अतोऽन्यथानुपपत्याऽर्थापत्तिरपि द्रष्टव्या इति सोपादानलक्षणासङ्ग्रहो भवति। तथा च मुख्यार्थबाधतद्योगाभ्यां शक्त्यविषयार्थप्रतिपत्तिर्लक्षणेति प्राञ्चः।

नवीनास्तु यदित्यव्ययं यस्मादित्यर्थे। तथा च यस्माद् अन्योऽर्थः प्रतिपाद्यते सा लक्षणेत्यर्थः। युक्तश्चायं, अन्वयप्रतियोग्युपस्थित्यर्थं वृत्तिकल्पनात्। तथा च शक्यसम्बन्ध एव लक्षणा। न च अभिधेयाविनाभूतेत्याद्यागामिग्रन्थविरोधः। करणव्युत्पत्त्या प्रतीतिशब्दस्य तत्रैव विश्रामात्। अत एव तद्भूर्लाक्षणिक इत्युपसञ्जहार सूत्रकारः। वृत्तिकृताऽप्युक्तं आरोपिता क्रिया आरोपितः शब्दव्यापार इति। उपस्थितेर्लक्षणात्वे आरोपितो व्यापार इत्यसाधु उपस्थितेर्व्यापारत्वाभावात्। न च शक्यसम्बन्धस्य लक्षणात्वे तद्योग इति व्यर्थं, मुख्यार्थबाधतद्योगयोर्लक्ष्यप्रतीत्यनुकूलत्वे समानेऽपि मुख्यार्थबाधो मुख्यार्थान्वयप्रतिबन्धद्वारा, शक्यसम्बन्धस्तु साक्षादेव तदुपस्थापक इति स एव लक्षणेति प्रतिपादनार्थत्वात्। न चैवमपि हेत्वभावात् न लक्षणेत्यनन्तरोक्तेः न मुख्यार्थबाधादित्रयं हेतुरितीति पञ्चमोल्लासेन च विरोधः। न हि शक्यसम्बन्धाभावे शक्यसम्बन्धाभावो, न वा शक्यसम्बन्धे शक्यसम्बन्धो हेतुर्घटत इति वाच्यम्; प्रयोजनं न लक्षणाजन्यज्ञानविषयो हेत्वभावादिति प्रथमस्य तात्पर्यात्। नाभिधा समयाभावादित्यत्र साध्यावैशिष्ट्यभयेन प्रयोजनं नाभिधाजन्यज्ञानविषय इत्यस्य च अवश्यवाच्यत्वेन उक्तप्रकारस्याश्रयणीयत्वात् मुख्यार्थबाधरूढिप्रयोजनरूपहेतुत्रयसापेक्षत्वे द्वितीयस्य तात्पर्यात्। वस्तुतस्तु लक्षणापदस्य उभयव्युत्पन्नतया क्वचित् किञ्चित् पुरस्कृत्याभिधानमिति न पूर्वापरविरोधः। वृत्तिता तु करणव्युत्पत्तिमूलैवेति तत्त्वम्। रूढितोऽथ प्रयोजनादिति विभागो न तु लक्षणप्रविष्टं, प्रत्येकसमुदायाभ्यां अव्याप्त्यसम्भवयोः प्रसङ्गात्। ननु स्वार्थं बोधयित्वा विरते शब्दे पश्चादर्थस्तीरं प्रतिपादयतीत्यर्थव्यापारोऽयं न शब्दस्येत्यत आह **आरोपिता क्रियेति**। अर्थव्यापार एव शब्द आरोप्यत इति लाक्षणिकः शब्द उच्यत इति भावः। अस्मत्पितृचरणस्तु लाक्षणिकमपि पदमनुभावकं आरोपितत्वोक्तिस्तु साक्षात्सम्बन्धाभावनिबन्धनेति तर्कदृष्ट्या प्राह व्याख्यानान्तरमिति।

**विठ्ठल०— मुख्यार्थबाध इति**। मुख्यार्थानुपपत्तौ तत्सम्बन्धे च सति। **अन्यार्थो लक्ष्यत इति**। यत्सा लक्षणा सर्वनाम्नां विधेयलिङ्गत्वस्य व्युत्पत्तिसिद्धत्वात्सेत्युक्तम्। सा द्विविधा रूढितः प्रयोजनाद्वेति।





रूढारूढभेदादिति यावत् । सा लक्षणा आरोपितक्रिया आरोपितशब्दव्यापारेत्यर्थः । गङ्गाशब्दस्य स्वार्थप्रतिपादन इव तीरप्रतिपादने स्वतो व्यापारो नास्ति किं त्वन्यायत इति भावः । अथवा गङ्गायां घोष इत्यत्र गङ्गा-शब्दबोधितः प्रवाहस्तीरं लक्षयतीत्यर्थव्यापारो लक्षणा । न शब्दव्यापारः शब्दस्य मुख्यार्थप्रतिपादकतयैव चरितार्थत्वात् तत्कथं लक्षणायाः शब्दनिष्ठत्वमित्यत आह **आरोपिता क्रियेति** । तथा च वाच्यगतव्यापारः वाचके शब्दे आरोप्यते । अतःशब्दो लाक्षणिक उच्यत इति भावः । यद्वा अभिधेयाविनाभूतप्रतीतिर्लक्षणोच्यत इति प्रतिपत्तृनिष्ठप्रतीतेरेव लक्षणात्वेनोक्तत्वात् कथं शब्दधर्मत्वमित्यत आह **आरोपितक्रियेति** । प्रतीतिधर्मः शब्दे आरोप्यत इति भावः ।

**चषकः**— लक्षणागौण्योरुक्तसाधनत्रिकसाध्यत्वे काव्यप्रकाशग्रन्थं प्रमाणयति **यथोक्तमिति** । **रूढितोऽथ प्रयोजनादिति** । लक्षणाद्वयी; एका रूढलक्षणा प्रयोजनानपेक्षा, अपरा तत्सापेक्षलक्षणेति तद्वैविध्य-प्रदर्शनपरमिति मन्तव्यम् । यदित्यव्यं य इत्यर्थे । योऽन्योऽर्थो लक्ष्यते प्रतिपाद्यते आत्माश्रयताप्रसङ्गेन लक्षणया प्रतिपाद्यत इति नार्थः । सर्वनाम्नां या पृथिवी सा द्रव्यमित्यादौ उद्देश्यबोधकलिङ्गग्राहकत्वस्येव विधेयवाचकलिङ्गग्राहकत्वस्याप्याधारः अधिकरणमित्यादौ य आधारः तदधिकरणमित्यादौ दर्शनात् प्रकृते विधेयवाचकलक्षणापदलिङ्गाभिप्रायेण सेत्युक्तिः । ननु गङ्गायां घोष इत्यादौ गङ्गापदे विरतेऽपि तत्प्रत्यायित-प्रवाह एव तीरं लक्षयतीत्यर्थधर्म एव लक्षणेतिमते कथं शब्दो लाक्षणिक इति व्यवहारः सङ्गमनीय इत्यत आह **आरोपिता क्रियेति** । अभिधेयगत एव व्यापारः अभिधायकपदेऽध्यस्त इति तथा व्यवहारः अध्यासमूलक इति कारिकाशयः ।

**॥ इति पूर्वपक्षः ॥**

* * *

**॥ अथ उत्तरपक्षः ॥**

**३३ सु०— न मुख्यानुपपत्तिः अमुख्यवृत्तेः कारणम्, प्रयोगोत्तरकालीनत्वात् अनुप-पत्तिदर्शनस्य, किन्तु मुख्यार्थानुपपत्तिदर्शनम् अमुख्यार्थग्रहणस्य हेतुः । अत एव हि न शब्देन अपेक्ष्यते, नापि प्रयोक्त्रा, किन्तु प्रतिपत्त्रैव । शब्दो हि व्युत्पत्तिवशान्मुख्य-मेवार्थं प्रथमं बुद्धावारोहयति, न च प्रतिपत्ता तं सहसोत्स्रष्टुमुत्सहत; इति तदर्थ-मेवानुपपत्तिमपेक्षते । अतो न वृत्तिकारणचिन्तायामियं वाच्या ।**

**प्रयोजनमपि न वृत्तिहेतुः, किन्तु 'सति मुख्येऽस्मदायत्ते शब्दप्रयोगे (ऽ)कस्मा-दमुख्यं प्रयुञ्ज्महे' इति वक्त्रा प्रतिपत्त्रा चानुसन्धीयते । अतोऽत्र न वक्तव्यमिति ।**





**अत्रायोगग्रहणं प्रयोजनस्याप्युपलक्षणम् । (यथा) अयोगः सार्वत्रिको न तथा प्रयोजनं, रूढायां गौण्यां लक्षणायां चाभिधातुल्यत्वेनानपेक्षितत्वादिति विशेषसूचनाय न स्वशब्देनोपात्तम्, निर्दलत्वात् ।**

**'मुख्यायोगेऽमुख्यग्रह' इति वक्तव्ये 'पूर्वायोगे परग्रह' इति वचनं लक्षितलक्षणाद्यनुगमार्थम् । न हि लक्षितलक्षणा मुख्यासम्भवमात्रेण आश्रीयते, किन्तु लक्षितस्य अपि । अत एवैतदयुक्तं मुख्यार्थबाध इति ।**

**परि०**— तत्राद्यं हेतुं तावन्निराह **न मुख्यार्थानुपपत्तिरित्यादिना** । **अमुख्यवृत्तेरिति** । अमुख्यार्थप्रतिपादकत्वरूपशब्दव्यापारस्येत्यर्थः । **प्रयोगोत्तरकालीनत्वादिति** । एतच्च 'शब्दो ही'त्यादिना अग्रे व्यक्तम् । किं तस्य सर्वथानुपयोग एवेति प्रश्ने उत्तरमाह **किन्त्वित्यादिना** । कुत एवमित्यतः स किं शब्देन लक्ष्यतीराद्यर्थबोधनेऽपेक्ष्यते अथ प्रयोक्त्रेति द्वयमपि क्रमेण निराह **अत एवेति** । अमुख्यार्थग्रहणहेतुत्वादेवेत्यर्थः । **अपेक्ष्यते** तीरादिबोधनार्थमिति योज्यम् । **नापि प्रयोक्त्रेति** । प्रयोगार्थमपेक्ष्यत इत्यर्थः । किन्त्वनेन सम्बन्धेन गङ्गादिपदं तीरादिकं बोधयिष्यतीत्यभिप्रेत्यैवं प्रयुङ्क्ते इति भावः । प्रतिपत्त्रैव अमुख्यार्थग्रहणाय अपेक्ष्यत इत्येतद्व्यनक्ति **शब्दो हीति** । द्वितीयं च हेतुं निराह **प्रयोजनमपीति** । **न वृत्तिहेतुरिति** । अमुख्यार्थप्रतिपादनरूपे शब्दव्यापारे हेतुरित्यर्थः । **अकस्मात्** निर्निमित्तमित्यर्थः । **अनुसन्धीयते** प्रयोजनमित्यनुषङ्गः । **अतोऽत्रेति** । वृत्तिचिन्तायामित्यर्थः । **अत्रायोगेति** । पूर्वायोगे परग्रह इत्यत्र मुख्यार्थायोगे प्रयोजने च सति अमुख्यार्थस्य ग्रहणमिति बोध्यमित्यर्थः । **स्वशब्देनेति** । वाचकशब्देनेत्यर्थः । **अत एवेति** । लक्षितलक्षणायामव्याप्तेरेवेत्यर्थः ।

**यादु०**— **प्रयोगेति** । अमुख्यवृत्तिमच्छब्दोच्चारणोत्तरकालीनानुपपत्तिदर्शनस्य अमुख्यवृत्तिकारणत्वासम्भवादित्यर्थः । **अत एवेति** । पूर्वभावित्वादेवेत्यर्थः ।

**आनन्दः**— नामान्तरम् **अत एवेति** । मुख्यानुपपत्तिदर्शनस्यामुख्यार्थकारणत्वादेवेत्यर्थः । अमुख्यार्थानुपपत्तिदर्शनं अमुख्यार्थग्रह एव कारणं न त्वमुख्यवृत्तावित्येतदन्वयव्यतिरेकाभ्यां उपपादयति **शब्दो हीति** । न च योगस्य स्वमुखेनोपादाने प्रयोजनस्य तूपलक्षणमित्येतत्कुत इत्यत आह **अयोग इति** । **निर्दलत्वान्मुख्यायोग इति** । निर्दलत्वादित्यत्र पूर्वायोगे परग्रह इत्यस्येति शेषः । तथा च पूर्वायोगे परग्रह इत्यस्य निर्दलत्वात् पूर्वयोगे सति परग्रहः कर्तव्यः इति अनयोः निमित्तनिमित्तिभावस्य स्फुटमप्रतीयमानत्वादिति यावत् । मुख्यायोगे





मुख्यग्रहः कर्तव्य इत्यस्य सदलत्वानिमित्तनिमित्तिभावस्य स्फुटं प्रतीयमानत्वात् पूर्वायोग इति न वक्तव्यम् । किं तु मुख्यायोग इत्येव वक्तव्यमित्यर्थः । मुख्यायोग इत्युक्तेः कथं तदनुगमो न सिद्ध्यतीत्यत आह **न हीति** । **अत एवेति** । लक्षितस्याप्यर्थस्यासम्भवो यत इत्यर्थः । तथा च मुख्यार्थबाधमात्रेण लक्षणा कर्तव्येत्ययुक्तम् । लक्षितलक्षणस्थले लक्षितस्याप्यर्थस्य बाधितत्वादिति भावः ।

**श्रीनिधि०— निर्दलत्वादिति** । काचित्कत्वेनायोगवत् समबलत्वाभावादिति भावः ।

**शे०वा०— अमुख्यवृत्तेरिति** । अत्र वृत्तिशब्देन प्रतिपादकत्वमेवाभिमतम् । न तु तदनुकूलव्यापारः । तथा सति मुख्यार्थानुपपत्त्यादेस्तद्धेतुत्वस्थापनानौचित्यप्रसङ्गात् । न हि सम्बन्धोऽनुकूलव्यापारे हेतुः सम्भवति । अनुकूलव्यापारस्यापि सम्बन्धत्वेनाभेदादिति भावः । **प्रयोगेति** । बोधकशब्दप्रयोगेत्यर्थः । उपलक्षणमेतत् । तस्य प्रथमोपस्थितमुख्यार्थत्यागमात्रहेतुत्वेन तीरबोधनेऽनपेक्षितत्वादित्यपि द्रष्टव्यम् । **अत एवेति** । मुख्यार्थानुपपत्तेः प्रतिपादकत्वरूपायां वृत्तावकारणत्वादेव न मुख्यार्थानुपपत्तिः गङ्गाशब्देन बोधनार्थमपेक्ष्यते; किं नाम अशक्यतीरबोधनेऽतिप्रसङ्गान्नियामकं शक्तिस्थानीयं सम्बन्धमेवापेक्षत इति प्रतिपादकत्वरूपायां वृत्तौ सम्बन्ध एव हेतुरिति भावः । **नापि प्रयोक्त्रेति** । प्रयोगार्थमिति शेषः । अनेन सम्बन्धेन गङ्गापदं तीरं बोधयिष्यतीत्यभिप्रेत्यैव तेन गङ्गापदप्रयोगादिति भावः । **प्रतिपत्त्रैवेति** । अपेक्ष्यत इति वर्तते । मुख्यार्थत्यागायेति शेषः । तदेव विशदयति **शब्दो हीति** । **अत इति** । प्रतिपादकत्वरूपवृत्तावकारणत्वादित्यर्थः । **न वृत्तिहेतुरिति** । शब्दस्याचेतनत्वेन तेन बोधनाय तदनपेक्षणात् । बोधकार्यत्वेन प्रयोजनस्य तदहेतुत्वाच्चेति भावः । **अत इति** । प्रतिपादकत्वरूपवृत्तावकरणत्वादेवात्र वृत्तिकारणचिन्तायां न वक्तव्यं प्रयोजनमिति शेषः । नन्वयोगप्रयोजनयोः प्रतिपादकत्वरूपवृत्तावकारणत्वेन वृत्तिकारणचिन्तायामवक्तव्यत्वात् सम्बन्धसादृश्ययोरेवोपादानं युक्तमिति वक्तुं प्रवृत्ते तत्र वाक्ये अयोगस्येव प्रयोजनस्यापि वक्तव्यत्वात् तदनुक्तिरयुक्तेत्यतः अयोगपदेनैवोपलक्षणया प्रयोजनोक्तेः न दोष इत्याह **अत्रेति** । तर्हि स्वायत्तन्यायविरोध इत्यतः प्रयोजनाभावे तथा अत्र प्रयोजनसद्भावान्न विरोध इत्याह **अयोग इति** । **न स्वशब्देनेति** । अयोगशब्देनायोगस्येव प्रयोजनशब्देन प्रयोजनस्यानिर्देश इत्यर्थः । **निर्दलत्वान्मुख्यायोग इति** । निर्दलत्वादित्यत्र पूर्वायोगे परग्रह इत्यस्येति शेषः । ततश्च पूर्वायोगे परग्रह इत्यस्य निर्दलत्वात् पूर्वायोगे परग्रह इत्यनयोर्निमित्तनैमित्तिकभावस्य स्फुटमप्रतीयमानत्वादिति यावत् । मुख्यायोगे अमुख्यग्रह इत्यस्य सदलत्वान्निमित्तनैमित्तिकभावस्य स्फुटं प्रतीयमानत्वात् मुख्यायोगेऽमुख्यग्रह इत्येव वाच्यम् । सत्यप्येवं यत्पूर्वायोगे परग्रह इत्येवं वचनं तल्लक्षितलक्षणानुगमार्थमित्यर्थः । **अत एवेति** । लक्षितलक्षणाया मुख्यासम्भवमात्रेण अनाश्रयणादेवेत्यर्थः । मुख्यार्थबाध इति विशिष्योक्त्या लक्षितार्थबाधस्य व्यावर्तितत्वात् मुख्यार्थसम्भवमात्रस्य च लक्षितलक्षणायामुक्तरीत्या अभावेन मुख्यार्थबाध इत्ययुक्तमित्यर्थः ।

**वा०र०—** प्राक् लक्षणाशब्देन प्रतिपादनानुकूलशक्यसम्बन्धाख्यव्यापारस्यैव व्याख्याततया अत्र वृत्तिशब्देन तद्ग्रहणतेत्याह **अत्रेति** । अनुपपत्त्यादेस्तद्धेतुत्वेति तद्धेतुत्वनिरासपूर्वकं सम्बन्धस्यैव हेतुताया यत्स्थापनं





तस्यानौचित्येत्यर्थः । **सम्बन्ध इति** । शक्यसम्बन्ध इत्यर्थः । लक्षणाहेतूक्तिस्थलीयतर्कताण्डवानुसारेणाह **उपलक्षणमेतदिति** । उक्तस्थलीयतर्कताण्डवमनुसृत्याह **शब्दस्याचेतनत्वेनेति** । प्रयोजनाभावे तथेत्यत्र तथेत्यस्य स्वायत्तन्यायविरोध इत्यर्थः । निर्दलत्वादित्यत्र पूर्वयोगे परग्रह इत्यस्येति शेषपूरणेन विशिष्ट-तद्वाक्यार्थानुसारेण मुख्यायोग इत्यत्रापि वक्तव्यत्वे हेतुमध्याहृत्य व्याचष्टे **सदलत्वान्निमित्तेति** । मुख्यार्था-सम्भवस्य लक्षितलक्षणायामपि सत्त्वात् कुतो युक्तत्वं इत्यतः सावधारणतया व्याचष्टे **असम्भवमात्रेणेति** । मात्रपदार्थलाभे निमित्ताभावात् कथमेतदित्यतस्तल्लाभप्रदर्शनपूर्वकं लक्षितलक्षणायां तदसम्भवं चोपपादयति **मुख्यार्थबाध इतीति** । **उक्तरीत्येति** । न हि तत्राभिधेयसम्बन्धिनिवृत्तिरित्यादिनोक्तरीत्येत्यर्थः ।

**स०व्र०— अमुख्यवृत्तेः** इत्यत्र वृत्तिशब्देन प्रतिपादकत्वं ग्राह्यम् । **प्रयोगेति** । अमुख्यवृत्ति-साध्यप्रयोगोत्तरकालीनानुपपत्तिदर्शनस्य अमुख्यवृत्तिकारणत्वासम्भवादित्यर्थः । **अत एवेति** । लक्षितलक्षणाया मुख्यासम्भवमात्रेणानाश्रयणादेवेत्यर्थः । मुख्यार्थबाध इति विशेषोक्त्या लक्षितार्थासम्भवस्य व्यावर्तितत्वात् मुख्यार्थासम्भवमात्रस्य च लक्षितलक्षणायामभावेन मुख्यार्थबाध इत्ययुक्तमिति भावः ।

**विठ्ठल०—** मुख्यार्थानुपपत्तेः कुतो न कारणत्वमिति चेद्यदि कारणं तर्हि अमुख्यवृत्तियुक्तशब्द-प्रयोगस्य मुख्यार्थानुपपत्तिज्ञानपूर्वकत्वं स्यान्न चैतत्सम्भवति तत्कुत इत्यत आह **प्रयोगोत्तरेति** । तर्हि मुख्यार्थानुपपत्तेः सर्वथा वैयर्थ्यमिति पृच्छति **किंत्विति** । तदुत्तरतया मूलवाक्यं योजयति **मुख्यार्थानुप-पत्तीति** । कुत एवमित्यतस्तावत् किंशब्देन तीराद्यर्थबोधने अपेक्ष्यते । अथ प्रयोक्तेति विकल्पं मनसि निधाय क्रमेण निराह **अत एव हीति** । प्रतिपत्त्रैव मुख्यार्थग्रहणायापेक्षत इत्येतद्व्यनक्ति **शब्दो हीति** । अनुसन्धीयते प्रयोजनमिति शेषः । **अत इति** । अमुख्यवृत्त्युपेतशब्दप्रयोगार्थमेव अनुसन्धीयमानत्वादित्यर्थः । अत्र वृत्ति-कारणचिन्तायां लक्षितलक्षणादीत्यादिपदेन मुख्यासम्भवे अमुख्योऽर्थः स्वीकार्यः । तदसम्भवे गौण्यर्थ इति सन्न्यायरत्नावल्युक्तगौण्याः लक्षणायाः परतो विद्यमानत्वे न गौणीग्रहणम् । लक्षितलक्षणं न मुख्यासम्भवमात्रेण आश्रीयते किं तु लक्षितस्यापीत्यत्र हिशब्देन प्रसिद्धिरेव साधकत्वेनोक्ता ।

**चषकः— प्रयोगेतरेति** । अमुख्यवृत्तिमत्पदोच्चारणोत्तरकालीनानुपपत्तिप्रतिसन्धानस्य तादृशवृत्ति-हेतुत्वासम्भवादित्यर्थः । **अत एव** तादृशप्रतिसन्धानापेक्षया पूर्वभावित्वादेव ।

**॥ इति उत्तरपक्षः ॥**

**॥ इति सादृश्यसम्बन्धयोरतिरिक्तानां गौणीलक्षणावृत्तिहेतुत्वाभावः ॥**

* * *





**॥ अथ गौणी-लक्षणा-इत्यमुख्यवृत्त्योर्निरूपणे मुख्यामुख्यवृत्त्योरपि तारतम्यम् ॥**

**३४ सु०— किञ्च यथा मुख्यवृत्तिष्वपि स्वीकारे तारतम्यमस्ति तथाऽमुख्यवृत्तिष्वपि। कुत इति चेत्, अर्थप्रतीतिसन्निकर्षविप्रकर्षाभ्यामिति ब्रूमः ।**

**परि०**— एवं मुख्यार्थसम्भवे अमुख्यग्रह एव इत्येकमर्थं मूलस्योक्त्वा परममुख्यासम्भवे मुख्यार्थः स्वीकार्यः । तदसम्भवे गौणार्थः । तदसम्भवे लाक्षणिकग्रह इति सन्न्यायरत्नावल्युक्त्यनुरोधेन लक्षणादितो गौण्याः ज्यायस्त्वोक्तिपरतयापि मूलं योजयति **किञ्च यथेति** । मुख्यवृत्तावानन्दमयनयान्तोक्तदिशा परममुख्यमुख्यवृत्त्योर्यथा तारतम्यम्, यथा च योगरूढिरूढिवृत्त्योस्तारतम्यम् यथा रूढियोगयोस्तारतम्यम् तथा गौणवृत्तिलक्षणावृत्त्योर्गौण्यामपि रूढारूढयोर्लक्षणायामपि रूढारूढयोस्तारतम्यमित्यर्थः । **अर्थप्रतीतिसन्निकर्षविप्रकर्षाभ्यामिति** । परममुख्यमुख्यवृत्त्योरस्सन्निकर्षविप्रकर्षावानन्दमयनयान्ते व्यक्तौ । योगरूढ्यादिवृत्तित्रयस्य सन्निकर्षादिकं तु योगरूढ्यादिमुख्यवृत्तित्रयबलाबलनिर्णयवादे तर्कताण्डवे विशदम् । रूढारूढमुख्यवृत्त्योर्र्थप्रतीतिसन्निकर्षविप्रकर्षौ सर्वजनप्रसिद्धौ । गौणलक्षणावृत्त्योस्तु पृथगुपदेशादित्यधिकरणे । 'अतो भेदवदेवैताः श्रुतयः प्रवदन्ति हि । पौराणानि च वाक्यानि सादृश्याभेदसंश्रयादि'त्येतद्व्याख्यानसुधायाम् 'अद्वैतवादिभिः खलु तत्त्वंपदयोर्विरुद्धस्वार्थैकदेशत्यागेन एकदेशलक्षणया सामानाधिकरण्यमात्रं मुख्यमङ्गीकृतमि'त्यादिना किञ्चिद्विशदीक्रियते । स्पष्टीकृतं चैतत् तर्कताण्डवे गौण्यां सादृश्यस्यान्तर्गणिकभेदे सत्यपि सादृश्यरूपेणानुगते तात्पर्यमित्येकार्थपटादिशब्दादिवत् तात्पर्यविषये द्राग्धीः । लक्षणायां तु क्वचित्सम्बन्धे तात्पर्यम् । क्वचित्तद्द्वारा पूतत्वे क्वचिच्छीतलत्वादाविति वैरूप्यान्नानार्थादिशब्दादिव विलम्बेन तद्धीरिति लक्षणा जघन्येत्यादिना ग्रन्थेन लक्षणातो गौण्याः प्राबल्यनिर्णयवादे ।

**यादु०**— 'न हि लक्षितलक्षणा मुख्यार्थासम्भवमात्रेण आश्रीयते किन्तु लक्षितस्यापी'त्यत्र हिशब्देन प्रसिद्धिरेव साधकत्वेनोक्ता । अपरं च तत्र साधकमाह **किञ्चेति** । तथा चामुख्यवृत्तिस्वीकारतारतम्यान्यथाऽनुपपत्तिरेवोक्तार्थसाधिकेति भावः।

**आनन्दः**— ननु लक्षितलक्षणा न स्वीकर्तव्या प्रयोजनाभावात् । स्वीकारे वा मुख्यार्थासम्भवादेव तदाश्रयणमस्तु किं लक्षणस्यापि तदाश्रयेण । तथा च किं तत्सङ्गहार्थं पूर्वायोग इति निर्दलवचनेनेत्यतो यथायोगस्वीकारे एकस्य शब्दस्य कस्मिंश्चिदर्थे रूढिः कस्मिंश्चिदर्थे योगोऽस्ति तत्र किं योगिकोऽर्थः स्वीकर्तव्यः उत 'रूढः'





इति विचारे रूढस्य शीघ्रोपस्थितिकत्वात् योगस्य विलम्बोपस्थितिकत्वात् । रूढ एवार्थः । स्वीकर्तव्यो न विलम्बोपस्थितिक इति विवेको हि सति संयोगस्वीकारे युज्यते । ननु तदस्वीकारो तद्वल्लक्षितलक्षणास्वीकारे हि सति एकस्य पदस्य एकत्रास्ति लक्षणा अस्ति च अर्थान्तरे लक्षितलक्षणा तत्र किं लाक्षणिको वार्थः । स्वीकर्तव्यो लक्षितृलक्षिणि को वेति संशये लक्षितलक्षणापेक्षाया लाक्षणिकस्यार्थस्य शीघ्रोपस्थितिकत्वाल्लक्षितलाक्षणिकस्य विलम्बोपस्थितिकत्वाल्लाक्षणिक एवार्थो ग्राह्यो न तु लक्षितलाक्षणिक इति हि तारतम्यविवेकस्यास्वीकारे सति स्यान्न तु तदस्वीकार इति तत्सङ्ग्रहार्थं पूर्वयोग इति वक्तव्यमेवेत्याह **किञ्चेति** । सादृश्यसम्बन्धयोरर्थयोः सादृश्यं पूर्वं सेत्स्यतीति सादृश्ययोगे सदृशो गौः गङ्गासम्बन्धि गङ्गा इत्यर्थद्वये वाच्ये तद्धि तं सम्पाद्य तस्य च लुपि सति अभिधावृत्त्यैव वाहीकतीरादिरूपार्थप्रतीतिव्यवहारादिकं सर्वं सेत्स्यतीत्यर्थः ।

**श्रीनिधि०**— लक्षितलक्षणापि लक्षणैवास्तु किमिति लक्षणाप्रभेदत्वमङ्गीक्रियत इत्यत आह **किञ्चेति** । एवं च तारतम्योपेतत्वाल्पक्षणैव किन्तु तत्प्रभेद इति भावः ।

**शे०वा०**— मूले वृत्तितारतम्यानुक्तिप्रयुक्तन्यूनतामाशङ्क्य तत्तारतम्यपरतयैतद्वाक्यव्याख्यानरूपसन्न्यायरत्नावल्यनुरोधेनैतदेव वाक्यं हेतुकथनपूर्वकं तारतम्यपरतयाऽपि व्याचष्टे **किञ्चेति** । यद्यपि परममुख्यासम्भवे मुख्यार्थः स्वीकार्यः, तदसम्भवे गौणार्थस्तदसम्भवे लाक्षणिक इति मुख्यामुख्यवृत्तिमात्रसाधारण्येन तत्तारतम्यकथनपरसन्न्यायरत्नावल्यनुरोधेन मुख्यामुख्यसाधारण्येन तत्तारतम्यपरतयैतद्ग्रन्थव्याख्यानस्य कर्तव्यत्वेन यथा मुख्यवृत्तिषु स्वीकारे तारतम्यमस्ति तथाऽमुख्यवृत्तिष्वपीति मुख्यवृत्तिदृष्टान्तेन अमुख्यवृत्तितारतम्यप्रतिपादनपरतया एतद्ग्रन्थव्याख्यानमिह टीकायामयुक्तमिवाभाति । तथाप्यमुख्यवृत्तिनिरूपणप्रस्तावे तत्तारतम्यनिरूपणस्यैव श्लिष्टत्वेन मुख्यवृत्तितारतम्यपरतया व्याख्यानस्याश्लिष्टत्वात् । तत्सूचनस्य च मुख्यवृत्तिदृष्टान्तेनामुख्यवृत्तौ तारतम्योक्त्यापि सम्भवात् 'यथातथा' अध्याहारेण सन्न्यायरत्नावल्या अप्युक्तार्थपरत्वेन तदविरोधसम्भवात् । अमुख्यवृत्तितारतम्यमात्रपरत्वेन एतद्ग्रन्थव्याख्यानमिह टीकायां कृतम् । न चैवं 'विष्णावन्यत्र मुख्यता । उपलक्षणा च गौणी च तिस्रः शब्दस्य वृत्तयः' इति वृत्त्युद्देशपरपूर्वग्रन्थानुसारेण गौणीतो लक्षणायाः पूर्वत्वेन तदसम्भव एव गौण्या आश्रयणीयत्वापत्त्या गौणीतो लक्षणा जघन्येति सिद्धान्तभङ्गः स्यादिति वाच्यम् । पूर्वायोग इति वाक्योक्तपूर्वत्वस्य 'प्रयोगयुक्तसादृश्यं सम्बन्धो वाप्यमुख्यतः' इत्यव्यवहितलक्षणोक्त्यभिप्रायकत्वेन व्यवहितोद्देशाभिप्रायकत्वाभावेन तदप्रसङ्गात् । अत एवोत्तरत्रानुव्याख्याने 'मुख्यमात्रतया रूढं सर्वमभ्युपगम्यते । सर्वेषामपि शब्दानां गौणाद्यं तदयोगतः' इति लाक्षणिकापेक्षया गौणस्य प्राथम्योक्तिः न्यायविवरणेऽपि रूढोपचारो रूढलक्षणा उपचारो लक्षणेति गौण्याः प्राथम्योक्तिः सङ्गच्छते ।

ततश्चायं ग्रन्थार्थः । यथा पूर्वस्याः परममुख्यताया असम्भव एव परस्या मुख्यताया ग्रहः न तु तत्सम्भवेऽपि । मुख्यतायामपि पूर्वस्या रूढेरसम्भव एव परस्य योगस्य ग्रहः, न तु तत्सम्भवेऽपीति मुख्यवृत्तिषु





स्वीकारे तारतम्यमस्तीति, तथा पूर्वस्य योगस्यासम्भव एव परस्यामुख्यपरिग्रहः । अमुख्यतायामपि पूर्वस्या निरूढगौण्या अयोग एव परस्या अनिरूढगौण्या ग्रहः तथा पूर्वस्या गौण्या असम्भव एव परस्या लक्षणाया ग्रहः । लक्षणायामपि पूर्वस्या रूढलक्षणाया असम्भव एव परस्या अरूढलक्षणाया ग्रहः अरूढलक्षणायामपि पूर्वस्या अन्तरङ्गलक्षणाया असम्भव एव परस्या बहिरङ्गलक्षणाया ग्रहः । बहिरङ्गलक्षणायामपि पूर्वस्या लक्षणाया अयोग एव परस्या लक्षितलक्षणाया ग्रह इत्यमुख्यवृत्तिष्वपि स्वीकारे तारतम्यमस्तीति । 'योगस्याप्ययोगश्चेत् परस्या अमुख्यवृत्तेर्लक्षणाया ग्रहः' इति तर्कताण्डवे तु लक्षणापदस्य गौणीपरत्वादविरोधः । अत एवानुपदमेव तत्र लक्षणाया गौणीतो जघन्यत्वसमर्थनमिति ध्येयम् ।

**वा०र०**— तर्हि मुख्यवृत्तितारतम्यासिद्धिप्रसङ्ग इत्यतस्तस्य सूचनयाप्युपपत्तेः । सूचनस्य च मुख्यवृत्तिदृष्टान्तेनामुख्यवृत्तितारतम्योक्तिमात्रेण सम्भवान्नानुपपत्तिरित्याह **तत्सूचनस्येति** । मुख्यवृत्तितारतम्य-सूचनस्य चेत्यर्थः । रूढ्यादिवृत्तित्रयस्य बलाबलनिर्णयस्थले लक्षणातो गौण्याः प्राबल्यनिर्णयस्थले च तर्कताण्डवोक्तप्रकारेण वृत्तितारतम्यप्रकारं सङ्गृह्याह **ततश्चेति** । अमुख्यत्वाविशेषेऽपि गौणलक्षणावृत्त्योः प्राभाकरमते गौण्या इत्यादि जन्माधिकरणीयचन्द्रिकानुसारेणात्राधिकमप्याह **पूर्वस्या अन्तरङ्गलक्षणाया इत्यादिना** । प्रोद्गातृणामित्यत्रान्तरङ्गप्रस्तोत्रादिचतुष्टयलक्षणाया इत्यर्थः । **बहिरङ्गेति** । षोडशर्त्विकलक्षणात इत्यर्थः । मुख्यार्थानुपपत्तिप्रतिसन्धानाभावतत्सद्भावाभ्यां लक्षणालक्षितलक्षणयोरपि तारतम्यसिद्धिरित्याशयेनाह **बहिरङ्गलक्षणायामपीति** । **तर्कताण्डवे त्विति** । रूढ्यादिवृत्तित्रयस्य बलाबलनिर्णय इति शेषः । **समर्थनमिति** । अमुख्यवृत्तौ गौणीतो लक्षणा जघन्येत्यादिनोत्तरवादीयप्रथमवाक्ये प्रतिज्ञानपूर्वकं तद्वादे तत्समर्थनमित्यर्थः । अपत्याद्यर्थचतुष्टयेणादेरसम्भवादाह **शैषिकमिति** । **वार्तिक इति** । लुप् चेति सूत्रीयेति शेषः । मल्लिकायाः पुष्पं मल्लिकेत्याद्युदाहरणं फलार्थे न लुतेनेति हरीतक्यादिभ्यश्चेति सूत्रेण हरीतकी इत्येवमादिशब्देभ्यः फले प्रत्ययस्य लुप् भवतीत्यर्थकेणेति शेषः । **नियमनमिति** । परार्थशक्तिप्रतिबन्ध इत्यर्थः । नियन्त्रणं परार्थशक्तिप्रतिबन्ध इति सारबोधिन्यामुक्तेः ।

**स०व्र०**— लक्षितलक्षणा न मुख्यार्थासम्भवमात्रेण आश्रीयते किन्तु लक्षितस्यापीत्यत्र हिशब्देन प्रसिद्धिरेव साधकत्वेनोक्ता परं चात्र साधकमाह **किञ्चेति** । योगापेक्षया रूढिः शीघ्रोपस्थापिकेत्येवंरूपं तारतम्यं यथेत्यर्थः । **तथाऽमुख्यवृत्तिष्वपीति** । तथा च लक्षितलक्षणा लक्षणावन्न शीघ्रोपस्थितिहेतुः किन्तु विप्रकर्षेण अत एतदन्यथानुपपत्त्या न सा मुख्यार्थासम्भवमात्रेण आश्रयणीयेति अर्थापत्तिरेवात्र साधकतयोक्तेति भावः ।

**विट्ठल०**— अपरं चात्र साधकमाह **किञ्चेति** । योगापेक्षया रूढिः शीघ्रोपस्थापकेत्येवंरूपतारतम्य-मित्यर्थः । **यथा अमुख्यवृत्तिष्वपीति** । लक्षितलक्षणापेक्षया लक्षणायाः शीघ्रोपस्थापकत्वेन तदपेक्षया सा

प्रबलेति तारतम्यमस्तीत्यर्थः। तथा च लक्षितलक्षणा न शीघ्रोपस्थितिहेतुः किन्तु विप्रकर्षेणैवातो न मुख्यार्थासम्भवमात्रेण लक्षणाश्रयणीयेति भावः।

**॥ इति गौणी-लक्षणा-इत्यमुख्यवृत्त्योर्निरूपणे मुख्यामुख्यवृत्त्योरपि तारतम्यम् ॥**

* * *

**॥ तत्र अन्यथानुपपत्त्या अमुख्यवृत्तिसमाश्रयणावश्यकता ॥**

**३५ सु०— ननु च सादृश्यसम्बन्धयोस्तद्धितमुत्पाद्य तस्यापि लुपि कृते सर्वं सेत्स्यति, किममुख्यवृत्तिस्वीकारेणेत्यतो वेदमुदितम्। यदि गोशब्दस्य गवि वाहीके च गङ्गाशब्दस्य गङ्गायां तीरे चोक्तविधयाऽभिधैव स्यात् तदा गोगङ्गाशब्दोच्चारणे गोगङ्ग्योः पूर्वं प्रतीतिः तदयोगे च अनुसंहितेऽर्थान्तरे प्रतीतिरिति न स्यात्। न हि हरीतक्यादिशब्दोच्चारणे सत्ययं प्रतीतिक्रमोऽस्ति, किन्तु वृक्षे फले च स्वातन्त्र्येण प्रतीते प्रकरणादिवशेन अन्य(त्र)तरनियन्त्रणं क्रियते। अस्ति चायं पूर्वायोगे परग्रहः, तेन जानीमो नोभयत्रोक्तविधयाभिधेति।**

**परि०— सादृश्यसम्बन्धयोरिति**। गङ्गासम्बन्धीत्यर्थे सदृश इत्यर्थे च गङ्गादिशब्दात् 'तस्येदमि'ति सूत्रेण वा 'तद्धिता' इति सूत्रेण वा अण्प्रत्यये बहुलग्रहणात् तस्य लुपि कृते 'लुपि युक्तवद्व्यक्तिवचने' इति सूत्रेण पूर्ववल्लिङ्गवचनयोः प्राप्तत्वेन गङ्गासम्बन्धिनीत्यर्थे गङ्गायामितिशब्देन लक्षणां विनैव गङ्गासम्बन्धितीरप्रतीतेर्गोसदृशवाहीकप्रतीतेश्च सम्भवात्। यथा हरीतक्यादिशब्दात् फलार्थेऽण्प्रत्यये लुप्चेति सूत्रेण तस्य लुपि सति 'लुपियुक्तवद्व्यक्तिवचन'भावेन हरीतकीति रूपं तथेति भावः। हरीतक्यादावेवं प्रत्ययस्य सत्त्वाल्लुबाद्युक्तिः न स्यादित्यतो वैषम्यमाह **न हीति**। **नियन्त्रणं** नियमनम्। न स्यादिति शेषोक्त्या आपादनरूपत्वेन योजितमपि विपर्यये पर्यवसानरूपेणापि मूलं योजयति **अस्ति चेति**। **नोभयत्रोक्तविधयाभिधेति**। एतदपि सम्यग्व्युत्पादितं लक्षणादेभिरधातो भेदसमर्थनवादे तर्कताण्डवे।

**यादु०— तद्धितमुत्पाद्येति**। शैषिकमणादिकमुत्पाद्येत्यर्थः। **तस्यापि लुपीति**। पुष्यमूलेषु बहुलमिति वार्तिके बहुलग्रहणेन लुपि कृत इत्यर्थः। अत्र लुपीत्युक्त्या लुबर्थे प्रकृतिलिङ्गवचने भवत इति सूचयति। 'लुपि युक्तवद्व्यक्तिवचने' इति वचनादिति ज्ञातव्यम्। **सर्वं सेत्स्यतीति**। गङ्गाशब्दात् प्रवाहतीरयोरुपस्थितिः। गोशब्दात् गोवाहीकयोरुपस्थितिः इत्यादिकं सर्वं सिद्ध्यतीति भावः। **नियन्त्रणं** नियमनम्।





**वं०प०— तद्धितमिति** । ननु गौर्वाहीक इति प्रयोगे गौरित्यत्र सादृश्ये विवक्षिते सति यदि तद्धितो वत्प्रत्ययः तर्हि गोवद्वाहीक इति प्रत्ययो दृश्येत इति चेत् । तस्य लोपकरणात् । तथा च गोशब्दात् प्रसिद्धगोरूपस्थितिवत् गोवद्विद्यमानो गौरिति वाहीकोपस्थितिरपि मुख्यवृत्त्यैव भविष्यति । तथा गङ्गाशब्दात् तत्सम्बन्धीत्यर्थे तस्येदमिति यदि तद्धितोऽण्प्रत्ययः तर्हि णित्वादादिवृद्धौ गाङ्गेति स्यादिति न वाच्यम् । अण्प्रत्ययस्य लोपकरणात् । तथा च गङ्गाशब्दात् प्रवाह इव तीरोपस्थितिरपि मुख्यवृत्त्यैव भविष्यतीत्यर्थः । यथा हरीतकीशब्दो वृक्षवाची तथा हरीतक्या इदं फलमिति सम्बन्धार्थे अण्प्रत्यये जाते हारीतकीति भाव्ये प्रत्ययस्य हरीतक्याः फलं हरीतकीति भवति । तद्वत् गौरिव विद्यमानो गौः गङ्गायाः सम्बन्धि गङ्गेत्यर्थोपपत्तेः न अमुख्यवृत्तिः लक्षणा गौणी चाश्रयणीयेति भावः । **अनुसंहिते** विवक्षिते ।

**आनन्दः— इदमिति** । पूर्वायोगे परग्रह इतीदमित्यर्थः ।

**श्रीनिधि०— तद्धितमुत्पाद्येति** । तस्येदमित्यनेन सादृश्यस्यापि सम्बन्धत्वादिति भावः । **लुपीति** । फले लुपीत्यत्र योगविभागाद्याश्रयणेनेति भावः ।

**शे०वा०— तद्धितमिति** । शैषिकमणादिकमित्यर्थः । **तस्यापि लुपीति** । पुष्पमूलेषु बहुलमिति वार्तिके बहुलग्रहणेन लुपि कृत इत्यर्थः । **सर्वं सेत्स्यतीति** । अभिधयैवेति शेषः । अयमर्थः । यथा हि हरीतक्यादिशब्दे पदार्थेन लुप्तेन स्मृतेन प्रत्ययेनाभिधयैव फलबोधनान्न हरीतकीशब्दस्य वृक्षमात्रवाचकत्वमङ्गीकृत्य फले लक्षणाऽभ्युपगम्यते अन्यथा फले तद्धितलुगुक्त्ययोगात् किन्तूक्तरीत्या उभयत्राप्यभिधैव । एवं सम्बन्ध्यादौ तद्धितमुत्पाद्य तस्यापि लुपि सति लुप्तेन स्मृतेन तद्धितेन गङ्गादिसम्बन्ध्यादितीरादिबोधस्याप्यभिधयैव सम्भवान्न गङ्गादिशब्दस्य सम्बन्धितीरादौ लक्षणाऽभ्युपगमो युक्तः । किं नामोभयत्राभिधैवोक्तरीत्या अङ्गीकार्या । अन्यथा हरीतक्यादिशब्दस्यापि फलादौ लक्षणैव स्यादिति । **इदमुदितमिति** । पूर्वयोगे परग्रह इत्युदितमित्यर्थः । अनेन पूर्वस्य प्रथमप्रतीतस्य पूरस्यायोगे परस्य चरमप्रतीतस्य तीरस्य ग्रहः प्रत्ययो दृश्यते स न स्यादिति योजना सूचिता भवति । **उक्तविधयेति** । गोगङ्गाशब्दयोः गवि गङ्गायामभिधा । लुप्तस्य तद्धितस्य सम्बन्धितीरादावभिधेत्युक्तविधयेत्यर्थः । **न हि हरीतक्यादिशब्दोच्चारणे सतीति** । ततश्च गङ्गादिशब्दे पूराद्यनुपपत्तिपुरःसरं तीरादिप्रतीतिवत् हरीतक्यादिशब्दे वृक्षाद्यनुपपत्तिपुरःसरं फलप्रतीत्यभावेन वैषम्यान्न दृष्टान्तदार्ष्टान्तिकभाव इति भावः । **प्रकरणादिवशेनेति** । सैन्धवादिशब्देष्विवेति शेषः । **नियन्त्रणं** नियमनम् ।

**स०व्र०— तस्यापि लुपि कृत इति** । हरीतक्यादेराकृतिगणत्वसम्भवेन हरीतक्या इत्यनेन वा फलमूलेषु बहुलमिति बहुलग्रहणेन वा लुपि कृत इत्यर्थः । **सर्वं सेत्स्यतीति** । गङ्गाशब्दात् प्रवाहतीरयोरुपस्थितिः गोशब्दात् गोवाहिकयोरुपस्थितिः इत्यादिकं सर्वं सिद्ध्यतीति भावः । **नियन्त्रणं** नियमनम् ।

**विट्ठल०— सादृश्यसम्बन्धयोरिति** । गोसदृश इत्यर्थे गङ्गासम्बन्धीत्यर्थे च गवादिशब्दात् तस्येद-मित्यण्प्रत्यये बहुलग्रहणात् तस्य लुपि कृतेऽपि युक्तवद्व्यक्तिवचन इति सूत्रेण पूर्ववल्लिङ्गवचनयोः प्राप्तत्वेन गौण्यादिकं विनैव वाहिकादिप्रतीतिसम्भवात् । यथा हरीतक्यादिशब्दात् फलेत्यर्थेऽण्प्रत्यये कृते लुपि च, 'लुपि युक्तवद्व्यक्तिवचन'भावे वृक्ष इव फलेऽपि हरीतकीति रूपं तथेति भावः । **सर्वं सेत्स्यतीति** । गङ्गा-शब्दाद्गङ्गातीरयोरुपस्थितिः गोशब्दाद्गोवाहीकयोरुपस्थितिरित्यादिकं सर्वं सेत्स्यतीत्यर्थः ।

**चषकः— तद्धितं** शैषिकमणादिकम् । **तस्यापि लुपीति** । पुष्पमूलेषु बहुलमिति वार्तिके बहुल-ग्रहणादिति भावः । **सर्वं सेत्स्यतीति** । गङ्गापदतीरप्रवाहयोरुपस्थितिगोपदाद् गोवाहीकयोरुपस्थितिरित्यादिकं निखिलं सिद्ध्यतीत्यर्थः । अत्र लुपीति वचनेन पञ्चालानां निवासो जनपदः पञ्चालाः, कुरव, इत्यादौ 'जनपदे लुप्', 'वरणादिभ्यश्च', 'पुष्पमूलेषु बहुलं', 'हरीतक्यादिभ्यश्च' इति लुब्विधानात् 'लुपि युक्तवद्व्यक्तिवचने' इति यथा वरणानामदूरभवं नगरं वरणाः, मल्लिका, जाती, विदारी, हरीतकीति प्रकृतिवल्लिङ्गवचने स्तः, तद्वत्प्रकृतेऽपि ते भवत इति ध्वन्यते । **नियन्त्रणं** नियमनम् ।

**॥ इति अन्यथानुपपत्त्या अमुख्यवृत्तिसमाश्रयणावश्यकता ॥**

* * *

**॥ तत्र 'अनुपपत्तेरर्थप्रतीतिहेतुत्वे शब्दशक्तेर्गतार्थता' शङ्का तन्निरासश्च ॥**

**३६ सु०— नन्वत्र अनुपपत्तेरर्थप्रतीतिहेतुत्वेऽर्थापत्तिरेवास्तु, किं शब्दशक्तिसमा-श्रयणेन । तथा हि । किमाप्तप्रणीताच्छब्दादसावर्थः प्रतीयते, अन्यथा वा । नान्यथा, उन्मत्तवाक्यादौ तदभावात् । आद्ये त्वर्थापत्तिरेव, वक्तुराप्तेः प्रतीतार्थानुपपत्तेश्च विरोधेन अर्थान्तरस्य कल्प्यमानत्वात् । स्यादेवं यदि वक्तुराप्तत्वं निश्चीयेत, तस्य पदस्य तत्र शक्त्यभावेऽसम्बद्धभाषिणि तस्मिन्नाप्तत्वमेव कथं निश्चीयेतेति । तदर्थमवश्यं (शब्द)-शक्तिराश्रयणीयेति सर्वमवदातम् ॥**

**परि०—** नन्वत्रेत्यादिना कृतचोद्यं निराह **स्यादेवं यदीति** । शक्तिपदेनात्र वृत्तिर्ग्राह्या । **सर्वमिति** । परैरुक्तं सर्वमवदातं शोधितमित्यर्थः ।

**यादु०—** परिहरति **स्यादेवमिति** । **शक्त्यभाव इति** । वृत्त्यभाव इत्यर्थः । एवमग्रेऽपि । **शक्तिः** वृत्तिः । अनेन पूर्वस्य प्रथमं निश्चये वक्तुराप्तत्वायोगे वृत्त्यभावेनानुपपत्तौ प्राप्तायां परस्याः तन्निर्वाहिकाया लक्षणाया ग्रहः स्वीकार इति मूलयोजनोक्ता भवतीति ज्ञातव्यम् ।





**वं०प०**— **शब्दशक्तिः** शब्दवृत्तिः । **विरोधेन** परस्परमिति शेषः ।

**आनन्दः**— **शब्दशक्तिसमाश्रयणेनेति** । शब्दवृत्तिसमाश्रयणेनेत्यर्थः । एवमुत्तरत्रापि द्रष्टव्यम् ।

**श्रीनिधि०**— **शक्त्यभावे** सम्बन्धाभावे ।

**शे०वा०**— **शब्दशक्तिसमाश्रयणेनेति** । शब्दवृत्तिसमाश्रयणेनेत्यर्थः । परिहरति **स्यादेवमिति** । अनेन पूर्वस्य प्रथमप्रतीतस्य वक्तुराप्तत्वस्यायोगे वृत्त्यभावेनानुपपत्तौ प्राप्तायां परस्याः तन्निर्वाहिकाया लक्षणाया ग्रहः स्वीकारः इति मूलयोजना सूचिता भवति । **शक्त्यभावे** वृत्त्यभावे । **शक्तिः** वृत्तिः ।

**स०व्र०**— परिहरति **स्यादेवं यदीति** । **शक्त्यभाव इति** । वृत्त्यभाव इत्यर्थः । एवमग्रेऽपि **शक्तिः** वृत्तिः ।

**स०ना०**— 'पूर्वायोगे परग्रह' मूलसुधायां **वक्तुराप्तेः प्रतीतार्थानुपपत्तेश्चेति** । अस्मिन्मते विवक्षितार्थ-तत्त्वज्ञानवत्वे सति यथार्थचिख्यापयिषा आप्तिः तद्वानाप्तः । न तु करणपाटवमप्यस्यान्तर्गतं एवं च तीरे घोष इति वक्तव्ये करणापाटवात् गङ्गायां घोष इत्याह । भवत्यसावाप्तः प्रतीतार्थश्चानुपपन्न इति आप्तत्वोपपादनाय तीरस्येव घोषाधिकरणत्वं अनेन अभिप्रेयत इति कल्प्यते । ततश्चाप्तत्वमुपपन्नं भवत्येवासावर्थापत्तिः । एतेन कल्पितार्थस्य । असम्बद्धभाषिणि आप्तत्वानुपपादकत्वात् अर्थापत्त्याभासोऽयमिति परास्तम् ।

**विठ्ठल०**— नियन्तृणं नियमनं परिहरति **स्यादेवमिति** । **शक्त्यभाव इति** । वृत्त्यभाव इत्यर्थः ।

**चषकः**— **शब्दशक्तिसमाश्रयणेन** शब्दसामर्थ्याश्रयणेन । **तत्र शक्त्यभावे** तन्निरूपितवृत्त्यभावे ।

**॥ इति 'अनुपपत्तेरर्थप्रतीतिहेतुत्वे शब्दशक्तेर्गतार्थता' शङ्का तन्निरासश्च ॥**
**॥ इति गौणी-लक्षणा-इत्यमुख्यवृत्त्योर्निरूपणम् ॥**

* * *

**॥ तत्र परममुख्य-मुख्य-भेदनिरूपणेन**
**'योगस्य रूढितो दुर्बलत्वेन परमेश्वरस्य मुख्यार्थत्वाभाव' शङ्कानिरासः ॥**

३७ **सु०— एतेनैतदपि परिहृतम् । यदभिहितं पूर्वपक्षिणा, 'योगस्य रूढितो दुर्बलत्वेन न परमेश्वरस्य मुख्यार्थत्वमि'ति, महायोगस्य अविद्वद्रूढिमात्रात् प्राबल्योपपत्तेः, विद्वद्रूढे-रप्युक्तत्वेन तत्सहितस्य योगस्य सुतरां तदुपपत्तेरिति ।**

**परि०**— **एतेनेति** । परममुख्यायोगे मुख्यग्रह इत्यर्थ(इत्येतत्)सूचकेन पूर्वायोगे परग्रह इत्यनेनेत्यर्थः । **उक्तत्वेनेति** । उभयं दृश्यत इत्यनेनेति भावः ।

**यादु०— एतेनेति** । 'इतो हि रूढ(ढि)ताऽन्येषामि'त्यादिना महायोगमहारूढियोगयोः परममुख्यत्वोपपादनेन रूढियोगयोर्मुख्यत्वमात्रव्युत्पादनेन चेत्यर्थः । **प्राबल्योपपत्तेरिति** । परममुख्यवृत्तित्वादेवेति भावः । अत एवाग्रे सूचितमिति वक्ष्यति । **विद्वद्रूढेरप्युक्तत्वेनेति** । 'उभयं दृश्यते विष्णावि'त्यनेनेत्यर्थः ।

**आनन्दः— एतेनेति** । वक्ष्यमाणेनेत्यर्थः ।

**शे०वा०— एतेनेति** । महायोगमहारूढियोगयोः परममुख्यत्वोपपादनेन रूढियोगयोश्च मुख्यमात्रत्वोपपादनेनेत्यर्थः । **योगस्येति** । अवयवे रूढिं विना समुदाये योगासम्भवेनोपजीव्यत्वाद्रूढेः प्राबल्यं योगस्य चोपजीवकत्वात् दुर्बलत्वमित्यर्थः । अत एव रथकारादिशब्देषु सङ्करजातौ रूढ्या रथकर्तरि योगस्यापहार इति भावः । **महायोगस्येति** । महायोगस्याविद्वद्रूढितः प्राबल्यं च 'एतमेव तथा सन्तमि'त्युत्तरवाक्यव्याख्यानावसरे टीकायामुपपादितमनुसन्धेयम् । **विद्वद्रूढेरिति** । यवादिशब्दानां प्रियंग्वादिषु म्लेच्छप्रसिद्धितोऽपि दीर्घशूकेष्वार्यप्रसिद्धेरिव, रूढित्वाविशेषेऽपि बालानां चित्रलिखितसिंहे सिंहप्रसिद्धिवद् दुर्बला अतः अविद्वद्रूढितोऽसम्भाविताज्ञानमूलाया विद्वद्रूढेरेव प्राबल्यात् तत्साहित्येन योगस्य अविद्वद्रूढितः सुतरां प्राबल्यसिद्धिरिति भावः । **उक्तत्वेनेति** । उभयं दृश्यते विष्णावित्यनेनेति शेषः ।

**वा०र०— रथकारादिशब्देष्विति** । रथकारोऽग्नीनादधीतेत्यादिवाक्यगतेष्वित्यर्थः । सङ्करजातौ आनन्दमयनये व्युत्पादितमेतत् ।

**स०व्र०— एतेनेति** । इतो हि रूढ(ढि)तान्येषामित्यादिनेत्यर्थः । एतदेव विवृणोति **महायोगस्येति** । इतो हि रूढतान्येषां इत्यनेन अविद्वद्रूढिमात्रात् महायोगस्य प्राबल्यं सूचितम् । अत एवाह **उपपत्तेरिति** । तत्र यद्यपि कण्ठरवेणेन्द्रादिशब्दानां पुरन्दरादौ रूढिः परमैश्वर्यादित्येवोक्तम् । तथापि रूढार्थेन्द्रादिभ्यो यौगिकार्थस्य हरेराधिक्येऽभिहिते तद्विषयस्य विशिष्टयोगस्य लौकिकरूढितः प्राबल्यमर्थात्सिद्ध्यति । अत एवाग्रे सूचितमिति वक्ष्यतीति द्रष्टव्यम् । विद्वद्रूढेरप्युक्तत्वेनेत्युक्तम् । उभयं दृश्यते विष्णौ इत्यनेनेत्यर्थः ।

**विठ्ठल०— एतेनेति** । महायोगमहारूढियोगयोः परममुख्यत्वोपपादनेन योगरूढ्योर्मुख्यत्वोपपादनेन चेत्यर्थः । **उक्तत्वेनेति** । उभयं दृश्यते विष्णावित्यत्रेत्यर्थः ।

**॥ इति परममुख्य-मुख्य-भेदनिरूपणेन**
**'योगस्य रूढितो दुर्बलत्वेन परमेश्वरस्य मुख्यार्थत्वाभाव'शङ्कानिरासः ॥**
**॥ इति परममुख्य-मुख्य-भेदेन अर्थान्तरभेदव्यवस्था ॥**

* * *





**॥ अथ 'हरिसन्निधानादिनैव शब्दानां हर्यन्यत्र वृत्तिः' इत्यत्र उक्तार्थस्योपपादनम् ॥**

३८ **सु०—** यदुक्तम् 'उभयं दृश्यते विष्णौ' इति, यच्च सूचितं विशिष्टयोगस्य रूढितः प्राबल्यमिति तदुपपादयति **एतमेवेति** ।

**अनु०—** एतमेव तथा सन्तं शतर्चीत्यादिका श्रुतिः (नामभिः) ।
आचक्षत इति ह्यत्र सन्तमित्यवधारणात् ॥

योगस्य रूढेः प्राबल्यं विद्वद्रूढिं च तत्रगाम् ।
बहुशो दर्शयत्यञ्जस्तात्पर्यात्सनिरुक्तिकम् ॥

'तं यच्छतं वर्षाण्यभ्यार्चत्तस्माच्छतर्चिनस्तस्माच्छतर्चिन इत्याचक्षत एतमेव सन्तं स यदिदं सर्वं मध्यतो दधे यदिदं किञ्च तस्मान्मध्यमास्तस्मान्मध्यमा इत्याचक्षत एतमेव सन्तम्' **इत्यादिका श्रुतिः** । **सनिरुक्तिकं** योगवृत्तिसाहित्येन । **तत्रगां** परमेश्वर-विषयाम् । शतर्च्यादिशब्दोपलक्षितानां सर्वशब्दानां **विद्वद्रूढिं दर्शयति**, 'आचक्षत' इत्युक्त-त्वात् । यच्चात्र **बहुशः** अतिबहुवारं **दर्शयति**, तेन ज्ञायते **अञ्जः** तात्पर्यदेव न तु प्रासङ्गिक-त्वेनेति ।

किञ्चात्र 'सन्तमि'ति वचनात् 'एतमेवे'त्यवधारणाच्च लौकिकरूढितो भगव-द्विषयस्य योगस्य प्राबल्यं दर्शयति श्रुतिः, '**एतमेव** परमात्मानं शतर्च्यादिनामार्थं **सन्तम्** उक्तेन योगेन शतर्च्यादिशब्दवाच्यम् **आचक्षते** विद्वांसः, मधुच्छन्दःप्रभृतींस्तु रूढार्थानमुख्यत' इत्यस्य अर्थस्य पदद्वयसामर्थ्येन प्रतीतेः । सन्तमित्यनेन ह्यगङ्गां गङ्गे-त्याचक्षते यथा न तथा हरिमिति मुख्यार्थता उच्यते, तदुपपादनार्थम् आचक्षत इति निर्वचनं च सम्बध्यते । अवधारणेन त्वन्यस्य तच्छब्द(मुख्य)ार्थत्वं प्रतिषिद्ध्यते; न च सर्वथा प्रतिषेधो युक्तः, प्रागुक्तप्रयोजनव्याघातात्; ततः परमेश्वरसमकक्षतया वाच्यत्व-प्रतिषेधो ज्ञायते । रूढार्थेभ्यो यौगिकार्थस्याधिक्येऽभिहिते तद्विषयस्य विशिष्टयोगस्य लौकिकरूढितः प्राबल्यं सिद्धम् ।

**अवधारणेति क्वचित्पाठः। अत्र सन्तमिति पदं अवधारणा चेति (पद)द्वयं दर्शयतीति योजना।**

**हि यस्मादेवं तस्मादुक्तं युक्तमिति।**

**परि०— विशिष्टयोगस्येति**। महायोगस्येत्यर्थः। **रूढितः** अङ्गरूढितः। **तं** ब्रह्मादिदेहम्, **अभ्यार्चत्** प्राप्नोत्, **इदं** सर्वं जगत्, **मध्यत** उदरे। **श्रुतिरिति**। ऐतरेयोपनिषद्रूपा। **इत्युक्तत्वादिति**। आचक्षते विद्वांस इत्यनेन प्रयोगबाहुल्यस्योक्तत्वात् प्रयोगबाहुल्यस्य 'प्रयोगमात्रबाहुल्यं रूढिरित्यभिधीयते' इत्यनेन रूढित्वेनोक्तत्वादित्यर्थः। शस्प्रत्ययार्थोऽतीति। **उक्तेन योगेन** तं यच्छतमित्यादिनोक्तयोगेनेत्यर्थः। **पदद्वयेति**। एतं सन्तमिति पदद्वयसामर्थ्येनेत्यर्थः। तद्व्यनक्ति **सन्तमित्यादिना। इति निर्वचनमिति**। मूले क्रमेण तावतैवोक्तेराचक्षत इति निर्वचनमित्युक्तम्। 'तं यच्छतं वर्षाण्यभ्यार्चत् तस्माच्छतर्चिन इत्याचक्षत' इति शतर्च्याद्यवयवार्थं सन्तमिति सम्बध्यत इत्यर्थः। **प्रागुक्तेति**। ज्योतिरादिशब्दव्युत्पत्ति-कर्मानुष्ठानसम्भव-लोकव्यवहारानुच्छेदरूपप्रयोजनानां प्रयोजनबहुत्वत इत्यत्रोक्तानां व्याघातादित्यर्थः। तावता रूढार्थेभ्यो यौगिकार्थस्याधिक्यमभिहितम्। तथापि रूढितो विशिष्टयोगस्य कथमाधिक्यसिद्धिरित्यत आह **रूढार्थेभ्य इति। उक्तं युक्तमिति**। 'उभयं दृश्यते विष्णौ' इत्युक्तम्, विशिष्टयोगस्य रूढितः प्राबल्यं च युक्तमित्यर्थः।

**गु०दी०— विशिष्टयोगस्य रूढितः प्राबल्यम्** इत्यत्र **विशिष्टयोगस्य** महायोगस्य विद्वद्रूढिविशिष्टयोगस्य वा **रूढितः** अङ्गरूढितः। **सूचितं** 'इतो हि रूढताऽन्येषामि'त्यनेन सूचितम्। यद्वा 'पूर्वायोगे परग्रह' इत्यनेन सूचितं, यथा परममुख्यवृत्त्ययोगे अवान्तरवृत्तिग्रहान्मुख्यवृत्तावेवावान्तरप्राबल्याश्रयणात् परममुख्यवृत्तेः प्राबल्यं, तथाऽङ्गरूढितः मुख्यवृत्तेः प्राबल्यमित्यर्थः। स्पष्टमकथनात् सूचितमित्युक्तम्।

**आनन्दः—** पदद्वयसामर्थ्येन यत्प्रतीतं तद्दर्शयति **आचक्षत इति सम्बध्यते। निर्वचनं चेति**। तं यच्छतं वर्षाणीति निर्वचनं चेत्यर्थः। **प्रागुक्तेति**। व्यवहारयोगसिद्ध्यादिरूपेत्यर्थः। **तद्विषयस्य** यौगिकार्थविषयस्य।

**शे०वा०— बहुवारमिति**। अनेकवारमित्यर्थः। श्रुतौ 'तस्माच्छतर्चिनस्तस्माच्छतर्चिनः' इत्याद्यभ्यासादिति भावः। **एतमेव परमात्मानमिति**। प्राणस्तथेत्यत्र ब्रह्मत्वेन निर्णीतस्य 'प्राणो ह्येष य एष तपति' इति पूर्ववाक्यस्थस्य प्राणस्यैव 'एतम्' इत्यनेन परामर्श इति भावः। **प्रागुक्तेति**। व्युत्पत्त्युपपत्त्यादिरूपप्रयोजनव्याघातादित्यर्थः।





**वा०र०**— यच्चात्र **बहुशोऽतिबहुवारमिति** मूले एकवारं द्विवारं इतिवत् बहुशब्दस्य बहुवारमित्यर्थः । बह्वल्पार्थाच्छस्कारकादन्यतरस्यामिति सूत्रेण बहुशब्दाच्छस्प्रत्ययो भवतीति व्याख्यानम् । एकश इत्यत्र तु एका(सङ्ख्यैकवचना)च्च वीप्सायामिति सूत्रेण वीप्सायामीशस्प्रत्ययः । अत एवेकैकशब्द इति कौमुद्यादिप्रयोगे शसः दुर्लभत्वं वदति एकशसैव वीप्साया लब्धत्वात् बहुश इत्येतद्व्युत्पादनम् । .............पादे टीकादौ व्यक्तं भविष्यतीति ज्ञेयम् । तस्माच्छतर्चिन इत्यस्य द्विःश्रवणेन बहुवारमिति कथमित्यतः अत्रत्यबहुशब्दस्यानेकार्थत्वान्नानुपपत्तिरित्याह **अनेकवारमित्यर्थ इति** । अनेकवारं दर्शनमेवोपदर्शयति **श्रुतौ तस्माच्छतर्चिन इत्यादि** । प्राणो ह्येष इति पूर्ववाक्योक्तप्रमाणस्यैतमिति परामर्शप्रतीतेः परमात्मनमिति व्याख्यानं कथमित्यतः तदुपपादयति **प्राणस्तथेत्यत्रेति** ।

**स०व्र०**— **यदुक्तमुभयमिति** । अत्र क्रमोल्लङ्घनं वक्ष्यमाणोपपादनानुसारेणेति ज्ञेयम् । **उक्तेन योगेनेति** । 'तं यच्छतं वर्षाण्यभ्यार्चत्' इत्याद्युक्तप्रकारेणेत्यर्थः । **आचक्षत इति निर्वचनं सम्बध्यत इति** । अत्र यद्यपि तावन्मात्रं निर्वचनं न भवति तथापि पूर्ववाक्यसहितं इदं तथा भवत्येवेति ध्येयम् । नन्वेतावता रूढार्थेभ्यः यौगिकार्थस्याधिक्यमभिहितम्, तथापि विशिष्टस्य योगस्य रूढितः प्राबल्यसिद्धिः कथमित्यत आह **रूढार्थेभ्य इत्यादिना** । **पदद्वयमिति** । इदं कर्तृ, योगस्य रूढेः प्राबल्यं कर्म, दर्शयतीति योज्यमित्यर्थः ।

**विट्ठल०**— **यदुक्तमुभयमिति** । अत्र क्रमोल्लङ्घनं वक्ष्यमाणोपपादनानुसारेणेति ज्ञेयम् । **तं** ब्रह्मादिदेहं अभ्यार्चत् प्राप **इदं सर्वं** जगत्तु **मध्यत** उदरे दधे **आचक्षत** इत्युक्तत्वादिति आचक्षत इति प्रयोगबाहुल्यस्योक्तत्वादित्यर्थः । **मधुच्छन्दादींस्त्विति** । मधुच्छन्दादयोऽपि ऋक्शतद्रष्टृत्वेन शतर्चिनः प्रसिद्धाः । तदुक्तं ऋग्भाष्ये 'मधुच्छन्दा ऋक्शतेन तुष्टाव हरिमव्ययमिति' पदद्वयसामर्थ्येन प्रतीतेरित्युक्तं विशदयति **सन्तमित्यनेनेति** । **निर्वचनं चेति** । तं यच्छतं वर्षाणीत्यादिनोक्तं निर्वचनमित्यर्थः । **प्रागुक्तेति** । व्युत्पत्त्युपपत्तिकर्मानुष्ठानलोकव्यवहाररूपप्रयोजनव्याघातादित्यर्थः । तावता कथं महायोगस्य विद्वद्रूढितः प्राबल्यसिद्धिरित्यत आह **रूढार्थेभ्य इति** । **उक्तं युक्तमिति** । **उभयं दृश्यते विष्णावित्यत्रो**क्तमित्यर्थः ।

**चषकः**— **शतं वर्षाणीति** । 'विंशत्याद्याः सदैकत्वे सर्वाः सङ्ख्येयसङ्ख्ययोः' इत्यनुशासनात् शतपदोत्तरमेकवचनम् । 'कालाध्वनोरत्यन्तसंयोगे' इत्यनेन अत्र अभिव्याप्तिरूपा अत्यन्तसंयोगार्थिका द्वितीया ।

**॥ इति 'हरिसन्निधानादिनैव शब्दानां हर्यन्यत्र वृत्तिः' इत्यत्र उक्तार्थस्योपपादनम् ॥**

**॥ इति हरिसन्निधानादिनैव शब्दानां हर्यन्यत्र वृत्तिः ॥**

**॥ इति उक्तस्य 'योगवृत्त्या परमेश्वरेऽखिलशब्दसमन्वय'स्य उपपादनम् ॥**

* * *

**॥ अथ प्रकृत्यधिकरणे ज्योतिरधिकरणस्य किञ्चिद्विवरणे**
**वाक्यान्तरैरपि 'विष्णोः सर्वशब्दवाच्यत्वो'पपादनम् ॥**
**॥ तत्रादौ उपपत्त्यपेक्षश्रुतिभिः ॥**
**॥ तत्राप्यादौ 'अ इति ब्रह्म' इति श्रुत्या ॥**

३९ **सु०—** वाक्यान्तरैरपि विष्णोः सर्वशब्दवाच्यतामुपपादयति **अ इतीति** ।

**अनु०— अ इति ब्रह्म कथितं तद्व्याख्यानात्मता तथा ॥**
**शब्दानामपि सर्वेषां**

'अ इति ब्रह्म' इति श्रुतावकारस्य ब्रह्मवाचकत्वं तावत्कथितम्, अन्यथा इतिकरणवैयर्थ्यात् । 'अकारो वै सर्वा वाक्' इति श्रुतौ सर्वेषामपि शब्दानामकारव्याख्यानता च कथिता, साक्षादैक्यस्य प्रत्यक्षादिविरुद्धत्वेन लक्षणाश्रयणस्यावश्यकत्वात् । न च व्याख्यानव्याख्येययोर्भिन्नविषयता युक्ता । तस्मादेतद्वाक्यद्वयपर्यालोचनया सर्ववागभिधेयत्वं ब्रह्मणः प्रतीयते ।

**परि०— इति श्रुताविति** । ऐतरेये । अत्र विसर्गलोपेन निर्देशे कार्ये सविसर्गस्योक्तिकृत्यम् 'विवृतावपि सर्गः स्यात्संहितायां च यत्र हि । समानोत्तमहीनत्वमुच्यते वस्तुनोऽसा' इत्यैतरेये भाष्यदिशा ज्ञेयम् । **अन्यथेति** । ऐक्यपरत्वे अः ब्रह्मेत्येव पूर्तेरिति भावः । **लक्षणाश्रयणस्येति** । 'अकारो वै सर्वा वाक्' अकारव्याख्यानं वै सर्वा वागित्येवं लक्षणाश्रयणस्येत्यर्थः । तावता कुतः सर्ववागर्थता ब्रह्मण इत्यत आह **न चेति** ।

**आनन्दः— वाक्यद्वयेति** । अः इति ब्रह्म । अकारो वै सर्वा वागिति वाक्यद्वयेत्यर्थः ।

**विठ्ठल०— अन्यथेति** । ऐक्यपरत्वे अब्रह्मेत्येव पूर्ते इति करणवैय्यर्थ्यात् । अर्थप्रकरणे श्रुतेतिशब्दस्य शब्दपरत्वादित्यर्थलक्षणाश्रयणस्येति अकारव्याख्यानं सर्वा वागित्येवं लक्षणाश्रयणस्येत्यर्थः ।

**॥ इति 'अ इति ब्रह्म' इति श्रुत्या ॥**

* * *





**॥ तत्र 'यद्वा च ओमिति', 'तमेवं विद्वान्' इत्युभयान्यथानुपपत्त्या सर्वशब्दवाच्यत्वोपपादनम् ॥**

४० **सु०—** किञ्च 'यद्वाच ओमिति यच्च नेति यच्चास्याः क्रूरं यदु चोल्बणिष्णु तद्वियूय कवयोऽन्वविन्दन्नामायत्ता समतृप्यञ्छ्रुतेधि' इत्यस्यां श्रुतौ (ऐ. उ. २-३-८) ''**वाचः** वाक्समूहस्य मध्ये यत् **ओमिति** पदमङ्गीकारवाचीति यावत्, **यच्च नेति** पदं प्रतिषेधार्थं, **यच्चास्या** वाचो मध्ये **क्रूरम्** अर्थतः कठिनं (च), यच्च **उल्बणिष्णु** शब्दत कठिनम्, उपलक्षणमेतत्, यावद्वैदिकं पदजातं; तत्सर्वं, **वियूय** विचार्य, **कवयो** विवेकिनः, **(नामायत्ता)** नामायत्तानि नामप्रकाश्यतया नामाधीनानि त(त्त)च्छब्दप्रवृत्तिनिमित्तानि, **अन्वविन्दन्** विदितवन्तः; तस्मिंश्च वेदने **अधिश्रुते** परिपक्के सति, अ(तद)नन्तरं **समतृप्यन्** कृतकृत्या मुक्ता अभूवन्;'' इति, नाममात्रविदः कृतकृत्यता तावत्कथिता ॥ 'तमेवं विद्वान्' इति परमेश्वरज्ञानादेव मोक्षः श्रूयते ॥ तदेतदुभयान्यथानुपपत्त्या सर्वाण्यपि वैदिकानि नामानि परमेश्वरार्थानीति गम्यत इत्याह **नामेति ।**

**अनु०—** **नामवित्कृतकृत्यता ॥**

**परि०—** नामवित्कृतकृत्यतेत्येतद्विवृण्वन्नेव अवतारयति **किञ्चेत्यादिना** । **अस्यां श्रुतौ** ऐतरेयश्रुतौ ।

**गु०दी०—** **नामप्रकाश्यतया नामाधीनानि** इत्यत्र **नामप्रकाश्यतया** नामत्वेन ज्ञातव्यतया **नामाधीनानि** नामत्वाधीनानि तच्छब्दप्रवृत्तिनिमित्तानि तानि नामानि तेषां शब्दानां प्रवृत्तिनिमित्तानीत्यन्वविन्दन्नित्यर्थः ।

**शे०वा०—** 'अर्थतः कठिनं क्रूरमुल्बणं श्रवणाप्रियमि'त्यैतरेयोपनिषद्भाष्योदाहृतप्रमाणानुसारेण क्रूरोल्बणशब्दौ व्याचष्टे **क्रूरमर्थतः कठिनमित्यादिना** ।

**विठ्ठल०—** **नामायत्तानी**त्यतःपरं गुणादीति शेषः । नामार्थज्ञानिनो मुक्त्युक्तावपि तन्नाम भगवत इति कुतः येन नामार्थत्वं सर्ववेदानामित्यत आह **तमेवमिति** । **सर्ववर्णादि**रित्यत्रादिपदेन संहिता ग्राह्या । सर्ववेदगतपूर्वोत्तरवर्णानां तत्संहितानां चेत्यर्थः । **अन्येऽपि वर्णा** इत्यत्र वीत्यस्य वर्णद्वयत्वमभिप्रेत्य उकारेण च बहुवचनमिति ज्ञेयम् ।





**॥ इति 'यद्वा च ओमिति', 'तमेवं विद्वान्' इत्युभयान्यथानुपपत्त्या सर्वशब्दवाच्यत्वोपपादनम् ॥**

* * *

**॥ अथ उपपत्त्यपेक्षश्रुतिभिः विष्णोः सर्वशब्दवाच्यत्वोपपादने 'सकलवैदिकसन्धीनां पूर्वोत्तरवर्णानां च विष्णुनामार्थप्रतिपादक'स्य वेदस्य सद्भावः ॥**

४१ **सु०—** अथान्यच्च सकलवैदिक**संहितानां** पूर्वोत्तरवर्णानां च **विष्णुनामार्थ-(रूप)त्वं** तत्प्रतिपादकत्वम् **अब्रवीत्** वेदः, तेन सर्वे वर्णाः सर्वाश्च संहिता विष्णुमेव प्रतिपादयन्तीति ज्ञायत इत्याह **विष्णुनामेति** ।

**अनु०—** विष्णुनामार्थरूपत्वं संहितादेरथाब्रवीत् ।

क्वाब्रवीदित्यतस्तद्वाक्यमर्थतः पठति **णकारं चेति** ।

णकारं च षकारं च बलचेष्टात्मकं वदन् ॥
तज्ज्ञानपूर्वकत्वेन संहिताऽध्ययनं तथा ।

'णकारो बलं षकारः प्राण आत्मा' इति विष्णुनामगतौ णकारषकारौ परमेश्वरबल-चेष्टाप्रतिपादकौ **वदन्** वेदोऽनन्तरं 'स यो ह एतौ णकारषकारावनुसंहितम् ऋचो वेदे'ति **ऋचामनुसंहितं** सर्वसंहितासु **णकारषकारौ यो वेद** णकारषकारतत्संहिताभिः प्रतिपाद्यो योऽर्थः स एव सर्वत्र पूर्वोत्तरवर्णतत्संहिताभिः प्रतिपाद्यत इति यो वे(त्ति)द, इति विष्णुनामसमानार्थताज्ञानपूर्वकत्वेन सर्वसंहिताध्ययनमब्रवीदित्यर्थः ।

नन्वत्र णकारषकारार्थप्रतिपादकत्वं सर्ववर्णादेरुच्यते, न तु विष्णुनामार्थत्वम्; न हि णकारषकारावेव विष्णुनामेत्यत आह **उपसर्गत्वत इति** ।

**उपसर्गत्वतो वेस्तु ताच्छील्यार्थादुनस्तथा ॥**
**णकारश्च षकारश्च नामरूपतया मतौ ।**





**सत्यं सन्ति विष्णुनाम्न्यन्येऽपि वर्णाः, तथाऽपि वीत्यस्योपसर्गत्वेनोत्तरपदार्थ-विशेषकत्वात् उन्प्रत्ययस्य ताच्छील्यार्थत्वादुपसर्जनत्वं मन्वानस्य वेदस्य प्राधान्यात् णकारश्च षकारश्च द्वावेव नामस्वरूपतयाऽभिमतावित्यदोषः । ननु 'उपसर्गाः क्रियायोगे', न चात्र क्रियायोगोऽस्ति, तत्कथमुपसर्गत्वम् । मैवम्, 'षोऽन्तकर्मणि', 'णुस्तुतावि'ति धातुद्वयरूपत्वाङ्गीकारात्, अत एव ताच्छीलिकप्रत्ययोत्पत्त्युपपत्तिः ।**

**परि०— वदन्वेद इति** । ऐतरेयवाक्यमित्यर्थः । **अनन्तरमिति** । 'णकारो बलमि'त्यादि-वाक्यादनन्तरमित्यर्थः । **सर्ववर्णादिरिति** । आदिपदेन संहिता ग्राह्या । **अत एवेति** । धातुरूपत्वादेव धात्वधिकारविहितोऽन्प्रत्ययोत्पत्त्युपपत्तिरित्यर्थः । पृषोदरादित्वादत्र यथायोगं वर्णलोपादिः पूर्वोक्तदिशा सुज्ञान इति भावः ।

**यादु०— सर्ववर्णादिरुच्यत इति** । अत्र आदिपदेन संहिता ग्राह्या । तथा च सर्ववेदगतपूर्वोत्तर-वर्णसंहितानामित्यर्थः । अत एव पूर्वमपि णकारषकारसंहितार्थप्रतिपादकत्वमिति संहिता ग्राह्या । **अन्येऽपि वर्णा इति** । वीत्यत्र वर्णद्वयमभिप्रेत्य बहुवचनमिति ज्ञातव्यम् । **धातुद्वयरूपेति** । निर्वचनत्वेनोभयत्रान्तलोपे षकार-णकारयोरुक्तधातुद्वयरूपत्वमुपपन्नम् । धातूनां चानेकार्थत्वात् प्रागुक्तचेष्टाबलार्थकत्वं च तयोरिति भावः । **अत एवेति** । षकारणकारयोरुक्तरीत्या धातुद्वयरूपत्वादेवेत्यर्थः । अन्यथा धात्वधिकारविहितस्य ताच्छीलिकार्थ-उन्-प्रत्ययस्योत्पत्तिरनुपपन्नेति भावः ।

**वं०प०— संहितानामिति** । अत्र संहिताशब्देन सन्धिरुच्यते । एवमेवोत्तरत्रापि ज्ञेयम् । **अन्येऽपि वर्णा इति** । वीत्यत्र वकार इकारश्च, ष्णुरित्यत्र उकार एक इति त्रयो वर्णा इत्यर्थः ।

**आनन्दः— स एव सर्वत्र पूर्वोत्तरवर्णतत्संहिताभिरिति** । न चात्र णकारषकाराभ्यां बलवत्वचेष्टात्व-रूपप्रवृत्तिनिमित्तपुरस्कारेण प्रतिपाद्यते तेनैव प्रकारेण सर्वसंहिताप्रतिपाद्यत्वे पर्यायत्ववैयर्थ्ये स्यातामिति । वाच्यं णकारषकारार्थभूतः परमात्माभिन्नभिन्नप्रवृत्तिनिमित्तपुरस्कारेण प्रतिपाद्य तेन त्वेतत्प्रवृत्तिनिमित्तपुरस्कारेणेत्यर्था-ङ्गीकारेणोक्तदोषाभावात् । अनेन वाभिप्रायेण णकारषकारार्थ एव सर्वसंहितार्थ इत्युक्तमिति । **अत एवेति** । धातुद्वयरूपत्वादेवेत्यर्थः । न हि प्रातिपदिकात्ताच्छीलिकप्रत्ययोत्पत्तिर्दृष्टेति भावः ।

**श्रीनिधि०— उपसर्जनत्वं मन्वानस्येति** । उपसर्गप्रत्यययोरुभयोरपि धात्वन्वितत्वेनैवार्थबोधकत्वा-दुपसर्जनत्वं धातोस्तु स्वातन्त्र्येणैवार्थबोधकत्वात् प्रधानत्वमिति भावः । **षो अन्तकर्मणीति** । 'उपसर्गमहिम्ना बलाद्यर्थत्वं धात्वर्थं बाधते कश्चिदि'त्याद्युक्तेरिति भावः । **अत एवेति** । धातुत्वादेव ताच्छीलिकप्रत्ययस्य धात्वधिकारविहितादिति भावः ।





**शे०वा०— सर्ववर्णादेरिति** । आदिपदेन संहितापरिग्रहः । ततश्च सर्ववेदगतपूर्वोत्तरवर्णसंहितानामित्यर्थः । **अन्येऽपि वर्णा इति** । वीत्यत्र वर्णद्वयसत्त्वात् बहुवचनोपपत्तिरिति ज्ञेयम् । **धातुद्वयेति** । निर्वचनत्वादुभयत्रान्तलोपो द्रष्टव्यः । धातूनामनेकार्थत्वादुक्तचेष्टाबलार्थकत्वसिद्धिरिति भावः । **अत एवेति** । षकारणकारयोरुक्तरीत्या धातुद्वयरूपत्वादेवेत्यर्थः । **प्रत्ययेति** । उन्प्रत्ययेत्यर्थः । **उपपत्तिरिति** । अन्यथा धात्वधिकारविहितत्वात् तदनुपपत्तिप्रसक्तेरिति भावः ।

**वा०र०—** संहितादेरिति भाष्यानुसारेण संहितायां पूर्वोत्तरवर्णानां चेत्युक्त्वापि वस्तुगत्या वर्णानां संहितेति वर्णप्राधान्यपुरस्कारेण सर्वे वर्णा सर्वाश्च सहिता इत्यादिकं मूले उक्तमिति न दोषः । मूलेन रूपसर्गाः इति क्रियायोगे किल प्रादयः उपसर्गाः । क्रियायोगे यत्र वर्तते तत्रैव प्रादीनामुपसर्गत्वमित्यर्थः । ततः किमित्यत आह **न चात्रेति** । सूत्राद्यनुकरणस्वभावत्वात् सूत्रानुकरणमिदं न तु सूत्रोपन्यास इति तत्सूत्रार्थस्य प्रकृतासङ्गतिः शङ्कनीया । अधिकमन्तराधिकरणे अधिकारश्च तद्धानिरित्येतद्विचारे च द्रष्टव्यम् ।

**स०व्र०— सर्ववर्णादेरुच्यत इति** । अत्र आदिपदेन संहिता ग्राह्या । सर्ववेदगतपूर्वोत्तरवर्णसंहितानामित्यर्थः । **अत एव ताच्छीलिकेति** । धातुद्वयरूपत्वादेव धात्वधिकारविहितताच्छीलिक-उन्प्रत्ययोत्पत्तिः; अन्यथा साऽनुपपन्नेति भावः ।

**विट्ठल०— धातुद्वयेति** । निर्वचनत्वेनान्तलोपे षकारणकारयोरुक्तं धात्वन्तररूपत्वमुपपन्नम् । अनेकार्थत्वात् धातूनां चेष्टाबलार्थकत्वं च तयोरुपपद्यत इति भावः । **अत एवेति** । धातुद्वयरूपत्वादेव धात्वधिकारे विहितो न प्रत्ययोपपत्तिरित्यर्थः ।

**चषकः— अन्येऽपि वर्णा इति** । वीत्यत्र स्वरव्यञ्जनभेदेन वर्णद्वयसद्भावात् बहुवचनोपपत्तिः । 'न पुनरन्तरेणाचं व्यञ्जनोच्चारणमपि भवती'ति भाष्योक्तेः । **धातुद्वयेति** । 'वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ । धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तम्' इत्यभियुक्तोक्तेः निर्वचनत्वेनोभयत्रान्तलोपोऽवसेयः । 'अनेकार्था हि धातव' इति वचनाच्चेष्टाबलार्थकत्वं तयोरवधेयम् । **अत एव** तयोरुक्तदिशा धातुद्वयरूपत्वादेव । तयोस्ताद्रूप्यानुपगमे धात्वधिकारीयतादृशप्रत्ययस्य तदुत्तरमनुत्पादप्रसङ्ग इत्याशयः ।

**॥ इति उपपत्त्यपेक्षश्रुतिभिः विष्णोः सर्वशब्दवाच्यत्वोपपादने**
**'सकलवैदिकसन्धीनां पूर्वोत्तरवर्णानां च विष्णुनामार्थप्रतिपादक'स्य वेदस्य सद्भावः ॥**

* * *

**॥ तत्र उपपत्त्यपेक्षश्रुतिभिः विष्णोः सर्वशब्दवाच्यत्वोपपादनस्योपसंहारः ॥**

४२ **सु०**— उदाहृतानां श्रुतीनां प्रयोजनमाह **तस्मादिति** ।

तस्मात्समन्वयो विष्णौ स्वरवर्णपदात्मनः ॥
अपि वेदस्य किमुत वाक्यरूपेण सङ्गतिः ॥

यौ पुरा सर्वशब्दानां प्रतिपदसमन्वयो वाक्यसमन्वयश्च विष्णावुक्तौ तावेताभिः श्रुतिभिः सिद्धावित्यर्थः ।

**वा०र०**— उक्तधातुजत्वाङ्गीकारे षोणु इत्येवं धात्वन्तरस्यौकारस्योकारस्य च श्रवणापत्तिः उन्प्रत्यये च विषोणवुरिति रूपापत्तिरित्यतो मूलाभिप्रायमाह **निर्वचनत्वादिति** । तथाप्यन्तकर्माद्यर्थप्राप्त्या चेष्टाबलार्थकत्वकथनायोग इत्यत आह **अनेहार्थत्वादिति** । **धात्वधिकारविहितत्वादिति** । .......... इत्यादाविति शेषः ।

**॥ इति उपपत्त्यपेक्षश्रुतिभिः विष्णोः सर्वशब्दवाच्यत्वोपपादनस्योपसंहारः ॥**
**॥ इति उपपत्त्यपेक्षश्रुतिभिः विष्णोः सर्ववाच्यत्वोपपादनम् ॥**

* * *

**॥ अथ स्पष्टं पदवाक्यसमन्वयं प्रतिपादिनीभिः श्रुतिभिः**
**विष्णोः सर्वशब्दवाच्यत्वोपपादनम् ॥**

४३ **सु०**— उपपत्त्यपेक्षाः श्रुतयः प्रागुदाहृताः, इदानीं स्पष्टं पदवाक्यसमन्वयप्रतिपादिनीरुदाहरति **घोषा इति** ।

अनु०— घोषाः सर्वेऽपि वेदाश्च सर्वे वेदाश्च यत्पदम् ॥
इन्द्रं मित्रं यमिन्द्रं च प्रथमं(मः) संकृतिस्तथा ।
नामधाः सर्वदेवानामेक इत्यादिका श्रुतिः ॥
प्रमाणमुक्तविषये





**'ता वा एताः सर्वा ऋचः सर्वे वेदाः सर्वे घोषा एकैव व्याहृतिः प्राणा एव', 'सर्वे वेदा यत्पदमामनन्ति', 'इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान् । एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः', यमिन्द्रमाहुर्वरुणं यमाहुर्यं मित्रमाहुर्यमु सत्यमाहुः', 'स प्रथमसं(स)कृतिर्विश्वकर्मा स प्रथमो मित्रो वरुणोऽग्निः' । 'यो देवानां नामधा एक एव' इत्येतानि वाक्यानि एतैः प्रतीकैः उपात्तानि । आदिपदेन 'नामानि सर्वाणि' इत्यादेर्ग्रहणम् ।**

**अत्राद्यद्वितीयान्तिमश्रुतयः समन्वयद्वये प्रमाणम्, अन्यास्तु वाक्यान्वये । इन्द्रादिनाम्नां परमेश्वरपरत्वे सति 'इन्द्रस्य नु वीर्याणि प्रवोचम्' इत्यादिवाक्यानां तत्परत्वं हि सिद्ध्यति ।**

**परि०— उपपत्त्यपेक्षा इति** । एतद्वाक्यद्वयपर्यालोचनयेति, तदुभयान्यथानुपपत्त्येति, उपसर्गत्वतो वेस्त्वित्याद्युक्तोपपत्तिसापेक्षा इत्यर्थः । **ता वा एता इति** । यास्ता एताः सर्वा ऋचस्तासामेकमेव(व्याहृतिः)व्याहर्तव्यम् । तच्च प्राण एव । प्राणस्तथेत्यत्रोक्तन्यायेन विष्णुरेव । ये च सर्वे वेदास्तेषामपि प्राण एव व्याहृतिर्व्याहर्तव्यः प्रतिपाद्यः किमु ऋचाम् । किञ्च ये समुद्रादिघोषाः तेषामपि मन्त्रशास्त्रप्रसिद्धनादरूपवर्णाभिव्यक्तिद्वारा प्राण एव प्रतिपाद्यः किमु वेदानामित्यर्थः । **सर्वे वेदा इति** । 'सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति । यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं सङ्ग्रहेण प्रवक्ष्ये' इत्युपक्रम्य 'तद्विष्णोः परमं पदमि'ति काठके श्रवणाद्विष्णोस्सर्ववेदप्रतिपाद्यत्वसिद्धिः । अन्तेऽग्नियममातरिश्वशब्दश्रवणात् कृत्स्न-ऋच उक्तिः । अस्य वाक्यस्य वामनसूक्तस्थत्वात् विष्णुपरत्वसिद्धिरिति भावः । इन्द्रमित्यादिश्रुतीनामिन्द्रादिशब्दवाच्यत्वपरत्वमेव न तु इन्द्राद्यैक्यपरत्वमित्यादि तु चन्द्रिकायामन्तर्नये ऐतरेयाथर्वणभाष्ययोश्च व्यक्तम् । **समन्वयद्वय इति** । पदसमन्वये वाक्यसमन्वये चेत्यर्थः । सर्वे वेदा इत्युक्तेः पदविधया वाक्यविधया चेत्येवं परत्वसम्भवान्नामधा इत्यादावप्येवमेवोपपत्तेरिति भावः । य इन्द्रमित्यादौ वाक्यान्वयमात्रपरत्वं व्यनक्ति **इन्द्रादीति** । ननु ता वा इत्यादिश्रुतीनामपि ब्रह्मणि पदसमन्वयान्नैताभिः सर्वशब्दवाच्यत्वसिद्धिरिति चेन्न । एतासां लोकप्रसिद्धपदार्थसंसर्गाबोधकत्वे तद्बोधाधीनस्य पदसमन्वयस्यैवासिद्धिः । बोधकत्वे तु न पदसमन्वयो येन स्वोपजी(व्यो)व्यं ब्रह्मणः सर्वशब्दवाच्यत्वरूपसंस(र्गो बाध्येत)र्गं बाधेत । स्वाध्यायोऽध्येतव्य इति वाक्यवच्च एतासां विनियोक्तृत्वविनियोज्यत्वे न विरुद्धे इति भावः ।





**वं०प०**— वाक्यान्वय इत्युक्तमुपपादयति **इन्द्रादीति**।

**आनन्दः**— ननु पुनरपि घोषा इत्यादिश्रुत्युदाहरणमयुक्तं पुनरुक्तत्वात् । किंच यद्यग्रे श्रुत्युदाहरणं क्रियते तर्हि तस्मादित्युपसंहारकरणमयुक्तम् । सर्वश्रुत्युदाहरणान्ते तस्योचितत्वादित्यत आह **उपपत्त्यपेक्षा इति** । ननूदाहृतासु श्रुतिषु काः कुत्रपदसमन्वये प्रमाणवाक्यसमन्वये च का इति न ज्ञायते । अत आह **अत्राद्येति**। ता वा एताः सर्वे वेदा यत्पदं यो देवानामित्याद्या इत्यर्थः। वाक्यान्वयपरत्वप्रकारं दर्शयति **इन्द्रादिनाम्नामिति**।

**शे०वा०**— उदाहृतश्रुतीनां प्रतिपदसमन्वयवाक्यान्वययोः अन्यतरमात्रविषयकत्वभ्रान्तिं सर्वासामपि उभयविधसमन्वयपरत्वभ्रान्तिं च परिहरति **अत्रेति** ।

**विठ्ठल०**— **अन्तिमश्रुतिरिति** । आदिपदसङ्गृहीतेति ज्ञेयम् । यो देवानामित्यस्य वाक्यान्वयविषयपरत्वात् अन्यासु वाक्यान्वय इत्युक्तं तत्कथमित्यत आह **इन्द्रादीति** ।

**॥ इति स्पष्टं पदवाक्यसमन्वयं प्रतिपादिनीभिः श्रुतिभिः विष्णोः सर्वशब्दवाच्यत्वोपपादनम् ॥**

**॥ इति प्रकृत्यधिकरणे ज्योतिरधिकरणस्य किञ्चिद्विवरणे वाक्यान्तरैरपि 'विष्णोः सर्वशब्दवाच्यत्वो'पपादनम् ॥**

* * *

**॥ अथ ज्योतिरधिकरणोक्तार्थस्योत्सूत्रिततत्वशङ्का तन्निरासश्च ॥**

४४　**सु०**— नन्वेतदर्थप्रतिपादकसूत्रस्यादर्शनादुत्सूत्रितोऽयमर्थः कस्मादुक्त इत्यत आह **तदेवेति**।

**अनु०**—　　तदेवोक्तमुपक्रमात्।
इति स्वयं भगवता ब्रुवताऽशेषमन्वयम् ॥ २ ॥

तदेतत् **भगवता** सूत्रकारेण **स्वयमुक्तमेव**, नोत्सूत्रितं, कथ्यते । तथा च सूत्रम्, 'ज्योतिरुपक्रमात्तु तथा ह्यधीयत एके' इति ।

अत्र ज्योतिरिति सूत्रप्रतीके ग्राह्ये यत् **उपक्रमात्** इत्याह, तेन 'ज्योतिरुपक्रमा' इति परेषामपपाठ एवेति सूचयति ।





अथवाऽत्र ज्योतिर्मात्रग्रहणात् कथं सर्वशब्दप्रतिपादनम् । ज्योतिःशब्दस्योपलक्षणत्वादिति वदामः । कथमुपलक्षणाभिप्रायोऽवगम्यत इत्यत उक्तं **उपक्रमादिति ब्रुवतेति ।**

अत्र हि 'ज्योतिः' इति प्रतिज्ञाय 'उपक्रमात्तु तथा ह्यधीयत एके' इति हेतुरुच्यते । तस्य चायमर्थः । 'एष इमं लोकमभ्यार्चत्' इति **उपक्रमात्** उपक्रमं विधाय ता वा एता इत्यादि **अधीयत एक** इति । तथा च यदि ज्योतिश्शब्दमात्रसमन्वयोऽत्र विवक्षितः स्यात् तदा तन्मात्रोपपादकं किमपि वक्तव्यम्, सर्वशब्दवाच्यतोपपादकस्योपादानं क्वोपयुज्यते, न हि विशेषविषयं प्रमाणं नास्ति येन सामान्यद्वारा साधनं विधेयम्; अतः सर्वविषयं प्रमाणमुपाददानेन सूत्रकृता ज्योतिश्शब्दो लाक्षणिको विवक्षित इति ज्ञायते ।

किञ्च तत्तु समन्वयादिति ब्रह्मणि सर्वशब्दसमन्वयः प्रतिज्ञातो न कतिपयशब्दसमन्वय इत्युपपादितम्, तद्विवरणार्थमध्यायशेषस्य प्रवृत्तिरिति चोक्तम् । तत्रानन्दमयाद्यधिकरणैः प्राकरणिकशब्दसमन्वयः प्रतिपादितः, अस्मिंश्च पादे विरोध्यादिशब्दसमन्वयः । तथा च कर्मक्रमाद्यभिधायिनः शब्दाः, इदं च अधिकरणमवशिष्टमिति परिशेषात्तत्समन्वयार्थमेतदिति ज्ञायत इत्याशयवानाह **ब्रुवतेति ।**

अस्त्वत्र सर्वशब्दसमन्वयप्रतिज्ञानम्, तथाऽपि योऽत्र तदुप(त्प्रति)पादनार्थं जातमोतमित्यादिनाऽन्वयो(न्यायो)ऽभिहितः स न सूत्रित इत्यतो वोक्तम् **उपक्रमादिति ।** 'एष इमं लोकमभ्यार्चत्' इत्युपक्रमवाक्यमुपादाय 'तथा ह्यधीयत एक' इति वदता सूत्रकारेण तदेवोक्तं यदस्माभिरुक्तम्, उपक्रमे सर्वस्यास्य दर्शनात् । यथा चैतत्तथा 'एतमेव' इत्यादिनोक्तमिति ॥ १-४-२॥

**परि०— इत्युपपादितमिति ।** **इति चोक्तमिति ।** 'जन्माद्यस्येति सूत्रेण गुणसर्वस्वसिद्धये । ब्रह्मणो लक्षणं प्रोक्तं शास्त्रमूलं यतस्ततः । अन्वयः सर्वशब्दानां गुणसर्वस्ववेदक' इत्यनेन तथा 'एवं शास्त्रावगम्यत्वे विभागेन समन्वयमि'त्यादिना (च) आनन्दमयमये उपपादितमित्युक्तमिति ज्ञेयम् । **प्राकरणिकेति ।** तत्प्रकरणस्थशब्दसमन्वय इत्यर्थः । **विरोध्यादीति ।** विरोधिसर्वबाहुल्येति विषयमालाव्याख्यानेन तत्प्राग्विवृतमिति भावः ।





**यादु०— अपपाठ एवेति** । अपपाठत्वं च वक्ष्यमाणरीत्या तदीयसूत्रार्थस्यायुक्तत्वेन तेजसस्तद्रूपमिति श्रुत्यनुगमाय लाघवाय च तेजआदिरित्येव वक्तव्यत्वेन अजापदाध्याहारप्रसङ्गेन च ज्ञातव्यम् ।

**वं०प०—** ननु ज्योतिःशब्दसमन्वयसाधकप्रमाणाभावात् सामान्यतः सर्वशब्दवाच्यत्वोपपादकमेव प्रमाणमुपात्तम् । तेन ज्योतिःशब्दस्यापि समन्वयसिद्धिरिति चेत् तत्राह **न हीति** । **सर्वशब्देति** । उक्तवक्ष्यमाणैतत्कर्मक्रमादिवाचकसर्वशब्देत्यर्थः।

**आनन्दः—** ननु ज्योतिःशब्दस्यैव भगवत्परत्वोपपादकविशेषप्रमाणाभावात्सर्वशब्दवाच्यतोपपादकं सामान्यमुपादाय तद्द्वारा साधनं क्रियत इत्यत आह **न हि विशेषेति** । **यदस्माभिरुक्तमिति** । योगवृत्त्या सर्वशब्दानां यद्भगवत्परत्वमुक्तमित्यर्थः । कुत एतत् ज्ञायत इत्यत्राह **उपक्रम इति** । एष इमं लोकमित्युपक्रम इत्यर्थः । **यथा चैतदिति** । सर्वशब्दानां भगवत्परत्वमित्यर्थः ।

**श्रीनिधि०— तथा च सूत्रमिति** । तदेवेत्यस्याभिप्रायस्तु तस्य चायमर्थ इत्युत्तरग्रन्थेन व्यक्तो भविष्यति । **कर्मक्रमाद्यभिधायिन इति** । कर्माभिधायिनः तथा तत्क्रमाभिधायिनत्वेत्यर्थः । **एतमेवेत्यादिनेति** । 'एतमेव तथा सन्तं शतर्चीत्यादिनामभिः । आचक्षत इति ह्यत्रे'त्याद्यनुभाष्येनेत्यर्थः । 'अतो नोत्सूत्रितं जातमोतमि'त्यादि प्रकाराभिधानमिति भावः ।

**शे०वा०—** अभाष्यत्वशङ्कापरिहारार्थत्वान्नोत्तरवाक्यवैयर्थ्यमित्यभिप्रेत्य तच्छङ्कामुत्थापयति **नन्विति** । **अपपाठ एवेति** । मूलपुस्तकेष्वदर्शनादिति भावः । **उपक्रमं विधायेति** । अनेनोपक्रमादिति पञ्चमी ल्यब्लोपनिमित्तेत्युक्तं भवति । **इत्युपपादितमिति** । 'जन्माद्यस्येति सूत्रेण गुणसर्वस्वसिद्धये । ब्रह्मणो लक्षणं प्रोक्तम्' इत्यादिना आनन्दमयाधिकरणान्त इति शेषः । **उक्तमिति** । 'इति कृत्वा हृदि प्रभुः । समन्वयं साधयति' इत्यादिनेति शेषः । विरोध्यादीत्यादिपदेन बहुत्वविशिष्टार्थवाचिपञ्चजनादिशब्दसङ्ग्रहः ।

**वा०र०— अभाष्यत्वशङ्केति** । उत्सूत्रप्रमेयप्रतिपादनाशङ्कानिमित्तकेति शेषः ।

**स०व्र०— ब्रह्मणि सर्वशब्दसमन्वय इति** । 'जन्माद्यस्येति सूत्रेण गुणसर्वस्व' इत्यादिना सर्वमुक्तमिति भावः।

**विठ्ठल०— उपक्रमं विधायेति** । तथा च उपक्रमादिति पञ्चमील्यब्लोपनिमित्तेति भावः । **इत्युपपादितमिति** । 'जन्माद्यस्येति सूत्रेण गुणसर्वस्वसिद्धय' इत्यादिना । **इत्युक्तमिति** । एवं शास्त्रावगम्यत्वे विभागेनेत्यादिनेति शेषः । **प्राकरणिकेति** । आनन्दमयादितत्प्रकरणगतशब्दसमन्वय इत्यर्थः । **विरोधीति** । विरोधिबाहुल्यकारणस्त्रीनिषेधिशब्दसमन्वय इत्यर्थः । **उपक्रमे सर्वस्य दर्शनादिति** । सौत्रपदगृहीते तं शतं





वर्षाणीत्युपक्रमे वाक्येऽस्यास्मदुक्तस्यावयवव्युत्पत्त्या सर्वपदजातस्य भगवत्परतायाः महायोगमहायोगरूढ्या प्राबल्यस्य परमात्मनि तत्सत्त्वस्य लौकिकरूढिदौर्बल्यस्येत्यादि सर्वस्य दर्शनादित्यर्थः । न दृश्यत इत्यत आह **यथा चैतदिति** ।

**चषकः— अपपाठ एवेति** । अपपाठत्वं च मूलकोशेष्वदर्शनादभिधास्यमानदिशा तदीयसूत्रार्थाभिधानासामञ्जस्येन अजापदाध्याहारप्रसङ्गेन च ज्ञेयम् ॥

**॥ इति ज्योतिरधिकरणोक्तार्थस्योत्सूत्रितत्वशङ्का तन्निरासश्च ॥**

**॥ इति प्रकृत्यधिकरणे ज्योतिरधिकरणस्य किञ्चिद्विवरणम् ॥**

**॥ इति प्रकृत्यधिकरणे समाकर्षाधिकरण-ज्योतिरधिकरण(पञ्चम-द्वितीयाधिकरण)योः सिंहावलोकनन्यायेन किञ्चिद्विवरणम् ॥**

* * *

**॥ अथ एतत्पादीयं परोक्तव्याख्यानं तन्निरासश्च ॥**

**॥ तत्रादौ सामान्यतः पादार्थनिराकरणम् ॥**

**॥ तत्राप्यादौ 'प्रधानस्य शब्दवाच्यत्वं निषिद्ध्यते' इत्यर्थस्य प्रथमाध्यायानन्तर्भावप्रसङ्गः ॥**

४५ **सु०—** एवं सङ्क्षेपविस्तराभ्यां आनुमानिकमित्यादिसूत्राणि व्याख्याय परेषां व्याख्यानं प्रत्याख्याति । तथा हि ''केचित् एतत्पादप्रमेयमन्यथा वर्णयन्ति, 'यदुक्तं प्रधानस्य अशाब्दत्वम् ईक्षतेर्नाशब्दमिति, तदसिद्धम्, कासुचिच्छाखासु प्रधानसमर्पणपराणां शब्दानां श्रूयमाणत्वादि'ति, तदेतद्यावन्न निराक्रियते न तावद्ब्रह्मकारणवाद(स्य)-स्थैर्यं भवति, अतः प्रधानस्य अशाब्दत्वं प्रतिपादयितुमयं पाद आरभ्यत'' इति । तत्तावन्निराचष्टे **न शब्दवाच्यतैवेति** ।

## अनु०— न शब्दवाच्यतैवात्र प्रधानस्य निषिद्ध्यते ।

**अत्रैव** प्रथमेऽध्याये, प्रधानस्य शब्दवाच्यता निषिद्ध्यत इति नोपपद्यते, तथा सति समन्वयलक्षणेऽन्तर्भावाभावेन पादस्यासङ्गतत्वप्रसङ्ग इति भावः ।

ननूक्तमत्र समन्वयस्थेम्ने प्रधानस्य अशाब्दत्वमत्रोपपाद्यत इति; तथा च कथमसङ्गतिरिति । मैवम् । तथा सति अविरोधलक्षणे अन्तर्भावप्रसङ्गात् । अन्यथा द्वितीया(ध्याया)र्थोऽपि समन्वयस्थैर्यार्थैवेति सोऽप्यत्र वक्तव्यः स्यात् ।





**केवलं शब्दवाच्यतैवात्र प्रधानस्य निषिध्यते इति न युज्यते, विशेषाभावात् ।**

**परि०— इत्यादिसूत्राणीति** । अतद्गुणसंविज्ञानबहुव्रीहिः । तदधीनत्वसूत्रज्योतिःसूत्र-कल्पनासूत्राणीत्यर्थः। आद्यस्य 'दुःखिबद्धावराद्यास्तु' इति सङ्क्षेपव्याख्या। 'स्वातन्त्र्यं तद्गतत्वं चे'त्यादि विस्तरः। ज्योतिरित्यस्य 'जातमोतमि'त्यादिः सङ्क्षेपः। 'एतमेव तथा सन्तमि'त्यादिर्विस्तरः। कल्पनोप-देशात्, वाक्यान्वयात्, इत्यनयोस्तु 'अङ्गीकृतेऽपी'त्यादिः सङ्क्षेपः । 'तेषु तेष्वि'त्यादिर्विस्तरः । एवमन्येषां यथायोगं सङ्क्षेपविस्तरौ ध्येयौ । यद्वा स्त्रीशब्दाश्चेत्यादिना सर्वाधिकरणानां विषयपूर्वपक्ष-सिद्धान्तयुक्तीनामुक्त्या आनुमानिकादिसर्वसूत्राणां सङ्क्षेपेण व्याख्या । तत्र कानिचिद्विस्तरेणेत्येवं सङ्क्षेपविस्तराभ्यामित्यस्यार्थो ध्येयः । **समन्वयलक्षणे** समन्वयाध्याये । **विशेषाभावादिति** । परमते समन्वयसूत्रे ब्रह्मणि सर्वशब्दसमन्वयस्य अप्रतिज्ञातत्वेन प्रधानस्य अव्यक्तादिशब्दवाच्यत्वेऽपि प्रागुक्तकारणत्वाद्यविरोधेन शब्दवाच्यतामात्रनिषेधस्यापि फलस्यासिद्धिरित्यर्थः।

**यादु०— समन्वयलक्षण इति**। समन्वयाध्याय इत्यर्थः।

**वं०प०—** 'विरोधात्' इत्याद्यधिकरणकथनेन सङ्क्षेपतः। 'अन्वयः सर्वशब्दानाम्' इत्यनेन विस्तरतः। **लक्षणे** अध्याये। एवमुत्तरत्र। **अन्यथेति**। तत्रान्तर्भावयोग्यत्वेऽप्यत्र कथन इत्यर्थः। **द्वितीयेति**। द्वितीयाध्याये-त्यर्थः। **केवलं शब्दवाच्यतैवेति**। द्वितीयाध्यायार्थभूतयुक्त्यादिविरोधपरिहारं विनेत्यर्थः।

**आनन्दः— अन्यथेति** । समन्वयस्थैर्यसाध................धाना शब्दत्वस्य समन्वयलक्षणे निवेश-श्चेदित्यर्थः । ननु विशेषकारणस्य विद्य................शब्दत्वमेवात्र निराक्रियत इत्यत आह **केवलमिति** ।

**श्रीनिधि०—** ननु न समन्वयस्थैम्ने शब्दवाच्यता निषिद्ध्यते । येनाविरोधलक्षणेऽन्तर्भावः स्यात् । किन्नाम तूष्णीमेवेत्यत आह **केवलमिति** । **विशेषाभावादिति** । नियामकाभावादित्यर्थः ।

**शे०वा०— तत्तावदिति** । सूत्रापव्याख्यानस्याप्युत्तरत्र निराकरिष्यमाणत्वात् तावदित्युक्तम् । प्रधानाशब्दत्वप्रतिपादनस्य अध्यायासङ्गतिवर्णनपरतया मूलं योजयति **अत्रैवेति** । अनेन एवशब्दो भिन्नक्रम इत्युक्तं भवति । अत्रेत्यस्य व्याख्यानम् **प्रथमेऽध्याय इति** । एवशब्दस्यात्रेत्यनेन योजनया लब्धमर्थमाह **तथा सतीति** । कुतोऽस्य व्युत्पादनस्य प्रथमाध्याये असङ्गतिरित्यतः अध्यायार्थाप्रतिपादकत्वादिति भावेन अध्यायार्थसूचनायोक्तम् **समन्वयलक्षण इति** । समन्वयो लक्ष्यते प्रतिपाद्यते अनेनेति समन्वयलक्षणः तस्मि-न्नित्यर्थः । अध्यायसङ्गतिश्च अन्तर्भावलक्षणेति भावेन अन्तर्भावाभावेनेत्युक्तम् ।





**वा०र०**— तत्तावदित्यत्र तावच्छब्दार्थमाह **व्याख्यानस्यापीति** । तत्तावदितीत्येवं प्रतीकोपादानपूर्वकं सूत्रापेति पाठस्तु स्पष्ट एव । **एवशब्दो भिन्नक्रम इतीति** । एतद्योजनायामिति शेषः । यद्यप्यत्रैव शब्दस्योत्तर-पदेनान्वय इत्येवं वक्तुं शक्यम् । व्यवधानस्थान एव भिन्नक्रमतायास्तत्र तत्र 'क्षरश्चाक्षर एव च अक्षरादपि चे'त्यादौ व्याख्यानदृष्टत्वात् .............. इत्यादावुत्तरेण पूर्वेण च सम्बध्यत इत्यादेरेवोक्तिश्च तथापि एवात्रेत्येव यथाश्रुतं समर्पकमिति अत्रैवेति व्युत्क्रमेण योजनीयमेव । तथा च एवकारस्य यथाश्रुतस्थानपरित्यागेन भिन्नक्रमता अस्त्येवेति हृदयम् । समन्वयस्थेम्ने प्रधानाशब्दत्वद्वितीयाध्यायार्थयोर्वक्तव्यत्वाविशेषे आद्यस्यैव प्रतिपादनायोग इत्येतत्समर्पकतयापि भाष्यं योजयति **न शब्दवाच्यतैवेति** । **विशेषेति** । विशेषेति च मूलं द्वितीयाध्याया-र्थादिति शेषः । प्रधानस्य शब्दवाच्यत्वनिषेधमात्रकरणमनुपपन्नम् । समन्वयसूत्रे सर्वशब्दसमन्वयस्याप्रतिज्ञानादिति टीकान्तरं तु प्रकृतापरामर्शमूलकम् ।

**विट्ठल०**— **एवं सङ्क्षेपेण विस्तराभ्यामिति** । आनुमानिकसूत्रं दुखिबद्धावराद्यास्त्विति सङ्क्षेपेण स्वातन्त्र्यं तद्गतत्वं चेति विस्तरेण ज्योतिरस्सूत्रं जातमोतमिति सङ्क्षेपेण एतमेव तथा सन्तमिति विस्तरेणेत्यादि-प्रकारेण सङ्क्षेपविस्तराभ्यामित्यस्यार्थो द्रष्टव्यः । यद्वा विरोधि सर्वेत्यादिना सर्वेषामधिकरणानां विषयपूर्वपक्ष-सिद्धान्तन्यायानामुक्तत्वात् सैव सर्वसूत्राणामपि सङ्क्षेपेण व्याख्या । तत्र केषाञ्चिदानुमानिकसूत्राणां विस्तरेणेत्येवं सङ्क्षेपविस्तराभ्यामित्यर्थः । कुतो नोपपद्यत इत्यतः **अत्रैवेति** मूलपदाभिप्रायमाह **तथा सति समन्वयलक्षण इति** । समन्वयाध्याय इत्यर्थः । **उक्तमिति** । स्वग्रन्थ इत्यर्थः । **अन्यथेति** । समन्वयस्थापनपरस्यापि समन्वयाध्याये वक्तव्यत्व इत्यर्थः । **केवलमिति** । द्वितीयाध्यायार्थमात्रार्थकथनायेत्यर्थः । **विशेषाभावादिति** । प्रधानस्य शब्द-वाच्यतानिषेध इव द्वितीयाध्यायार्थस्यापि समन्वयस्थापनपरत्वाविशेषादित्यर्थः ।

**चषकः**— **समन्वयलक्षणे** समन्वयाध्याये ।

**॥ इति 'प्रधानस्य शब्दवाच्यत्वं निषिद्ध्यते' इत्यर्थस्य प्रथमाध्यायानन्तर्भावप्रसङ्गः ॥**

* * *

**॥ तत्र 'प्रधानस्य जगत्कारणादिशब्दवाच्यत्वं निषिद्ध्यते शब्दवाच्यतैव वा' इति विकल्प्योभयनिरासः ॥**

**४६ सु०— किञ्चात्रपादे जगत्कारणादि(वाचि)शब्दवाच्यत्वं प्रधानस्य निषिध्यते, शब्दवाच्यतैव वा ।**

नाद्यः, अत्रोदाहृतवाक्येषु 'महतः परमव्यक्तम्', 'यस्मिन्पञ्चपञ्चजनाः' इत्यादिषु प्रधानस्य जगत्कारणत्वाश्रवणात् । कश्चिदाह, 'महतः परमव्यक्तम्' इति परशब्देन

**कालविप्रकृष्टत्वमुच्यते, ततः कारणत्वशङ्केति । तदयुक्तम् । किं कालविप्रकर्ष एव कारणत्वम्, उत तेनानुमेयम्, अथ सम्भाव्यम् । न प्रथमद्वितीयौ, कार्यकारणभावविकलयोरपि परापरभावदर्शनात् । न तृतीयः, सम्भावनामात्रस्येयन्तं सूत्रसन्दर्भं प्रति प्रयोजकत्वायोगात् । अजामेकामित्यादौ कारणत्वं प्रतीयत इति चेत्, तत्किं ब्रह्मपरं करिष्यते, तेजोऽबन्नविषयं हि तद्व्याख्यातं भवता; तथा च लौकिकमाभाणकं नातिवर्तते 'व्याघ्रेणोरणे नीते का हानिः वृके(णोरणे)नीते को लाभः' इति ।**

**द्वितीये त्विदमुपतिष्ठते 'न शब्दवाच्यतैवात्र प्रधानस्य निषिद्ध्यते, प्रकृतानुपयोगादि'ति । शाब्दत्वे हि प्रधानस्य स्वरूपमात्रं सिद्ध्यति, न च स्वरूपसिद्धिमात्रेण काचिल्लक्षणक्षतिः । न ह्यस्माभिरिव परेण सर्वशब्दसमन्वयः प्रतिज्ञातः, नापि प्रधानं निषिद्ध्य ब्रह्म तत्र निवेशितम्, येनास्मदीयदिशाऽप्युपयोगः स्यात् । तदिदमुक्तम् । ब्रह्मनिवेशं(शनं) विना प्रधानस्य शब्दवाच्यतैवात्र निषिद्ध्यत इति न युक्तमिति ।**

**परि०**— ननु ईक्षत्यधिकरणोक्तसमर्थनमेव फलमिति वादिनं प्रत्याह **किञ्चेति** । वाचस्पतिमतमाह **कश्चिदिति** । **कालविप्रकर्ष इति** । अल्पकालसम्बन्धो ह्यपरः । बहुकालसम्बन्धो हि परः । तथा च अर्वाचीनमहत्तत्त्वात्परं बहुकालीनमव्यक्तमित्युक्ते कारणत्वमेव लभ्यत इति भावः । ननु आनुमानिकाधिकरण-नसङ्ख्याधिकरणविषययोः, अव्यक्तवाक्य-पञ्चजनवाक्ययोः कारणत्वाप्रतीतावपि परमते चमसवदितिसूत्रत्रयात्मकाधिकरणविषये 'अजामेकां लोहितशुक्लकृष्णां ब(ह्वीं)ह्वीः प्र(जां)जाः जनयन्तीम्' इति वाक्ये कारणधीरस्तीति शङ्कते **अजामेकामित्यादाविति** । तत्किमिति काकुस्वरः । न करिष्यत इत्यर्थः । कोऽर्थस्तस्येत्यतो दूषणसौकर्याय परोक्तमर्थमाह **तेजोऽबन्नेति** । तेजःप्रभृतिभूतत्रयाख्यशरीरोपादानरूपसूक्ष्मवस्तुविषयकमित्यर्थः । **लौकिकमाभाणकं** लौकिकीं गाथाम् । **उरणः** नाम अविशावकः । **द्वितीये त्विति** । शब्दवाच्यतैवेति पक्षे प्रकृतानुपयोगादित्युक्तं व्यनक्ति **शाब्दत्वे हीति** । एवकारार्थो ब्रह्मनिवेशं विनेति ।

**यादु०**— **परापरभावदर्शनादिति** । कालविप्रकर्षसन्निकर्षरूपपरापरत्वदर्शनादित्यर्थः । एतेन 'अर्वाचीनमहत्तत्त्वापेक्षया पूर्वकालभावित्वं विप्रकृष्टत्वं अव्यक्तस्य परशब्द आह, तथा च कारणत्वसिद्धिः । नियतप्राक्सत्त्वं हि तत्' इति भामत्यभिप्रेतमपि निरस्तं ज्ञातव्यम् । कार्यकारणभावविकलयोरपि तन्तुरूपपटयोरुक्तपरापरभावदर्शनात् । 'अव्यक्तात्पुरुषः पर' इत्यादाविव तेन तत उत्तमत्वस्यैव प्रतीतेश्च । **अजामेकामित्यादाविति** । 'बह्वीं प्रजां जनयन्तीमि'ति वचनादिति भावः । **उरणो** मेषः ।

**वं०प०— कालविप्रकृष्टत्वं** बहुकालीनत्वमित्यर्थः । ततः पूर्ववर्तित्वलाभादित्यर्थः । **कार्येत्यादि** । तथा च घटापेक्षया कस्यचिद्वृक्षस्य बहुकालीनत्वरूपपरत्वस्य घटस्यापि अबहुकालीनत्वरूपापरत्वस्य सत्त्वात् कार्यकारणभावः स्यात् । तथा च बहुकालीने वृक्षे व्यभिचारादेवेदं कारणं बहुकालीनत्वादित्यनुमानमप्ययुक्त-मित्यर्थः । **इत्यादौ** 'अव्यक्तात्पुरुषः परः' इति वाक्ये कारणत्वप्रतिपादनाभावेन तत्त्यक्त्वा अन्यदेव वाक्यं तत्प्रतिपादकमुपादीयत इति भावः । **कारणत्वं** प्रधानस्येति शेषः । **आभाणकमिति** । तथा च उभयत्रा-प्यविशावकमरणस्याविशिष्टत्ववत् 'अजामेकाम्' इति वाक्ये प्रधानं प्रतिपाद्यमिति साङ्ख्येनोक्ते, त्वया तत्र न प्रधानं प्रतिपाद्यं, किन्तु तेजोऽबन्नानीति हि सिद्धान्त्यते । तथा च साङ्ख्यमते त्वन्मते च अजामिति वाक्यस्य ब्रह्मप्रतिपादकत्वाभावस्य अविशिष्टत्वात् प्रधानं प्रतिपाद्यमित्युक्ते का हानिः । तेजोऽबन्नपरत्वे तु को लाभः । तथा च प्रधानप्रतिपादकमेव किं न स्यादिति लौकिकाभाणकं प्रकृते द्रष्टव्यम् । **लक्षणेति** । ब्रह्मनिष्ठजगत्कारणत्वरूपलक्षणस्येत्यर्थः । ननु मया भवद्रीत्या समन्वयसूत्रे ब्रह्मणः सर्वशब्दवाच्यतायाः प्रतिज्ञातत्वात् अजामिति वाक्यस्य प्रधानस्वरूपस्य प्रतिपादकत्वे सर्वशब्दवाच्यताप्रतिज्ञाभङ्गः स्यादित्यत आह **न हीति** । प्रतिज्ञात एवेति चेत् तत्राह **नापीति** । सर्वशब्दसमन्वयप्रतिज्ञासिद्ध्यर्थमिति शेषः ।

**आनन्दः— कालविप्रकृष्टत्वमिति** । अव्यक्तस्य महत्परत्वोक्त्या महतः अपरत्वमुक्तं तथा चाव्यक्तस्य महतः पूर्वकालवर्तित्वेन कारणत्वं लभ्यत इति भावः । **तत्किमिति** । तथा च प्रधानपरतानिरासेऽपि ब्रह्म-कारणतावादिनस्तव न किमपि फलमिति भावः । ननु ब्रह्मपरत्वमेवाङ्गीक्रियत इत्यत आह **तेजोऽबन्नेति** । अन्यथाऽपसिद्धान्तः स्यादिति भावः । **द्वितीये त्विति** । शब्दवाच्यतैव प्रधानस्य निषिद्ध्यत इति पूर्वविकल्पिते द्वितीयपक्ष इत्यर्थः । नन्वस्त्येव प्रकृतोपयोगः । प्रधानस्य शब्दत्वे हि सत्यपि व्याप्त्या लक्षणक्षतिः स्यादत्राह **शाब्दत्वे हीति** । ननु भवद्दिशा प्रधानशाब्दत्वनिरासाय प्रकृतोपयोगः स्यादित्यत्राह **शाब्दत्वे हीति** । ननु भवद्दिशा प्रधानशाब्दत्वनिरासाय प्रकृतोपयोगः स्यादित्यत्राह **न ह्यस्माभिरिति** ।

**श्रीनिधि०— नापि प्रधानं निषिद्ध्येति** । छन्दोभिधानादित्यादौ यथाऽस्माभिर्वेदमात्रादेः शब्द-वाच्यतानिषेधेऽपि ब्रह्म तत्र निवेशितं तथा न निवेशितमित्यर्थः ।

**शे०वा०—** भामतीमतमाशङ्कते **कश्चिदाहेति** । **कालविप्रकृष्टत्वमिति** । अर्वाचीनमहत्तत्त्वापेक्षया विप्रकृष्टपूर्वकालत्वरूपं कालविप्रकृष्टत्वमित्यर्थः । अव्यक्तस्येति शेषः । यद्यप्यत्र परशब्दः श्रैष्ठ्यवचन एव । 'इन्द्रियेभ्यः परा ह्यर्थाः' इत्यादिपूर्ववाक्येषु श्रुतस्य तथात्वात् साङ्ख्यैरपि 'अव्यक्तात्पुरुषः परः' इत्यत्र श्रुतस्य तस्य तथैव व्याख्येयत्वात् प्रधानस्य अकार्यत्वात् कठवल्लीषु, श्रुत 'इन्द्रियेभ्यः परं सत्त्वमुत्तमम् । सत्त्वादधि महानात्मा महतोऽव्यक्तमुत्तमम्' इति मन्त्रान्तरे परशब्दस्थाने उत्तमशब्ददर्शनाच्चेति न परशब्देन कारणत्व-सिद्धिरिति वक्तुं युक्तम् । तथापि स्पष्टत्वात् तच्छिष्यैरेवोह्यतामिति भावेन तदनुक्त्वा दूषणान्तरमेवाह **तदयुक्त-मित्यादिना** । **कार्यकारणभावविकलयोरपीति** । तन्तुरूपपटयोरित्यर्थः । **परापरभावेति** । पौर्वापर्येत्यर्थः ।





'अजामेकामित्यादीनां कारणत्वाभिधायकत्वमिति स्फुटम्' इति भामत्युक्तमाशङ्कते **अजामेकामित्यादाविति** । 'अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः' इत्यादि श्वेताश्वतरवाक्ये साङ्ख्याभिमताया अजायाः प्रजास्रष्टृत्वेनोक्तेरिति भावः । सत्यम्, उदाहृतवाक्ये कारणत्वं प्रतीयत इति । तथा सति त्वया तस्य ब्रह्मणि समन्वेतव्यता स्यात् । समन्वयसूत्रे कारणवाक्यसमन्वयस्य प्रतिज्ञाततत्वात् । न च, तस्य त्वया ब्रह्मणि समन्वयोऽभ्युपेयते । तत्कथं ब्रह्मकारणतावादस्य स्थैर्यमित्याह **तदिति** । ननु च नानेन पादेन समन्वयो मन्मते व्युत्पाद्यते किन्तु जन्मादिसूत्रोक्तलक्षणातिव्याप्तिपरिहार एव । अत एव आनुमानिकमप्येकेषामिति सूत्रे अपिशब्दः एकशब्दश्च । ततोऽस्य वाक्यस्य ब्रह्मपरत्वाव्युत्पादनेऽपि प्रधानपरत्वनिरासमात्रेण अतिव्याप्तिपरिहारसिद्धेः नासङ्गतिरित्यतो नातिव्याप्तिपरिहारः सम्भवति । प्रधानपरत्वनिरासेन तत्रानतिव्याप्तावपि तेजोऽबन्नपरत्वाश्रयणेन तत्रातिव्याप्त्यपरिहारादित्याशयेनाह **तेजोऽबन्नविषयं हीति** । **उरणो** मेषः । ननु अव्यक्तादिवाक्यस्य कारणत्वाप्रतिपादकत्वेन तद्वाक्यस्थाव्यक्तादिशब्दानां प्रधानपरत्वे जगत्कारणत्वलक्षणक्षत्यभावेऽपि यथा सिद्धान्ते प्रधानस्याव्यक्तशब्दार्थत्वनिराकरणं तथा मन्मतेऽपि किं न स्यादित्यतो, मन्मतेऽपि गुणपूर्तिसिद्ध्ये समन्वयसूत्रे सर्वशब्दसमन्वयस्य प्रतिज्ञाततत्वेन अव्यक्तादिशब्दार्थत्वे प्रधानस्य तच्छब्दोक्तस्य गुणस्य ब्रह्मण्यलाभस्य अन्यत्र तल्लाभस्य च प्रसङ्गेन ब्रह्मणो गुणपूर्तिसिद्ध्ये प्रधानादेरव्यक्तादिशब्दार्थत्वनिराकरणस्योपपन्नत्वेऽपि परमते सर्वशब्दसमन्वयस्याप्रतिज्ञाततत्वेन अव्यक्तादिशब्दार्थत्वेऽपि प्रधानस्याविरोधेन न तन्निरासस्योपयोग इत्याह **न हीति** ।

**वा०र०**— किञ्चेत्युत्तरत्र विकल्पितद्वितीयनिराकरणपरप्रकृतानुपयोगादित्युत्तरमूलेऽस्य प्रतिपादनेनात्र तस्यावक्तव्यकालविप्रकर्षस्यानादिमात्रे सत्त्वेन कार्यमात्रं प्रति कारणत्वापत्तिरित्यत प्रकृष्टत्वं परशब्दो विप्रकृष्टपूर्वकालमाहेति भामतीवाक्यानुसारेण व्याख्याति **अर्वाचीनेति** । अर्वाचीनमहत्तत्त्वापेक्षया पूर्वकालत्वमविप्रकृष्टत्वमव्यक्तस्य परशब्द आहेति कल्पतरूक्त्यनुसारेणेदम् । यत्त्वन्यथाख्यातौ परापरेति वाक्यं व्याख्याय तेनार्वाचीनेत्यादि भामत्यभिप्रेतमिति निरस्तमित्युक्तम् । तत्कथं मूले कश्चिदित्यनेन तन्मतस्यैव प्रक्रमेण व्याख्यानस्य पूर्वमेव कर्तव्यतया पृथक्तन्निराकरणानुपपत्तेः । तत्रत्य नन्वत्र परशब्द इत्यादि परिमलीयशङ्काग्रन्थानुसारेण दूषणान्तरमाह **यद्यप्यत्रेति** । **न परशब्देन कारणत्वसिद्धिरितीति** । अत एव परिमलकृताप्रधानस्य श्रैष्ठ्यं भवत्कारणत्वेनैव भवेदिति पर्यवसितार्थकथनमेतत् । न तु परशब्दाभिधेयकथनमिति न दोष इति परशब्दस्य तत्कारणत्वपरत्वाभावमाश्रित्यैव परिहारः कृतः । कारणत्वप्रतिपादकाभावादिति दूषणोद्धारस्य च कारणत्वं सिद्धवत्कृत्य तेन रूपेण परत्वाभिप्रायमात्रोक्त्या असम्भवात् इत्याशयः । यदपि भामतीकृता पूर्ववादिनोक्तपरशब्दस्य कारणार्थत्वस्य निराकरणाय परशब्दः श्रेष्ठवचन इति प्रतिपादितम् । तदुपपादनं च कल्पतरुकृता कृतं मन आदावर्थादिकारणत्वासम्भवादस्मिन्प्रकारेण परशब्दः श्रैष्ठ्यवचन इत्यर्थ इति तदुभयमपि परस्य पूर्वपक्षप्रवृत्तिः न सम्भवतीति महत इति वाक्ये कारणत्वस्य परीत्याप्यश्रवणादिति मूलकृतैव दूषितमिति ज्ञेयम् । तन्तुरूपपटयोरित्यर्थ इति तन्तुरूपपटादिकयोरित्यर्थः । **भामत्युक्तमिति** । महतः परमित्यत्र परशब्देन





कारणत्वप्राप्तिमभिधाय अजामेकामित्यादीनामिति तेनोक्तमित्यर्थः । **श्वेताश्वतरेति** । अनेन बह्वीं प्रजां जनयन्तीं सरूपामिति काठकगतवाक्योपादानमन्यथाख्यातौ टीकान्तरे चासदिति सूचितम् । अन्यथाख्यातेर्विनोदे दूषणात् प्रधाने ब्रह्मणस्यातिव्याप्तिपरिहारेऽपि अविद्यादौ तदपरिहारश्चेति चन्द्रिकानुसारेणाभिप्रायान्तरमाशङ्क्य तन्निरासकतयोत्तरवाक्यमवतारयति **ननु च नानेनेति** । अत एव कल्पतरौ सिद्धे गतिसामान्ये महतः पर इति वाक्यार्थनिर्णयात् तदनिर्णये च गतिसामान्यासिद्धेरुक्तपूर्वपक्षानवकाश इत्याशङ्क्य क्वचिदन्यार्थतादर्शनेन प्रतिवेदान्तं ब्रह्मकारणतागतिसिद्धावपि न प्रतिवाक्यं तत्सिद्धिः । प्रधानाद्यैव सर्ववेदान्तार्थ इति प्राक् प्रत्यवस्थाने परिहारेण ब्रह्मागतिरेव सर्ववेदान्तेष्वित्येव प्राक्प्रतिपादनस्यावश्यकत्वात् इह पुनः सर्ववेदान्तेषु ब्रह्मावगति-मुपेत्यापि क्वचिद्वाक्यस्य कारणत्वेन प्रधानादावपि समन्वयोऽस्तु । कल्पभेदेन व्यवस्थोपपत्त्या अनेककारण-कल्पवैय्यर्थ्याभावादित्याक्षिप्यते । सूत्रकारोऽप्यपिशब्दमेकशब्दं प्रयुञ्जानो ब्रह्माङ्गीकारेण पूर्वपक्षः क्वाचित्कश्चायं विचार इति सूचयांबभूवेत्यन्तग्रन्थेनातिव्याप्तिपरिहारपरतयैव पादप्रवृत्तिरुपवर्णितेति भावः । न शब्देत्यनु-व्याख्यानस्य योजनान्तरे यथाश्रुतस्य प्रवृत्त्यनङ्गीकारात् यथाश्रुतस्य तस्यैतद्योजनायामेव व्यापार इत्याशयेन द्वितीये त्विदमुपतिष्ठत इत्युक्तं मूल इति ज्ञेयम् । **अव्यक्तादीति** । प्रधानस्याव्यक्तादिशब्दार्थत्व इति सम्बन्धः । एवमव्यक्तादीत्युत्तरत्र प्राधान्यस्याव्यक्तादीति सम्बन्धः ।

**स०व्र०— परापरभावदर्शनादिति** । अत्र कालविप्रकर्षसन्निकर्षरूपपरापरत्वदर्शनादित्यर्थः । **अजा-मेकामित्यादाविति** । 'बह्वीः प्रजा जनयन्तीं सरूपामित्युक्तेरि'ति भावः । **उरणः** अविशावः ।

**विट्ठल०— कश्चित्** वाचस्पतिः । **कालविप्रकृष्टत्वं** पूर्वकालवृत्तित्वम् । **कार्यकारणभावविधुरयोरिति** । तत्र कुलालकेशघटयोरपि पूर्वापरभावदर्शनादित्यर्थः । तथा चाद्येऽतिव्याप्तिः द्वितीये व्यभिचार इति भावः । नन्वानुमानिकाधिकरणेषु कारणत्वाश्रवणेऽपि परीत्या चमसवदित्यादि सूत्रत्रयात्मकाधिकरणविषयवाक्ये अजा-मेकामित्यादौ बह्वीं प्रजां जनयन्तीमिति प्रधानस्य कारणत्वं प्रतीयत इति परः शङ्कते **अजामिति** । **तत्किमिति** । तदजामिति वाक्यं ब्रह्मपरं करिष्यते किं न करिष्यत एवेत्यर्थः । तर्हि किं परतया व्याख्यातं तद्वाक्यमित्यत आह **तेजोऽबन्नेति** । नन्वस्त्वेवं यथाकथंचिदस्मत्समीहितस्य प्रधानं न जगत्कारणवाचिशब्दवाच्यमित्यर्थस्य लाभा-दित्यत आह **तथा चेति** । **आभाणकं** गाथा । **उरणो** अविशावः । अयं भावः । द्वितीयसूत्रोक्तस्य ब्रह्मणो जगत्कारणत्वस्य स्थापनाय समन्वयसूत्रे जगत्कारणवाचिशब्दसमन्वयः प्रतिज्ञातः इति खलु त्वयोच्यते तत्राजामेकामित्यादौ जगत्कारणत्वे प्रधानस्य प्रतीततद्वाक्यं प्रधानपरतया व्याख्यातव्यम् । अन्यथा ब्रह्मणो जगत्कारणत्वासिद्धेः । न च तथा व्याख्यातं भवता । किन्तु तेजोऽबन्नोपादानसूक्ष्मविषयं व्याख्यातम् । तथा च सति तेजःप्रभृतिसूक्ष्मस्यैव जगत्कारणत्वं सिद्ध्यति । ब्रह्मणो जगत्कारणत्वं तु गतमेव । तथा च भवदभि-मतब्रह्मकारणत्वस्यालाभसाम्येनाजामिति वाक्यस्य प्रधानपरत्वे का हानिः तेजोबन्नपरत्वे को लाभ इति प्रकृतानुपयोगादित्युक्तं व्यनक्ति **शाब्दत्व इति** । **न चेति** । प्रधानस्वरूपमात्रेण जगत्कारणत्वरूपब्रह्मलक्षणस्य न काचित्क्षतिः । प्रधानस्य कारणत्वासिद्धेरिति भावः ।





**चषकः— परापरभावदर्शनादिति** । कालविप्रकृष्टत्वसन्निकृष्टत्वरूपपरापरत्वदर्शनादित्यर्थः । **उरणः** मेषः ।

**॥ इति 'प्रधानस्य जगत्कारणादिशब्दवाच्यत्वं निषिद्ध्यते शब्दवाच्यतैव वा' इति विकल्प्योभयनिरासः ॥**

* * *

**॥ तत्र अस्य परोक्तविषयस्य ईक्षत्यधिकरणानन्तरं व्यवधानेनात्र निरूपणे कारणाभावः ॥**
**॥ तथा अस्य परोक्तविषयस्य एतत्पादीयसकलसूत्रप्रतिपाद्यत्वाभावादपि पादार्थत्वाभावः ॥**

**४७ सु०— किञ्च प्रधानस्य शब्दवाच्यता ईक्षत्यधिकरणानन्तरमेव निषेध्या, त्रिपादीं अतिक्रम्य अत्र निषिद्ध्यत इति (न युज्यते), व्यवधान(ने) कारणानिरूपणादिति ।**

**किञ्च पादप्रतिपाद्योऽर्थस्तथाविधो भवति, यस्तत्पादस्थसकलसूत्रप्रतिपाद्यः । न च अत्र पादे सर्वेषु (अपि) सूत्रेषु प्रधानस्य शब्दवाच्यतैव निषिद्ध्यत इति नियमोऽस्ति, येनायमेतत्पादार्थः स्यात्, कारणत्वेनेत्यादौ तदभावात् । तत्रापि परम्परया तदेव साध्यमिति चेत्, तर्हि पारम्पर्यस्यातीतपादार्थेऽपि सुवचत्वात् अत्रैव प्रधानस्य शब्दवाच्यता निषिद्ध्यत इति नास्ति, स हि पादार्थो यो नान्यत्र प्रतिपाद्यत इति ।**

**परि०—** मूलस्यार्थान्तरमाह **किञ्च प्रधानस्येति** । अन्यमर्थमाह **किञ्च पादेति** । **कारणत्वेनेत्यादाविति** । आनुमानिकाद्यधिकरणत्रये प्रधानाशब्दत्वोक्तावपि कारणत्वेनेत्यादिसूत्रद्वयात्मकेऽधिकरणे आत्मन आकाशस्सम्भूतस्तत्तेजोसृजतेत्यादिश्रुतीनामविरोधस्य, जगद्वाचित्वादित्यादिसूत्रत्रयात्मके चाधिकरणे यस्य चैतत्कर्म स वेदितव्य इति कौषीतकिब्राह्मणैर्वेदितव्यत्वेनोक्तवस्तुनो जीवत्वनिरासेन ब्रह्मत्वस्य, वाक्यान्वयादित्यादिसूत्रचतुष्टयात्मकेऽधिकरणे 'आत्मा वा अरे द्रष्टव्य' इति वाक्यस्थात्मशब्दस्य जीवत्वनिरासेन ब्रह्मत्वस्य, प्रकृतिनये ब्रह्मण उपादानत्वस्य, अन्त्यनये परमाण्वादिकारणत्ववादनिरासस्य, व्युत्पादितत्वादिति भावः । ननु मुख्यतः श्रुत्यविरोधाद्युक्त्या ब्रह्मण एव कारणत्वादिना तत्तद्वाक्येषु प्रतिपाद्यत्वोक्त्या प्रधानं न तत्र प्रतिपाद्यमित्यर्थात्सिद्ध्यति । अतो न प्रधानाशाब्दत्वस्य पादार्थत्वभङ्ग इति शङ्कते **तत्रापीति** । अतीतपादार्थेऽपि त्रिपाद्यामपि तत्तद्वाक्यप्रतिपाद्यं ब्रह्मेत्युक्ते तद्द्वारा प्रधानं तत्र तत्र वाक्ये प्रतिपाद्यं नेति लाभादिति भावः । तावतैतत्पादार्थः कुतो नेत्यत आह **स हीति** ।





**यादु०— कारणत्वेनेत्यादाविति** । तत्र हि वेदान्तेषु क्वचिदाकाशादिका सृष्टिरुच्यते 'आत्मन आकाशः सम्भूत' इति । क्वचित्तेजआदिका 'तत्तेजोऽसृजते'ति । तथा च वेदान्तानां विरोध इति प्राप्ते, कार्येष्वाकाशादिष्वेव सृष्टिक्रमादिद्वारकं विगानं, कारणत्वे तु न विगानम् । कुतः यथाव्यपदिष्टोक्तेः । यथा ह्येकस्मिन्वेदान्ते चेतनः कारणत्वेन व्यपदिष्टः 'सोऽकामयत बहु स्याम्' इति । तथैव 'तदैक्षत तत्तेजोऽसृजते'त्यादावप्युक्तः । एवं च सूत्रे कारणत्वेनेत्येतद्विच्छिद्य सप्तम्यन्तत्वेन, अविच्छिद्य तृतीयान्तत्वेन च व्याख्येयमिति, त्वया भाषितत्वादिति भावः । आदिशब्देन 'समाकर्षात्', 'जगद्वाचित्वात्', 'एतेन सर्वे व्याख्याता व्याख्याता' इत्येतेषां ग्रहणम् । तत्राप्यसत्कारणत्वजीवकारणत्वपरमाण्वादिकारणत्ववादिनामेव निरासेन तदभावात् । **तत्रापि परम्परयेति** । अत्र हि सृष्टिप्रतिपादकवाक्यानां परस्परविरोधेन समन्वयासिद्धौ ब्रह्मणो जगत्कारणत्वस्यासिद्धिः तदसिद्धौ च न तत्र गतिसामान्यमपेक्षितम् । यदर्थमत्र प्रधानाशाब्दत्वं प्रतिपादनीयं स्यादित्याशयेनाक्षेपे, सृष्टिवाक्यानां परस्परमविरोधसमर्थनात् समन्वयसिद्धौ ब्रह्मणो जगत्कारणत्वस्यापि सिद्धिः तत्सिद्धये च तत्र गतिसामान्यमप्यावश्यकं, तदर्थं च प्रधानाशाब्दत्वमपीति समाधानस्याभिप्रेतत्वादिति भावः । उक्तं हि भामत्याम् 'इह तु वाक्यानां परस्परविरोधाद्ब्रह्मणि जगद्योनौ न समन्वयः सेद्धुमर्हति । तथा च न जगत्कारणत्वं ब्रह्मणो लक्षणम् । न च तत्र गतिसामान्यम् । न च तत्सिद्धये प्रधानस्याशाब्दत्वप्रतिपादनमि'ति । **तर्हि पारम्पर्यस्येति** । एवं परम्परया प्रधानाशाब्दत्वसाधकत्वस्येत्यर्थः । **अतीतपादेति** । समन्वयरूपेऽतीतपादत्रयार्थेऽपीत्यर्थः । तत्रापि आकाशादिशब्दसमन्वयसिद्ध्या गतिसामान्यसिद्धौ तदुपपादकप्रधानाशाब्दत्वसिद्धिमिति सुवचत्वादित्यर्थः ।

**वं०प०— तदभावादिति** । प्रधानस्य शब्दवाच्यतानिषेधाभावादित्यर्थः । **परम्परयेति** । 'कारणत्वेने'त्यत्र 'आत्मन आकाशः सम्भूतः', 'तत्तेजोऽसृजते'त्यादिसृष्टिवाक्यानां परस्परमविरोधसमर्थनेन ब्रह्मणो जगत्कारणत्वं सिद्ध्यति । 'समाकर्षादि'त्यादौ च असत्कारणतादिवादिनिराकरणेन ब्रह्मणो जगत्कारणत्वं सिद्ध्यति । तथा च अर्थात्प्रधानस्य न तत्र प्रतिपाद्यत्वं प्राप्तम् । एवं च परम्परया प्रधानाशाब्दत्वमेव तत्र साध्यमित्यर्थः । **अतीतेति** । यदा पूर्वपादत्रये स्पष्टलिङ्गसमन्वयो ब्रह्मणि कथितः तदा अर्थात्प्रधानं न लब्धमेवेत्यर्थः ।

**आनन्दः— परम्परयेति** । कारणवाचिशब्दानां ब्रह्मपरत्वे हि तदुपादानत्वेन प्रधानस्य यच्छाब्दत्वं तत्फलितं भवतीत्यर्थः । **पारम्पर्यस्येति** । पूर्वत्रापि आकाश इति होवाचेत्यादावाकाशादिशब्दानां ब्रह्मपरत्वे हि तदुपादानत्वेन परम्परया प्रधानस्य तच्छब्दस्य वाच्यताभावः सिद्ध्यतीत्यर्थः ।

**शे०वा०**— ननु मन्मते 'तत्तु समन्वयादि'त्यत्र ब्रह्मणि सर्वशब्दसमन्वयस्य अप्रतिज्ञाततया तादर्थ्येन प्रधानादेः अव्यक्तादिशब्दार्थत्वनिराकरणस्य अनुपयोगेऽपि 'ईक्षतेर्नाशब्दमि'त्यत्र प्रतिज्ञातस्य प्रधानाशब्दत्वस्य तस्याव्यक्तादिशब्दार्थत्वेऽनुपपत्तिप्रसङ्गात् तादर्थ्येन तन्निरासस्य मन्मतेऽप्युपयोगोऽस्त्येवेत्यतो निष्फलतया प्रधानाशाब्दत्वस्य तत्राप्यप्रतिज्ञातव्यतया तन्निरासवैफल्यमेवेत्याशयेन तत्र प्रतिज्ञाताशब्दत्वोपपादकत्वे तदानन्तर्यमेव स्यादित्याह **किञ्चेति** । ननु तत्तु समन्वयादिति प्रतिज्ञातकारणवाक्यसमन्वयजिज्ञासया प्रतिबन्धान्न





तदानन्तर्यं; तस्यां च त्रिपाद्यां पूर्णायामवसरलक्षणसङ्गत्या अत्र अशब्दत्वोपपादनोपपत्तेरस्ति व्यवधानकारणमित्यत आह **किञ्चेति** । यद्यपि सिद्धान्त इव परमतेऽपि प्रायिकत्वेन पादव्यवस्थोपपादयितुं शक्या तथापि सिद्धे पादार्थत्वे तदनुसरणम् । प्रकृते तु तदेवासिद्धमिति न प्रायिकत्वानुसरणमिति भावेनैतदुक्तमिति ध्येयम् । **कारणत्वेनेत्यादाविति** । 'कारणत्वेन चाकाशादिषु' इत्यत्र 'आत्मन आकाशः सम्भूतः' इति वेदान्तेषु क्वचिदाकाशादिका सृष्टिरुच्यते क्वचिच्च 'तत्तेजोऽसृजत' इति तेजआदिका ततो विरोध इति सृष्टिवाक्यविगानस्य, 'जगद्वाचित्वात्' इत्यत्र यस्य चैतत्कर्म स वेदितव्यः' इत्यादिवाक्यानां जीवादिपरत्वस्य, 'वाक्यान्वयात्' इत्यत्र 'आत्मा वा अरे द्रष्टव्यः' इत्यादिवाक्यानां जीवपरत्वस्य, 'प्रकृतिश्च' इत्यत्र निमित्तोपादानभेदस्य, 'एतेन' इत्यत्र परमाण्वादिकारणत्ववादस्य च निरस्तत्वेन प्रधानाशाब्दत्वप्रतिपादकत्वाभावादित्यर्थः । **तत्रापीति** । असद्वेत्यादिकारणवाक्यानां ब्रह्मपरत्वे व्युत्पादिते प्रधानस्य तत्प्रतिपाद्यत्वाभावसिद्ध्या तस्याशाब्दत्वसिद्धिरिति भावः । तथा सति 'आकाशस्तल्लिङ्गात्' इत्यादावपि आकाशादिप्रतिपादकवाक्यानां ब्रह्मपरत्वे व्युत्पादिते प्रधानस्य तत्प्रतिपाद्यत्वाभावसिद्ध्या तदशाब्दत्वस्यातीतपादत्रयार्थत्वं स्यात् । किञ्च तत्तद्वाक्यस्य ब्रह्मपरत्वव्युत्पादनेन प्रधानस्येवाकाशादीनामपि तदप्रतिपाद्यत्वसिद्धेरविशिष्टत्वेन प्रधानाशब्दत्वस्येवाकाशाद्यशब्दत्वस्यापि पादार्थत्वप्रसङ्ग इत्याशयेन समाधत्ते **तर्हीति** ।

ननु क्वाचित्कप्रधानवादप्रतिपादनछायापन्नवाक्यगतिनिरूपणमेव न पादार्थः किन्तु ब्रह्मवादविरोधिवादमूलछायापन्नक्वचित्कचिदाम्नातं यावद्वाक्यमस्ति तस्य सर्वस्य गतिनिरूपणमेव पादार्थः । अत एवोत्तरत्रापि जीववादमूलछायापन्नवाक्यगतिनिरूपणमप्युपपन्नम् । तदेतदभिप्रेत्योक्तं कल्पतरौ क्वाचित्कस्य असच्छब्दस्य कर्मकर्तृप्रयोगस्य वा असद्वादपरत्वं च व्युदस्य गतिसामान्यव्यवस्थापनात् पादसङ्गतिरिति । तत्कथं कारणत्वेनेत्यादौ पादार्थाप्रतिपादकत्वेन पादासङ्गत्युक्तिरिति चेन्नैवम् । अत्र हि न पूर्वाधिकरणत्रय इव क्वाचित्कवाक्यगतिनिरूपणं क्रियते किन्तु सर्ववेदान्तव्यापिब्रह्मप्रमाणत्वाभावप्रसक्तौ तत्समाधानम् । इदं च समन्वयाधिकरणसन्निधौ सङ्गतं न तु अत्र ।

किञ्च जगद्वाचित्वादित्याद्यधिकरणमपि विवक्षितरीत्या अत्र सङ्गमयितुमयुक्तम् । 'प्रधानसमर्पणाभासवाक्यगतिनिरूपणार्थं परः सन्दर्भः प्रवर्तते' इत्यादिना प्रधानाशाब्दत्वप्रतिपादनार्थमेवैतत्पादप्रवृत्तेः भाष्यकृदुपवर्णितत्वेन तद्विरुद्धत्वात् ।

**वा०र०— तस्येति** । प्रधानस्य समासे गुणभूतत्वेन प्रकृतत्वेऽपि बुद्ध्या विविच्य प्रधानपरामर्श इति ज्ञेयम् । **तादार्थ्येन तदिति** । प्रधानाशाब्दत्वार्थमित्यर्थः । **तदिति** । अव्यक्तादिशब्दार्थत्वपरामर्शः निष्कलत्वाभ्यामिति चन्द्रिकानुसारात् इत्याशयेनेति अनेन सार्थक्यमङ्गीकृत्य ईक्षत्यधिकरणानन्तर्यमापाद्यत इति तथेति उपलक्षणमेतत् । अशक्यत्वं चेत्यपि ज्ञेयम् । निष्फलत्वाशक्यभ्रान्तिः परिहृता । उक्ताशयस्य स्पष्टतया चन्द्रिकोक्तरीत्या ज्ञेयत्वं मनसि निधाय आशयेनेत्येवोक्तमिति ज्ञेयम् । क्रमादिवैचित्र्यात् क्वचिदात्मन आकाश





इत्यादि तत्तत्सूत्रीयभाष्यानुसारेणाह **कारणत्वे चाकाशादिष्वित्यत्रेत्यादिना । तेज आदिकेति** । उपलक्षणमेतत् । तद्भाष्योक्तरीत्या 'स प्राणमसृजते'त्यादि प्राणादिपूर्विका असद्वेत्यादि असत्पूर्विका च सृष्टिः श्रूयत इत्याद्यपि ज्ञेयम् । वक्ष्यति असद्वेत्यादिकारणवाक्यानां ब्रह्मपरत्व इति । **असद्वेत्यादीति** । आदिपदेन वाक्यशेषस्यैव प्रागुक्ताकाशादिवाक्यानामपि सङ्ग्रहः । **आकाशादिप्रतिपादकवाक्यानामिति** । आकाश इति होवाच सर्वाणि ह वा इमानीत्यादिवाक्यानामित्यर्थः । उदाहरिष्यमाणक्वाचित्कस्येति कल्पतरुपरिमले क्वाचित्कप्रधानवादेत्यादि भाववर्णनं कृतम् । तदाशङ्कते **ननु क्वाचित्केति** । अथवैतदारभ्य त्रीण्यधिकरणानि पादान्तरसङ्गतान्यप्यवान्तरसङ्गतिलोभादिह लिखितानीत्येतत्कल्पतरूत्थापनाय ननु पूर्वाधिकरणत्रय इवेत्यादिना स्वरस उक्तः तत्प्रकारेणोक्ताशयं खण्डयति **मैवमत्र हीत्यादिना । प्रधानसमर्पणेति** । इदं त्विदानीमवशिष्टमाशङ्क्यते यदुक्तं प्रधानस्याशब्दत्वं तदसिद्धं कासुचिच्छाखासु प्रधानसमर्पणाभासानां शब्दानां श्रूयमाणत्वादित्यादेरतस्तेषां अन्यपरत्वं दर्शयितुं परः सन्दर्भः प्रवर्तत इत्यन्तभाष्यस्य सङ्ग्रह्यानुवादोऽयमिति ज्ञेयम् । **स्थानं प्रमाणमिति** । अत्र स्थानं नाम पाठसादेश्यरूपं मीमांसकाभिप्रेतं प्रमाणं क्रमलक्षणे निरूपितं बोध्यं न तु श्रुतिलिङ्गाद्यन्तर्गतमिति न दोषः ।

**स०व्र०— कारणत्वेनेत्यादाविति** । तत्र हि वेदान्तेषु क्वचिदाकाशादिका सृष्टिरुच्यते 'आत्मन आकाशः सम्भूतः' इति, क्वचित्तेजआदिका 'तत्तेजोऽसृजत' इति । तथा च वेदान्तानां विरोध इति प्राप्ते कार्येष्वाकाशादिष्वेव सृष्टिक्रमादिद्वारकं विगानम् । कारणत्वे तु न विगानम् । कुतः यथा व्यपदिष्टत्वोक्तेः । यथा ह्येकस्मिन् वेदान्ते चेतनः कारणत्वेन व्यपदिष्टः 'सोऽकामयत बहु स्याम्' इति । तथैव 'तदैक्षत तत्तेजोऽसृजत' इत्यादावप्युक्तः । एवं च सूत्रे कारणत्वेनेत्येतद्विच्छिद्य सप्तम्यन्तत्वेन, अविच्छिद्य तृतीयान्तत्वेन व्याख्येयमिति त्वया भाषितत्वादिति भावः । **तत्रापि परम्परयेति** । सर्वत्रापि वेदान्तेषु ब्रह्मण एव प्रतिपाद्यत्वाभिधाने प्रधानस्य तदप्रतिपाद्यत्वम् अर्थात्सिद्ध्यतीति भावः । **स हीति** । आकाशस्तल्लिङ्गादित्यादावपि आकाशप्रतिपादकवाक्यस्य ब्रह्मपरत्वे व्युत्पादिते प्रधानस्य ब्रह्मपरत्वव्युत्पादनेन प्रधानस्याशाब्दत्वसिद्धौ आकाशादेरपि तत्प्रतिपाद्यत्वाभावसिद्ध्या अशाब्दत्वापत्त्या प्रधानस्यैव तदनुपपत्तिरिति भावः ।

**विट्ठल०— कारणत्वेनेत्यादाविति** । अत्र हि वेदान्तेषु क्वचिदाकाशादिका सृष्टिरुच्यते । आत्मनः आकाशस्सम्भूतः इति क्वचित्तेज आदिका तत्तेजोऽसृजतेति । तथा च वेदान्तानां विरोध इति प्राप्ते कार्येष्वाकाशादिष्वेव सृष्टिक्रमादिद्वारकं विगानं न तु कारणत्वेति गानं कुतः यथा व्यपदिष्टोक्तेः यथा ह्येकस्मिन्वेदान्ते चेतनः कारणत्वेन व्यपदिष्टः सोऽकामयत बहु स्यामिति तथैव तदैक्षत तत्तेजोऽसृजतेत्यादि वेदान्तरेऽपि स एवोक्तः । अतो न ब्रह्मणो जगत्कारणत्वे कोऽपि विरोध इति सिद्धान्त इति परैरुक्तत्वेन तत्र प्रधानशब्दवाच्यतानिषेधाभावादित्यर्थः । आदिशब्देन समाकर्षादित्याद्यधिकरणसङ्ग्रहः । तत्रासत्कारणत्वादिवादिनामेव निरासेन तदभावात् तत्प्रकारं चोत्तरत्र दर्शयिष्यामः । **परम्परयेति** । कारणत्वमेवेत्यादि सर्वत्र ब्रह्मण एव





कारणत्वे साधिते अर्थान्न प्रधानं जगत्कारणवाचिशब्दप्रतिपाद्यमित्यस्य लाभादिति भावः । **अतीतपादार्थेऽपीति** । अतीतपादत्रयेऽपि आनन्दमयादितत्तच्छब्दप्रतिपाद्यब्रह्मेत्युक्तेन प्रधानं तत्तच्छब्दवाच्यमित्यस्यार्थता-लाभादिति भावः । नन्वस्त्वतीतपदार्थत्वमपि प्रधानाशब्दत्वस्य तावता एतत्पादार्थत्वादिति भावः । कुत इत्यत आह **स हीति** ।

**चषकः— कारणत्वेनेत्यादाविति** । कारणत्वेनेत्यत्र आकाशादितेजआदिसृष्टिवाक्ययोर्विगानस्य, जगद्वाचित्वादित्यत्र 'यस्य चैतत् कर्म स वेदितव्य' इत्यादिवाक्यानां जीवादितात्पर्यकत्वस्य, वाक्यान्वयादित्यत्र 'आत्मा वाऽरे द्रष्टव्य' इत्यादिवाक्यानां जीवपरत्वस्य, 'प्रकृतिश्चे'त्यत्र निमित्तोपादानभेदस्य, 'एतेने'त्यत्र परमाण्वादिकारणत्वस्य, निरस्तत्वेन प्रधानाशाब्दत्वप्रतिपादकत्वाभावादित्यर्थः । **तत्रापीति** । असद्वेत्यादि-वाक्यानां ब्रह्मतात्पर्यकत्वे व्युत्पादिते प्रधानस्य तदप्रतिपाद्यत्वसिद्ध्या तदशाब्दत्वसिद्धिरिति भावः । तुल्यदिशा आकाशादिवाक्यानामपि ब्रह्मतात्पर्यकत्वे व्युत्पादिते प्रधानस्य तदप्रतिपाद्यत्वसिद्ध्या तदशाब्दत्वस्यातीत-पादत्रिकार्थत्वं प्रसज्येतेत्याशयेन समाधत्ते **तर्हीति** ।

**॥ इति अस्य परोक्तविषयस्य ईक्षत्यधिकरणानन्तरं व्यवधानेनात्र निरूपणे कारणाभावः ॥**
**॥ इति अस्य परोक्तविषयस्य एतत्पादीयसकलसूत्रप्रतिपाद्यत्वाभावादपि पादार्थत्वाभावः ॥**
**॥ इति सामान्यतः पादार्थनिराकरणम् ॥**

* * *

**॥ अथ एतत्पादीयपरोक्तव्याख्याननिरासे विशेषतः पादार्थनिराकरणम् ॥**
**॥ तत्रादौ प्रथम-द्वितीय-अधिकरणव्याख्यानिराकरणम् ॥**
**॥ तत्राप्यादौ प्रथमाधिकरणव्याख्यानिराकरणम् ॥**

४८ **सु०—** एवं सामान्यतः पादार्थं निराकृत्येदानीं प्रथमाधिकरणव्याख्यां निराकरोति **न शब्दवाच्यतैवेति ।** आनुमानिकमित्यादिसूत्रं यत्परेण व्याख्यातम्, ''आनुमानिकमप्यनु-माननिरूपितं प्रधानमप्येकेषां शाखिनां शब्दवदुपलभ्यते । काठके हि पठ्यते, 'महतः परम-व्यक्तमव्यक्तात्पुरुषः परः' इति । तत्र 'य एव, यन्नामानो, यत्क्रमका(मा)श्च, महदव्यक्तपुरुषाः स्मृति(प्र)सिद्धास्त एवेह प्रत्यभिज्ञायन्ते । तत्राव्यक्तमिति रूढियोगाभ्यां प्रधानमुच्यते । एवं तस्य शब्दवत्वादशब्दत्वमनुपपन्नमि'ति चेत्, नैतदेवम्, न ह्येतत्काठकवाक्यं प्रधानपरमि''ति ।

अत्र पृच्छामः । किमत्र काठकगताव्यक्तशब्दवाच्यतैव प्रधानस्य निषिद्ध्यते किंवा कुत्रापि केनापि शब्देन नोच्यत इति ।





आद्यस्योत्तरम्, अत्र काठके (वाक्ये) अव्यक्तशब्दवाच्यतैव प्रधानस्य निषिद्ध्यत इति नोपपन्नम्, तन्मात्रेणाशब्दत्वासिद्धेः ।

द्वितीयेऽपि किं परममुख्यया वृत्त्या उत शब्दवाच्यतैव निषिद्ध्यते । आद्ये, तन्मात्रमनुमतमेव । सर्वथा शब्दवाच्यतैवात्र प्रधानस्य निषिद्ध्यत इति द्वितीयस्तु नोपपद्यते । कुत इत्यत आह **सर्वेति** ।

## अनु०— सर्ववेदेतिहासेषु पुराणेषु च सङ्ग्रहात् ॥

**सङ्ग्रहात्** प्रधानस्येति शेषः । वेदे तावदाथर्वणिकाः पठन्ति 'विकारजननीमज्ञामष्टरूपामजां ध्रुवाम् । ध्यायतेऽध्यासिता तेन तन्यते प्रेर्यते पुनः' इत्यादि । इतिहासपुराणे तूदाहरिष्यमाणे द्रष्टव्ये ।

ननूक्तमत्र 'न ह्यत्र स्मृतिप्रसिद्धं कारणं त्रिगुणं प्रधानमुच्यते, तेन यद्यदुदाह्रियते तत्तद्विप्रतिपन्नमेव' इत्यतः त्रिगुणत्वादिलक्षणोपेतप्रधानप्रतिपादकं इतिहासवाक्यं पठति **सत्त्वमिति** ।

**'सत्त्वं रजस्तम इति गुणाः प्रकृतिसम्भवाः ।**
**निबध्नन्ति महाबाहो देहे देहिनमव्ययम् ॥'**
**इत्यादिवाक्यरूपेण**

आदिपदेन 'भूमिरापोऽनलो वायुः' इत्यादेर्ग्रहणम् । **इत्यादिवाक्य**प्रतिपाद्येन त्रिगुणत्वादिना **रूपेण**ोपेतस्य प्रधानस्य सङ्ग्रहादिति सम्बन्धः ।

**परि०— स्मृतिप्रसिद्धा इति** । साङ्ख्यस्मृतिसिद्धा इत्यर्थः । प्रधानपरमितीतिशब्दस्य इति व्याख्यातमिति पूर्वेणान्वयः । **आथर्वणिका इति** । द्वात्रिंशदुपनिषन्मध्यगताथर्वणोपनिषदध्यापकाः अत्राथर्वणिकपदेन गृह्यन्ते । तेन भाष्यकृद्व्याख्यातदशोपनिषद्गताथर्वणे अस्य वाक्यस्याभावेऽपि न दोषः । **भूमिराप इति** । 'भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च । अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा' इति सप्तमस्थगीतावाक्यग्रहणमित्यर्थः ।





**यादु०— स्मृतिप्रसिद्धा इति** । साङ्ख्यस्मृतिप्रसिद्धा इत्यर्थः । **रूढियोगाभ्यामिति** । साङ्ख्य-स्मृतिप्रसिद्ध्या रूढिः, न व्यक्तमव्यक्तमिति व्युत्पत्तिसम्भवाद्योगोऽपीत्यर्थः । **अत्र काठक इति** । अस्मिन्पक्षे अत्रैवेत्येवकारसम्बन्धोऽभिप्रेत इति ज्ञातव्यम् । **उदाहरिष्यमाण इति** । अनुपदमेवोदाहरिष्यमाणं 'सत्त्वं रज' इतीतिहासवाक्यं 'यत्तत्त्रिगुणमि'त्युदाहरिष्यमाणं पुराणवाक्यमिति ज्ञातव्यम् ।

**वं०प०— शब्दवत्** प्रतिपादकशब्दवत् । शब्दप्रतिपाद्यमित्यर्थः । **योगेति** । न व्यक्तमव्यक्तमिति योगेत्यर्थः । **तन्मात्रेणेति** । अव्यक्तशब्दमात्रवाच्यतानिषेधेनेत्यर्थः । तद्व्यतिरिक्तशब्दान्तरवाच्यताया अपि सम्भवादिति भावः । वृत्त्या वाच्यता निषिद्ध्यत इत्यन्वयः । **वाच्यतैवेति** । सर्वथेत्यर्थः । **तन्मात्रं** परम-मुख्यवृत्त्या अवाच्यत्वम् । **न ह्यत्रेति** । वेदे इत्यर्थः । **उच्यते** किन्तु तेजोऽबन्नान्येवेति शेषः ।

**आनन्दः—** नन्वनुमानकल्पितामेव काठके पठ्यत इति कुतोऽवगम्यत इत्यत आह **य एवेति** । **विकारेति** । तेनेश्वरेणाध्यासिता अधिष्ठिता अजातेनेश्वरेण ध्यायते अनया उपादानभूतया जगत्सर्जनं करिष्यामीति चिन्त्यते । तन्यते कार्याकारेण विस्तार्य तत्प्रेर्यते चेत्यर्थः ।

**श्रीनिधि०— शब्दवत्** शब्दवाच्यम् । **अत्र काठक इति** । अत्रानुमानिकसूत्रे । काठके यो व्यक्तशब्दः तद्वाच्यतेति बुद्ध्या विवेकेनान्वयो द्रष्टव्यः ।

**शे०वा०—** उपलब्धिमेवोदाहरति **काठके हीति** । कथमत्र प्रधानमव्यक्तशब्दमित्यतः तत्र स्थान-मानमाह **तत्रेति** । **स्मृतिप्रसिद्धाः** साङ्ख्यस्मृतिप्रसिद्धाः । अव्यक्तश्रुतिरपि प्रधाने मानमित्याह **तत्रेति** । साङ्ख्यस्मृतिसिद्धस्य प्रधानस्याव्यक्तशब्देनोक्तौ तदीयां रूढिं हेतूकरोति **रूढीति** । साङ्ख्यस्मृतिप्रसिद्धेः न केवलं साङ्ख्यप्रवादरूढिरेव, किं नाम न व्यक्तमव्यक्तमित्यवयवप्रसिद्ध्याऽप्ययमेवार्थोऽवगम्यत इत्याशयेन योगग्रहणम् । रूढियोगाभ्यामव्यक्तशब्दस्य प्रधानवाचित्वे सिद्धे फलितमाह **एवमिति** । स्थानादिभिरुक्तं प्रत्याह **नैतदिति** । **अनुमतमेवेति** । परममुख्यया वृत्त्या कुत्रापि केनापि शब्देन प्रधानस्यावाच्यताया मत्सिद्धान्तत्वादित्यर्थः । आदिपदेन 'सूयते पुरुषार्थं च तेनैवाधिष्ठिता जगदि'त्यादेः सङ्ग्रहः । **उदाहरिष्यमाण इति** । अत्रानुपदमेवोदा-हरिष्यमाणं 'सत्त्वं रजस्तमः' इति वाक्यमितिहासवाक्यमित्युत्तरत्र टीकायामेव स्पष्टम् । यद्वक्ष्यति इतिहासवाक्यं पठतीति । पुराणं तु 'यत्तत्त्रिगुणमव्यक्तम्' इत्युदाहरिष्यमाणं द्रष्टव्यम् । तत्र मूल एव 'भागवते प्राह' इति स्पष्टमभिधानाट्टीकायामितिहासवाक्यं पठतीतिवत् पुराणवाक्यं पठतीति नोक्तम् । तत्राव्यक्तत्वादेव 'इतिहास-वाक्यं पठति' इत्युक्तमिति ध्येयम् ।

**विट्ठल०— शब्दवदुपलभ्यत इति** । शब्दवाच्यमुपलभ्यत इत्यर्थः । **स्मृतिसिद्धा इति** । साङ्ख्य-स्मृतिसिद्धा इत्यर्थः । त एवेत्युपलक्षणम् । तन्नामानः तत्क्रमकाश्चेति द्रष्टव्यम् । **नेत्याद्यस्योत्तरमिति** । न शब्द-





**शे०वा०**— रामानुजमतं दूषयितुमनुवदति **कश्चिदिति । ज्योतिर्ब्रह्मेति ।** 'तद्देवा ज्योतिषां ज्योतिरथ यदतः परो दिवो ज्योतिर्दीप्यते' इत्यादिश्रुतेरिति भावः । सौत्रस्तुशब्दोऽवधारणार्थ इति भावेन तत्कारणैवेत्येव-कारप्रयोगः । तद्व्यावर्त्य प्रदर्शनम् **नेति ।** यद्यप्यत्रापि ज्योतिरुपक्रमेत्यपपाठाश्रयणमजादिपदाध्याहारश्च दोषो वक्तुं शक्यते । तथापि 'तदेवोक्तमुपक्रमादि'त्यादिना आद्यस्य पूर्वमेव सूचितत्वात् द्वितीयस्य स्पष्टतया शिष्यैरेव ज्ञातुं शक्यत्वात् तदनुद्भाव्य दोषान्तरमेवाह **तस्येति । प्रथमसूत्रं** चमसवदविशेषादिति सूत्रम् । कथं वैयर्थ्य-मित्यतोऽजामित्यस्याः प्रकृतेरकार्यत्वश्रवणात् बह्वीः प्रजाः सृजमानां सरूपा इति स्वातन्त्र्येण सरूपाणां बह्वीनां प्रजानां स्रष्ट्रीत्वश्रवणात् कपिलतन्त्रसिद्धप्रकृतिपरत्वमेव अजामेकामित्यादेरिति पूर्वपक्षस्येयमजा ज्योतिरुपक्रमा ब्रह्मकारणिका तैत्तिरीयशाखायामणोरणीयानित्यादिना ब्रह्मोक्त्वा सप्त प्राणाः प्रभवन्ति तस्मादित्यादिना ततः सृष्टिं चोक्त्वा अजामेकामिति मन्त्रे ब्रह्मकार्यया अजाया अधीयमानत्वादिति वदता ज्योतिरुपक्रमेत्यनेनैव ब्रह्मकार्यत्वेन ब्रह्माधीनतया ब्रह्मात्मकत्वस्य सिद्धत्वान्न पूर्वसूत्रेण कृत्यमित्याह **अनेनैवेति ।**

ननूक्तरीत्या ब्रह्मात्मकत्वसिद्धिवत् पूर्वपक्ष्युक्तरीत्या कपिलतन्त्रसिद्धप्रकृतिपरत्वमपि किं न स्यादित्यतः चमसशब्दवन्न जायत इत्यजेति यौगिकतया अजाशब्दस्यार्थप्रकरणादिभिर्विना अर्थविशेषानिश्चायकत्वात् । 'इदं तच्छिर एव ह्यर्वाग्बिलश्चमस ऊर्ध्वबुध्न इत्यादिवाक्यशेषेण शिरसश्चमसत्वनिश्चयसम्भवेऽपीह तन्त्रसिद्धाजाग्रहणे-ऽर्थप्रकरणादीनामभावात् स्रष्टृत्वमात्रश्रवणेऽपि स्वातन्त्र्यस्याश्रवणात् न तन्त्रसिद्धाया अजाया इह ग्रहणमिति प्रतिपादयतश्चमसवदविशेषादिति सूत्रस्य कथं वैयर्थ्यमित्यतः तर्हि कथञ्चित् तत्सार्थक्येऽप्युक्तवक्ष्यमाणरीत्यैव प्रकृतेर्ज्योतिःकारणत्वसिद्ध्या ब्रह्मात्मकत्वसिद्धेस्तत्प्रतिपादकज्योतिःसूत्रानर्थक्यमेवेत्याशयेन कथमुक्तवक्ष्यमाण-रीत्या तत्सिद्धिरित्याशङ्कां परिहरति **किञ्चेति । साङ्ख्यपरीक्षायामिति ।** रचनानुपपत्तेरित्यादिनेति शेषः । अन्येषां मते पूर्वसूत्रस्याजामन्त्रे साङ्ख्याभिमताजापरत्वाभावोपपादकत्वेन ज्योतिःसूत्रस्य च तन्मन्त्रस्य तेजोऽबन्नपर-त्वोपपादकत्वेन वैयर्थ्यस्योद्भावयितुमशक्यत्वात् तत्पक्षे तदनुद्भावनमित्यवधेयम् । को दोषः सर्वथैवेत्यनेन सूचितं तेजोऽबन्नपरत्वाश्रयणेन अजामन्त्रस्य प्रधानपरत्वानाश्रयणे विशेषहेत्वभावं समर्थयितुं हेतुमाशङ्क्य तस्य पक्षद्वयसाधारण्योपपादनेन अविशेषहेतुत्वमुपपादयितुं तमाशङ्कते **अस्या इति ।** अवधारणेन कारणवाक्यानां ब्रह्ममात्रपरत्वव्युत्पादनादिति भावः । **तदनिस्तारादिति ।** तत्तु समन्वयादित्यवधारणानुपपत्तेरनिस्तारादित्यर्थः । ततश्च न प्रधानपरत्वपरित्यागेन तेजोऽबन्नपरत्वाश्रयणं युक्तमिति भावः ।

**वा०र०**— 'ज्योतिरुपक्रमैवैषा ज्योतिर्ब्रह्म तद्देवा ज्योतिषो ज्योतिरि'त्यादि श्रुतप्रकाशिकास्थं रामानुजीयं व्याख्यानं मनसि निधाय मूलाभिप्रायादिकमाह **तद्देवा इत्यादिना ।** मूले दोषान्तरानुक्तिप्रयुक्ततदभाव-शङ्कानिरासाय अत्र दोषान्तरसत्त्वेऽपि तदनुक्तिर्निमित्तान्तरप्रयुक्तेत्यनुक्तेरन्यथासिद्धिमाह **यद्यप्यत्रापीति ।** श्रुत-प्रकाशिकायां किमस्मिन्मन्त्रे केवला तन्त्रसिद्धा प्रकृतिरभिधीयते उत ब्रह्मात्मिकेति । किं युक्तं केवलेति कुतः अजामित्यस्याः प्रकृतेरकार्यत्वश्रवणादित्यादिना चमसवदिति सूत्रमवतारितं, तदनुसारेण व्यावर्त्यशङ्कामाह **अजामितीति ।** अजामितिपदेनेत्यर्थः । **स्रष्ट्रीत्वश्रवणादिति ।** ननु 'त्वतलोर्गुणवचनस्य', 'पुंवद्भावो वक्तव्य' इति





'तसिलादिष्वा कृत्वसुच' इत्येतत्सूत्रीयवक्तव्यात् त्वयोगे स्रष्ट्रीशब्दस्य पुंवद्भावे पञ्च्या भावः पटुत्वं शुक्लायाः भावः शुक्लत्वमित्यादाविव स्रष्टृत्वमित्येव वक्तव्यं स्रष्ट्रीत्वादिति तु कथमुक्तम् । न च गुणशब्दस्य गुणमात्रवाचकतया कथं क्रियादिवाचिशब्दे तत्प्रसङ्ग इति वाच्यम् । जातिसंज्ञाव्यतिरिक्तधर्ममात्रस्य गुणशब्दार्थतया अभियुक्तैर्व्याख्यानात् । उदाहृतं च पञ्चम्याभावः पञ्चम्यत्वं द्वितीयत्वमिति 'कामिनीमण्डनश्रीर्व्रजति हि सफलत्वं वल्लभालोकनेने'त्याद्या अनेके काव्यप्रयोगाश्चोदाहृताः । तथा च क्रियाया अपि उक्तधर्मतया तद्वाचिशब्देऽपि तत्प्रसङ्गोपपत्तेरिति चेन्मैवम् । गुणशब्दस्य शुक्लादिमात्रपरतया शुक्लायाः भावः शुक्लत्वमित्यादौ पुंवद्भावप्राप्तावपि क्रियावाचिशब्दे अपि उक्तधर्मतया तद्वाचिशब्देऽपिशब्दे पुंवद्भावाविधानेन तदप्रसङ्गात् । न च अभियुक्तव्याख्यानासङ्कोचायोग इति वाच्यम् । एकतद्धिते चेति सूत्रे एकता एकत्वमित्युदाहृत्य पुंवद्भावेन सिद्धमित्याशङ्क्य भगवता भाष्यकारेणोक्तमेतत् । त्वतलोर्गुणवचनस्येत्युक्तत्वात् । अनेन गुणवचनस्यैव पुंवद्भावः प्रागुक्तः त्वतलोरित्यनेन । प्रकृते च गुणवचनत्वाभावात् पुंवद्भावाप्रसङ्गेन ह्रस्वत्वविधानस्यावश्यकत्वमिति गम्यते । उक्तभाष्यसम्बन्धिकैय्यटेऽपि एकशब्दस्य सङ्ख्यावाचितायां गुणवचनत्वेऽपि असहायवाचिनो अतथात्वादिति भाव इत्युक्त्या एकत्वमित्यत्र सङ्ख्यावाचित्वे गुणवचनतया पुंवद्भावप्राप्तावपि गुणवचनत्वाभावे पुंवद्भावाभाव इति वर्णनाच्चैवमवगम्यते । तथा च शुक्लादिरूपपारिभाषिकगुणवाचित्वाभावान्न स्रष्ट्रीत्वमित्यत्र पुंवद्भावप्रसङ्गः । अत एव कर्त्र्या भावः कर्त्रीत्वमिति गुणवचनस्येत्येतत्प्रत्युदाहरणतया नवीनेनोक्तम् । अत एव च कैय्यटकृता स्त्रियामिति सूत्रे व्यापिनीत्वात् प्रकृतेरिति पुंयोगादिति सूत्रे स्त्रियाः संविधात्रीत्वादिति प्रगृह्य संज्ञाप्रकरणे च विभक्तेरेव संज्ञिनीत्वादित्युक्तम् । गुणशब्देन जातिसंज्ञाव्यतिरिक्तधर्ममात्रग्रहणे च क्रियादिवाचिनोऽपि पुंवद्भावे उदाहृतप्रयोगायोगप्रसङ्गात् । कथं तर्हि पञ्चम्या भावः पञ्चमत्वं सफलत्वमित्यादि प्रयोगः इति चेन्न । परः सन्निकर्षः संहितेति सूत्रीय एकैकवर्णवर्तित्वाद्वाच इति भाष्यं व्याचक्षाणेन कैय्यटकृता कर्तृत्वमात्रं विवक्षितं न तु स्त्रीत्वमिति ङीप् न कृत इत्यनेन साम्ये नपुंसकाश्रयणेन परिहारात् । तथा मञ्जर्यामपि पत्युर्नो यज्ञसंयोग इत्येतत्सूत्रे पतिशब्दस्य नकारान्तादेशः स्त्रियां विधीयते । यज्ञसंयोगे यज्ञसंयोगश्च तत्साधनत्वात् तत्फलगृहीतत्वाच्चेति काशिकाव्याख्यानावसरे फलगृहीतत्वादित्येतदंशमुपादाय कर्तृत्वमात्रं विवक्षितं न स्त्रीत्वमिति टाप् न कृत इति प्रतिपाद्य फलं गृहीतं ययेति बहुव्रीहौ फलशब्दस्य जातिवाचित्वात् 'जातिकालसुखादिभ्यः परवचनमि'त्यनेन गृहीतशब्दस्य परनिपात इत्युक्तम् । तत्रापि सामान्ये नपुंसकमित्येवाशयः । तथा च सामान्ये नपुंसकाश्रयणेन पञ्चमत्वमित्यादेः काव्यप्रयोगाणां चोपपत्तिः । तस्मात्पञ्चमत्वमित्यादौ सामान्ये नपुंसकतया पुंवद्भावप्रसङ्गाविषयत्वात् तद्विषये च शुक्लत्वमित्यादौ गुणवचनत्वस्यैव सत्त्वेन प्रकृते च गुणवचनत्वाभावेन पुंवद्भावाप्रसङ्गात् स्रष्ट्रीत्वेति निर्देशो युक्तः । श्रुतप्रकाशिकायामपि तथैव व्यवहारोऽप्येवं व्युत्पादनीयः । यत्तत्र टीकान्तरे गुणशब्दस्य जातिव्यावृत्तिपरत्वेनाभियुक्तैर्व्याख्यानादनुकरणस्य चानूक्रियमाणशब्दगतजातिनिमित्तकतायाः कैय्यटकृतोक्तत्वाद्गौरनाद्यन्तवतीत्यस्यानुक्रियमाणतया अनाद्यन्तवतीत्वादिति तदनुकरणशब्दस्य जातिनिमित्तकस्य गुणशब्दत्वं नास्तीति न पुंवद्भावापत्तिरिति समाधानम् । तत्तु ऋलृगित्येतत्सूत्रीयानुक्रियमाणे शब्दे या जातिः समवेता तत्सम्बन्धमनुकार्यमनुकरणं प्रत्याययतीति कैय्यटग्रन्थदर्शनमात्रमूलकम् । अत्र गुणशब्देन





जात्यादिव्यावर्तनेन शुक्लादिगुणमात्रस्य भाष्यकैय्यटादिसम्मततायाः प्रागुपपादिततया तावतैवाप्रसङ्गोपपत्तौ जातेरेव विशेषव्यावृत्तिप्रतिपादनाद्ययोगादित्येषा दिक् । अजात्वादिकल्पनेत्यत्रापि मूले तत्र तत्र टीकायां च यथायथमुभयमुपपाद्यं बहुप्रजाजननीत्वं जडत्वेन भोग्यत्वं चोपपन्नमिति प्राचीनमूलेऽपि जननीशब्दस्य गुण-वचनत्वाभावेन पुंवद्भावाभावः । भोग्यत्वं चेत्यत्र तु सामान्ये नपुंसकम् । एवं तासामुहस्मै तां चतुर्थीं महा-चमस्यः प्रवेदयत इत्येतत्तैत्तरीयभाष्ये चतुर्थीत्वेनैतां प्रवेदयत इति सप्तमे गीताभाष्ये दैवी ह्येषा गुणमयी-त्येतदुपपादनावसरे गुणमयीत्वमुच्यत इति चोक्तरीत्या गुणवचनत्वाभावादेव पुंवद्भावाभावादुपपन्नं इदं पुन-रवधेयम् । पूर्वावस्थाया निवृत्तत्वात् गृहीतमात्रग्राहित्वात् न गृहीतग्राहित्वेनेत्यादिपद्धतिवाक्ये निर्दोषानुमायाः सदोषत्वं सदोषानुमायाश्च निर्दोषत्वमित्यादि लक्षणवाक्ये शक्तेरप्रतिहतता पञ्चमप्रकारतेति मायावादिखण्डन-तट्टीकयोः किं दिशां भ्रान्तिकल्पितत्वं परमज्ञापकत्वे युक्त्यन्तरमिति तत्त्वनिर्णयटीकायाम्(?) अयोक्षिति-सलिलानलात्मकत्वेनेति त्र्यात्मकत्वादित्येतद्भाष्ये तत्तत्पूर्वकत्वाद्वाच इत्येतत्सूत्रीयभाष्ये च जिज्ञासाकर्तव्यत्व-समर्थनादित्यादि । तत्त्वप्रकाशिकायां मनोवृत्तेस्तत्प्रवणता हि वन्दनम् । मीमांसाया युक्त्यनुसन्धानात्मकत्वात् इत्यादि तत्तत्स्थलीयमूलेऽन्यत्रापि गणयितुमशक्यस्थलेषु त्वतलोः परयोः पुंवद्भावप्रापकत्वतलोर्गुणवचनस्येति वक्तव्ये गुणग्रहणस्य शुक्लादिप्रसिद्धगुणपरतया तेन पुंवद्भावप्राप्त्यभावेऽपि प्रागुक्तसामान्ये नपुंसकेन शरदः कृतार्थतेत्यादिकविप्रयोगवत्साधुत्वम् । सामान्ये नपुंसकं च तच्चाविशेषमानेनेति जिज्ञासाधिकरणटीकोक्तप्रकारा-तिरिक्तप्रकारेण व्याख्येयम् । ततश्च वक्तृत्वादिसाधारणाकारविवक्षायामित्यर्थो ज्ञेयः ।

ननु इदं युक्त्यनुसन्धानात्मकविचारमीमांसामननापरनामकजिज्ञासाङ्गभूतन्यायनिबन्धनं जिज्ञासायाः कर्तव्यतायामारम्भणीयं भविष्यतीति जिज्ञासाधिकरणपूर्वपक्षोपक्रममूले तथाविधस्थले स्त्रियाः पुंवदिति सूत्रेण समानाधिकरणे परतः पुंवद्भावः । गुणमयीति चतुर्थीमिति गीतोपनिषदोरुक्ततया तदनुकरणत्वेन गुणमयीत्वमिति चतुर्थीत्वेनेति च प्रयोगो यथाश्रुतानुसार्येव प्रजां जनयन्तीमिति श्रुत्यर्थानुकरणत्वेन प्रजाजननीत्वमिति च प्रयोगः । अज्ञत्वमिति प्रयोगेऽपि यथाश्रुतानुसारेण विज्ञेयं परमं ब्रह्मज्ञापिकेति तत्त्वनिर्णयटीकायां परमज्ञापकत्व इति गायत्र्यधिकरणतत्त्वप्रकाशिकायां सैषा चतुष्पदा षड्विधेत्येतदनुवादतया गायत्र्याः षड्विधत्वचतुष्पदत्वेति प्रयोगश्च लिङ्गपरित्यागेनानुकरणरूपः । व्याहृतीनां वर्णत्रयात्मकोङ्कारव्याख्यानतायाः इत्यादिप्रयोगेषु तु व्याख्यान-साधनकरणप्रमाणादिशब्दानां सर्वलिङ्गसाधारणतयोपपत्तिः । मिथ्यायाः साधकत्वं चेत्यनुभाष्ये तथाविधप्रयोगेषु तु ण्वुलन्तर्गत वु इत्येतदादेशभूताकस्यावयवो वा तद्धितावयवो वा युक्तः । तदुपधस्य शब्दस्य पुंवद्भावो यः स्त्रियाः पुंवत् इति सूत्रेण प्राप्तस्तन्निषेधोऽपि 'न कोपधायाः' इत्यनेन तद्धितवुसम्बन्धिककारोपधस्त्रीवाचकशब्दस्य पुंवद्भावेनेत्यर्थकेन प्राप्तः । ततश्च याचकतायाचिकात्वमित्यादाविव साधिकात्वमित्येव यद्यपि प्राप्नोति न च पुंवत्कर्मधारयजातीयेत्यस्य तत्र प्रवृत्तिः सम्भवति, कर्मधारयादेरभावात्, त्वतलोर्गुणवचनस्य शुक्लादिरूप-प्रसिद्धगुणपरतया तेनापि पुंवद्भावाप्राप्तिः तथापि स्त्रीत्वाविवक्षया सामान्ये नपुंसकेन सामग्र्या ज्ञानजनकत्वं ज्ञानग्राहकत्वं श्रुतेस्तत्त्वावेदकत्वं इत्यादिप्रयोगसाधुत्ववदिहापि सामान्ये नपुंसके सति साधकत्वमिति युक्तम् ।





एवं प्रयोगा उपपाद्याः । पूर्वपक्षसाधकयुक्तिरित्यादौ तु पुंवत्कर्मधारयेत्यनेन पुंवद्भावः तत्सूत्रस्य न कोपधाया इत्येतत्सूत्रनिषिद्धपुंवद्भावप्रतिप्रसवरूपत्वात् । तथा '....पूरणी प्रियादिष्वि'ति (६-३-३४) प्रतिषिद्धस्याप्ययं प्रतिप्रसवः । तेन दृढभक्तिः महानवमी महाद्वादशीत्यादि सिद्धं भवति । भक्तिपदस्य प्रियादित्वात् नवम्यादिपदस्य पूरणार्थषट्(?)प्रत्ययान्तत्वात् । कैय्यटादौ स्पष्टमेतत् । अधिकमुपयुक्तं सप्तमगीताभाष्यटीकाप्रपञ्चव्याख्यावसरे अस्माभिर्निरूपितं ज्ञेयम् । तथा तच्चाविशेषमानेनेत्येतत्सम्बन्धिजिज्ञासाधिकरणेऽपि । भावत्का भवदीया इत्येतदुपपादनं तृतीयस्य ..........पादे करिष्यते । एवं परःसहस्रावधिकस्थलेऽपि मूलटीकादाववधेयम् ।

तुशब्दोऽवधारणार्थः । ज्योतिरुपक्रमैवैषा तथा ह्यधीयत एके तैत्तिरीयाः । यस्मादजाया इत्यादिवाक्यैः श्रुतप्रकाशिकोक्तं प्रमेयं सङ्गृह्य चन्द्रिकायामनूदितं ज्योतिःसूत्रे ज्योतिर्ब्रह्मेत्यादिना तत्सङ्ग्रहप्रकारमेवानुकरोति **इयमजा ज्योतिरित्यादिना** । नात्र तन्त्रसिद्धा प्रकृतिरभिधीयते । कुतः । न जायत इत्यजेत्यजामात्रप्रतिपादनात् । तन्त्रसिद्धब्रह्मात्मकाजाग्रहणे विशेषाप्रतीतेरित्यादिपरग्रन्थोक्तसूत्रव्याख्यानमर्थतः सङ्गृह्य सूत्रप्रवृत्तिमाशङ्क्य तन्निरासपरतयोत्तरवाक्यमवतारयति **ननूक्तरीत्येत्यादिना** । उक्तरीत्या ब्रह्मकारणकत्वेनेत्यर्थः । **पूर्वपक्ष्युक्तरीत्येति** । अजामित्यस्याः प्रकृतेरित्यादिरित्यर्थः । चमसवदविशेषादिति सूत्रस्येति पाठः । चमसवदविशेषस्येति पाठेऽपि तत्सूत्रस्येत्येवार्थः । रामानुजमतवत् मायिमतेऽपि पूर्वसूत्रवैय्यर्थ्यादि कुतो नोक्तमित्यत एव तन्मते रामानुजमतवत्सूत्रयोरेकार्थत्वाभावेन भिन्नविषययोर्गतार्थत्वोद्भावनायोगादित्याशयेन तन्मते भिन्नविषयत्वप्रदर्शनेन तदनवकाशमाह **अन्येषां मत इति** । **अविशेषहेतुत्वमिति** । विशेषहेतुत्वाभावमित्यर्थः ।

**स०व्र०— तस्य प्रथमसूत्रमिति** । चमसवदविशेषादिति सूत्रमित्यर्थः । तत्र किं प्रकृतिस्वरूपमेवाजामेकामिति श्रुतिप्रतिपाद्यं न भवतीत्युच्यते उत साङ्ख्याभिमतं स्वातन्त्र्यम् । नाद्यः तस्य त्वयाऽपि स्वीकृतत्वात् । द्वितीये त्वाह **अनेनैवेति** । प्रकृतेर्ब्रह्मजातत्वोक्त्या अत्रैव तत्स्वातन्त्र्यनिराकरणप्रतीत्या पूर्वसूत्रं व्यर्थमित्यर्थः ।

**विट्ठल०— कश्चिदिति** । अजामेकामित्यत्रोक्तोऽयमजा ज्योतिरुपक्रमा ज्योतिर्ब्रह्म तदुपक्रमात् तत्कारणकैव न स्वतन्त्रा तैत्तरीयः खलु अणोरणीयानित्यादिना ब्रह्मोक्त्वा सप्त प्राणाः प्रभवन्ति तस्मादित्यादिना ततः सृष्टिं चोक्त्वा अजामेकामिति मन्त्रेण ब्रह्मकार्यत्वेनाजाभिधीयत इति **कश्चित्** रामानुजो अन्यथा व्याचष्ट इत्यर्थः । **तस्येति** । तस्यैवं व्याचक्षाणस्य साङ्ख्याभिमते यमजा स्वतन्त्रप्रकृतिरिति न निश्चेतुं शक्यम् । अजात्वादेरन्यत्रापि सुसम्पादत्वात् विशेषहेतोश्चाभावात् चमसवदित्यर्थप्रतिपादकं चमसवदविशेषादिति प्रथमसूत्रं व्यर्थं अजामेकामित्यत्रोक्ताजां स्वतन्त्रा प्रकृतिरिति पूर्वपक्षस्य ज्योतिरुपक्रमेत्यनेनैव निराससिद्ध्या प्रथमसूत्रस्य गतार्थत्वादित्यर्थः । ननु रामानुजभाष्ये ज्योतिरुपक्रमेत्यस्य ब्रह्मात्मिकाजाग्रहण एव विशेषहेतुरस्तीत्याहेत्येवावतारितत्वेनास्य सूत्रस्य ब्रह्माधीनाजाग्रहणे विशेषहेतुपरत्वान्न गतार्थत्वमिति चेत् न ब्रह्मात्मिकाजाग्रहण एव विशेषहेतुरस्तीत्याहेत्यवतारिकानुसारेण ज्योतिरुपक्रमैवेति तद्भाष्यगतप्रतिज्ञानुसारेण च





अस्मिन्सूत्रे अजा एकामित्यादिमन्त्रेण साङ्ख्याभिमतविशेषहेतुर्नास्तीत्यस्यार्थस्यापि लब्धतया अविशेषात् विशेषहेतोरभावात् चमसवदित्यर्थकचमसवदिति सूत्रवैयर्थ्यस्य वज्रलेपायितत्वात् । **ज्योतिरुपक्रमत्वमिति** । ब्रह्माधीनत्वमित्यर्थः । पौनरुत्तयमुत्तवा असङ्गतिं च आह **प्रतिपादनीयमिति** । प्रासङ्गिकमन्यमतदूषणं विधाय प्रकृतमाशङ्कते **अस्या इति** ।

**॥ इति 'ज्योतिरुपक्रमा' इत्यस्य केनचिद्रामानुजीयेनान्यथाव्याख्यातस्य निरासः ॥**

* * *

**॥ तत्र अस्मत्पक्षे दोषाभावदर्शनम् ॥**

५७ **सु०—** अस्तु परस्यैवम्, भवतां तु कथं न दोष इत्यत आह **अस्माकमिति** ।

**अनु०—** **अस्माकं परमुख्यार्थो भगवानेक एव तु ॥**
**मुख्यमात्रतया रूढं सर्वमभ्युपगम्यते ।**
**सर्वेषामपि शब्दानां गौणाद्यं तदयोगतः ॥**

अस्माकं तु मते 'तत्तु समन्वयादि'त्यवधारणस्यायमर्थः '**सर्वेषामपि शब्दानां भगवानेक एव** परममुख्यार्थो नान्य' इति । अतो **रूढं**, यस्य शब्दस्य यदर्थतया प्रसिद्धं, तदपि **सर्वं** तन्मुख्यार्थमात्रतया **अभ्युपगम्यते** । मुख्यायोगे गौणाद्यपि । एवं च 'अजादि-शब्दाः परममुख्यया वृत्त्या परब्रह्मपरा, मुख्यमात्रतया प्रधानस्यापि प्रतिपादका इत्यङ्गीकारे काऽनुपपत्तिरि'ति ।

ननु 'एवं तर्हि सौत्रमवधारणं किमिति परममुख्यार्थान्तरव्यावृत्त्यर्थं व्याख्यायते । वाच्यान्तरमात्रव्यावृत्त्यर्थं कुतो न व्याख्यातव्यम् । न चोक्तप्रयोजनानुपपत्तिः, अमुख्यया वृत्त्या सङ्केतमात्रेण वा तदुपपत्तेरि'ति चेन्न, सूत्रकारेणैव ग्रन्थान्तरे वैदिकानां शब्दाना-मुक्तविधानेकार्थत्वस्याभ्युपगतत्वादित्याह **अर्थद्वयमिति** ।

**अर्थद्वयमभिप्रेत्य प्रवृत्ते हरिरुक्तवान् ।**





तदेव पठति **कार्याणामिति** ।

'कार्याणां कारणं पूर्वं वचसां वाच्यमुत्तमम् ॥
योगानां परमां सिद्धिं परमं ते पदं विदुः ।'
इति

**वचसां** वैदिकानाम् **उत्तमं वाच्यम्** । तदपेक्षयाऽन्यान्यमुख्यवाच्यानि ॥ कुत एतत् । **योगानां** योगवृत्तीनां **परमां सिद्धिम्** । सिद्ध्यन्त्यस्मिन्निति सिद्धिः । इन्द्रादयस्त्ववपरमसिद्धयः ॥ एतदपि कुतः । **कार्याणां** महदादीनां **पूर्वं** मुख्यं **कारणम्** । प्रकृत्यादीनि त्वमुख्यकारणानि । **पदं** स्वरूपम् । तस्मात् **परमं विदुः** ।

यद्यपि रूढिरविलम्बेनार्थप्रत्यायकतामात्रेण बलवती, तथापि विशेषज्ञानहेतुत्वाद्योग एव बलीयानिति मत्वा स एव गृहीतः ।

तत्र साक्षादर्थद्वयस्यानुक्तत्वेऽप्युत्तमं वाच्यमिति विशेषणाद्वाच्यान्तरसद्भावोऽवगम्यते । अत एव प्राक् **अभिप्रेत्य** इत्युक्तम् ।

**परि०**— मूलं योजयति **अस्माकं त्विति** । 'रूढमि'ति अनुवादः । 'यस्ये'त्यादि तु व्याख्या । **न च उक्तप्रयोजनानुपपत्तिरिति** । कर्मदेवतादिवस्त्वन्तरापरिलोपप्रधानादिव्यवहारापरिलोपादिप्रयोजनबहुत्वत इत्यत्रोक्तस्यानुपपत्तिः न च इत्यर्थः । सिद्धिशब्दोऽधिकरणे व्युत्पन्न इत्याह **सिद्ध्यन्त्यस्मिन्निति** । योगवृत्तीनां मुख्यो विषय इत्यर्थः । **तत्रेति** । प्रवृत्तिग्रन्थे । **साक्षात्** कण्ठतः । परममुख्यमुख्यरूपार्थद्वयं वेदवाक्यानामित्यस्यानुक्तत्वेऽपीत्यर्थः ।

**यादु०**— **न चोक्तप्रयोजनेति** । 'विष्णौ शक्तिश्च गृह्यत' इत्युक्तप्रयोजनानुपपत्तिरित्यर्थः ।

**वं०प०**— तटस्थः शङ्कते **अस्त्विति** । एवं 'को दोषः सर्वथैवास्ति परिणामि जडं यदि' इत्युक्तः प्रधानस्य प्रतिपाद्यत्वाङ्गीकारे दोषाभावः परस्य मतेऽस्तु । परेण सर्वशब्दवाच्यत्वस्य समन्वयसूत्रे प्रतिज्ञातत्वानङ्गीकारेण अजावाक्ये प्रधानप्रतिपादनाङ्गीकारेऽवधारणानुपपत्तिरूपदोषाभावात् । भवतां पक्षे तदजावाक्ये प्रधानप्रतिपाद्यत्वकथनं कथं न दोषः । भवद्भिः समन्वयसूत्रे सर्वशब्दवाच्यतायाः प्रतिज्ञातत्वाङ्गीकारेण अजा-





वाक्ये प्रधानप्रतिपादनाङ्गीकारेऽवधारणानुपपत्तिरूपदोषावश्यम्भावादित्यर्थः । **भवतामिति** । तथा च सर्वशब्दवाच्यतायाः तत्र ब्रह्मणः प्रतिज्ञातत्वेन अजावाक्येन प्रधानप्रतिपादनं युक्तमित्यर्थः । **प्रयोजनेति** । लोकव्यवहारादिसिद्धिरूपप्रयोजनेत्यर्थः । **उक्तविधेति** । भगवत्तदितररूपेत्यर्थः । *सिद्धिशब्दस्य नित्यस्त्रीलिङ्गत्वात् तद्विशेषणे परमशब्देऽपि युक्ता स्त्रीलिङ्गता* । शब्दस्वाभाव्यात् सिद्धिशब्दस्य स्त्रीलिङ्गत्वेऽपि भगवद्विशेषणत्वं युक्तमिति ध्येयम् । सिद्धेः परमत्वे तद्वतो भगवतः परमत्वं लब्धमेवेत्यपि द्रष्टव्यम् । **सिद्ध्यन्ति** योगवृत्तिलभ्यार्थाः । **एतदपीति** । योगानां परमसिद्धित्वमित्यर्थः । **महदादीनामिति** । तत्त्वानां तदभिमानिब्रह्मादीनां चेत्यर्थः । तर्हि प्रकृत्यादेः कारणत्वं न स्यादित्यतः पूर्वपदलब्धार्थमाह **प्रकृत्यादीनीति** । **तस्मादिति** । कार्याणां पूर्वकारणत्वात् परमसिद्धित्वं परमसिद्धित्वाच्च तत्स्वरूपस्य परमत्वं ततश्चोत्तमवाच्यत्वमित्यर्थः । **अत एवेति** । साक्षादनुक्तत्वादेवेत्यर्थः ।

**आनन्दः**— वेदः पामरमनोरञ्जनार्थं काव्यमित्यर्थः । नन्वर्थद्वयमभिप्रेत्येत्यत्र वैदिकपदार्थानां उभयार्थत्ववर्णनमयुक्तम् । प्रकृतानुपयोगादित्यतः तन्निवर्त्यां शङ्कां प्रदर्शयतः तत्तात्पर्यमाह **नन्वेवमिति** । **उक्तप्रयोजनेति** । व्युत्पत्त्यनुपपत्तिलोकव्यवहारकर्मानुष्ठानरूपोक्तप्रयोजनानामित्यर्थः । योगस्यामुख्यवृत्त्या सम्भवादाह **सङ्केतमात्रेणेति** । ननु वचसामित्यनेनैव परमवाच्यत्वस्य सिद्धत्वाद्योगानामित्याद्यनर्थकमित्यत उक्तार्थे हेतुत्वेन योजयति **कुत एतदिति** । सिद्ध्यत्यस्मिन्निति योगनिमित्तप्रवृत्तिनिमित्तस्य तस्मिन्नेव निरतिशयितत्वादित्यर्थः । ननु योगानामित्यनेन योग एवास्ति न रूढिरिति प्रतीयते । तत्र यद्यस्ति रूढिः तर्हि सैवास्त्वविलम्बितप्रतीतिजनकत्वादित्यत आह **यद्यपीति** ।

**श्रीनिधि०— न चोक्तप्रयोजनेति** । व्युत्पत्त्युपपत्तिः । कर्मानुष्ठानसम्भवो लोकव्यवहारानुच्छेदश्चेत्युक्तप्रयोजनेत्यर्थः । **सङ्केतमात्रेणेति** । डित्थादिवदिति भावः । **योगवृत्तीनामिति** । योगवृत्तिलभ्यपरमैश्वर्यादीनामिति यावत् । सिद्धं अधिकरणम् ।

**शे०वा०**— स्वमते भगवतः परममुख्यार्थत्वस्य तदन्यस्य च मुख्यमात्रत्वस्य च निरूपणानर्थक्यमित्यतोऽजामन्त्रस्य प्रधानपरत्वे सौत्रावधारणविषयप्रदर्शनेन तदविरोधार्थत्वान्न वैयर्थ्यमित्याशयेन तच्छङ्कामुत्थापयति **अस्त्विति** । तथाऽपि वैदिकशब्दानामर्थद्वयाभिप्रायकत्ववर्णनमनर्थकमित्यतः सौत्रावधारणार्थतया व्याख्यातपरममुख्यत्वोपपादकत्वान्नानर्थक्यमित्याशयेन तत्रानुपपत्तिशङ्कामुत्थापयति **नन्विति** । **न चोक्तेति** । व्युत्पत्त्यादिरूपेत्यर्थः । **विशेषणादिति** । तस्यानुत्तमवाच्यव्यावर्तकत्वाद्वाच्यान्तराभावे तदानर्थक्यप्रसङ्गादिति भावः।

**विट्ठल०**— मत इत्यादि शेषमभिप्रेत्य मूलं योजयति **अस्माकं त्विति** । अत इत्यपि शेषः । 'रूढमि'त्यनुवादः । 'यस्ये'ति व्याख्यानम् । **उक्तप्रयोजनेति** । कर्मानुष्ठानसम्भवो लोकव्यवहारानुच्छेदो विष्णौ





शक्तिग्रहश्चेत्युक्तप्रयोजनानुपपत्तिरित्यर्थः । उत्तमं वाच्यमित्युत्तमपदाभिप्रायं व्यनक्ति **तदपेक्षयेति** । सिद्धि-शब्दोऽधिकरणे व्युत्पन्न इत्याह **सिद्ध्यन्त्यस्मिन्निति** । अत एव नयचन्द्रिकायां सिद्धिराश्रय इत्युक्तम् । **अपरमसिद्धय इति** । अमुख्ययोगवृत्तिविषय इत्यर्थः । पूर्वपदव्यावृत्त्यं दर्शयति **प्रकृत्यादीनि त्विति** । अतः सर्वकारणत्वाद्भगवत एव योगवृत्तिमुख्यविषयत्वम् । अन्येषां तदभाव इति भावः । **तस्मादिति** । समग्रश्लोकार्थ-परामर्शः उत्तमवाच्यत्वे हेतुत्वेन रूढिविषयत्वं किमिति नोक्तम् । रूढेर्योगितः प्राबल्यादित्याशङ्क्य परिहरति **यद्यपीति** । **तत्रेति** । कार्याणामित्यत्र ।

५८ **सु०**— वैदिकानां शब्दानामुभयार्थत्वे प्रमाणान्तरमाह **बुद्धाविति** ।

**अनु०**— बुद्धौ समारोहादुभयोर्योगरूढयोः ॥
त्यागे च कारणाभावादुभयार्थत्वमिष्यते ।

**योग इति** योगवृत्तिविषयः परमेश्वरः । **रूढः** प्रसिद्धः प्रकृत्यादिः ।

अयमर्थः । अस्ति तावद्विदितपदपदार्थसङ्गतेरधिगतशाब्दन्यायस्याजादिशब्दश्रवणे ब्रह्मण इव प्रधानस्यापि बुद्धावारोहः । 'धियां च (तु) स्वत एव प्रामाण्यम्, अप्रामाण्यं तु बाधकाधीनमि'त्युपपादितं प्रथमसूत्रे । न चात्रार्थद्वयाभ्युपगमे बाधकमस्ति, येन बुद्धा-वारूढमपि त्यज्येत, अतो निरपवादप्रतीतिबलात् सर्वेषामपि शब्दानाम् **उभयार्थत्वम्** एष्टव्यमिति ।

एतदेव विवृणोति **विपरीतेति** ।

विपरीतप्रमाऽभावे पूर्वारोहस्तु कारणम् ॥
सा भवेद्यत्र स व्यर्थः पूर्वारोहो भ्रमो यथा ।

**कारणं** स्वीकारस्येति शेषः । **सा** विपरीतप्रमा । **स** स्वीकारकारणत्वेनोक्तोऽपि पूर्वारोहः, **व्यर्थः** स्वीकारकारणं न भवति ॥ **भ्रमो यथेति** । प्रसिद्धशुक्तिरजतादिविपर्ययो यथेत्यर्थः ।





**यद्वा । अजादिपदानि द्व्यर्थानि, बाधकविधुरायां बुद्धौ तथारूढत्वादिति प्रतिज्ञा-हेतू कथितौ । अनेनान्वयव्यतिरेकाभ्यां व्याप्तिमाचष्टे ॥ तत्र पूर्वार्धे यथा स्तम्भादिप्रत्यय इति दृष्टान्तोक्तिरपि द्रष्टव्या ।**

परि०— **प्रथमसूत्र इति** । जिज्ञासासूत्रे 'प्रत्यक्षवच्च प्रामाण्यं स्वत एवागमस्य हि' इत्यादिग्रन्थेनेति भावः । **कथिताविति** । 'बुद्धावि'तिश्लोकेनेति योज्यम् । **अनेनेति** । 'विपरीते'ति-श्लोकेनेत्यर्थः ।

यादु०— **प्रथमसूत्र इति** । जिज्ञासासूत्र इत्यर्थः ।

वं०प०— **उभयार्थत्वे** भगवत्तदितररूपानेकार्थत्व इत्यर्थः । **द्व्यर्थानि** भगवत्तदितररूपार्थद्वयवन्ती-त्यर्थः । **तया** द्व्यर्थतया । **आरूढत्वात्** विषयत्वात् । **कथिताविति** । 'बुद्धौ समारोहादि'ति श्लोकेन इति शेषः । **अनेन** 'विपरीतप्रमाभाव' इति श्लोकेन । व्यतिरेकव्याप्तिकथनपरे सा भवेदित्यर्धे भ्रमो यथेति दृष्टान्तस्योक्तत्वे-ऽप्यन्वयव्याप्तिकथनपरे विपरीतेति पूर्वार्धे तदनुक्तेर्न्यूनतेत्यत आह **यथेति** । आदिपदेन कुम्भग्रहणम् । तथा च स्तम्भकुम्भाविति समूहालम्बनप्रत्यय इत्यर्थः । एवं च यद्यद्बाधकविधुरायां बुद्धौ द्व्यर्थतया प्रतीयते तत् तथा द्व्यर्थमेव यथा स्तम्भकुम्भाविति समूहालम्बनप्रत्यये स्तम्भकुम्भौ साक्षात्करोमीत्यनुव्यवसायरूपायां निर्बाधबुद्धौ प्रतीयमानत्वं, तथा द्व्यर्थत्वं स्तम्भकुम्भोभयार्थविषयत्वं चास्ति । तद्वदजादिपदेष्वपि निर्बाधबुद्धिविषयत्वेन प्रतीयमानत्वमर्थद्वयवाचकत्वरूपं द्व्यर्थत्वं चास्तीति सामान्यव्याप्तिमूलकमनुमानं ज्ञेयम् । एवं यत् द्व्यर्थं न भवति तत् द्व्यर्थतया निर्बाधबुद्धिविषयो न, यथा भ्रमः । इदं रजतमिति भ्रमे शुक्तिमात्रविषयके द्व्यर्थत्वाभावोऽस्ति । इदं रजतमिति ज्ञानवानहमित्यनुव्यवसायरूपायां निर्बाधबुद्धौ द्व्यर्थतया अप्रतीयमानत्वेन द्व्यर्थतया निर्बाधबुद्धि-विषयत्वाभावोऽप्यस्तीति भ्रमस्य व्यतिरेकदृष्टान्तत्वं ज्ञेयम् । केचित्तु यद्यन्निर्बाधबुद्धिविषयः तत्तथेत्येवं सामान्यव्याप्तिर्विवक्षिता । तत्र च स्तम्भादि दृष्टान्तः । स्तम्भादौ कथं निर्बाधबुद्धिविषयत्वमिति शङ्कायां निर्बाधबुद्धिप्रदर्शनार्थमेव स्तम्भादिप्रत्ययग्रहणं न तु दृष्टान्ततया । एवं यद्यथा नास्ति नासौ तथा निर्बाधबुद्धि-विषयः । यथा भ्रमसिद्धो रजतादिरिति व्यतिरेकः । अत्रापि मूले भ्रमरूपप्रत्ययग्रहणं रजतादौ कथं निर्बाधबुद्धि-विषयत्वाभाव इति शङ्कायां तदुपपादनार्थमेव भ्रमरूपं ज्ञानं सबाधं प्रसिद्धमिति न तु दृष्टान्ततयेति ज्ञातव्यम् । तथा च व्याप्तिद्वयेऽप्यर्थ एव दृष्टान्तः । टीकायां प्रत्ययग्रहणं मूले च भ्रमग्रहणं अर्श आद्यजन्ततया । प्रत्यय-विषयो भ्रमविषयश्च ग्राह्यः । तथा च बुद्धिविषयत्वमुक्तं भवतीत्याहुः । अपिशब्दस्तुशब्दार्थे प्रधाने त्विति जगदुपा-दानत्वस्यैवेत्यवधारणार्थे वा ।

आनन्दः— योगरूढ्योरित्यत्र समाहारवृत्तिः प्रतीयते तथा चैकवचनान्तः स्यादित्यत आह **योग इतीति** । किमत्रानेन प्रमाणमुक्तमिति न ज्ञायते इत्यत आह **अयमर्थ इति** । नन्वर्थद्वयस्य बुद्धावारोहेऽपि एकस्मिन्नर्थ-





प्रामाण्यं किं न स्यादत्राह **धिया चेति** । **अत इति** । विमतानि वैदिकवचनानि उभयार्थानि अपवादाभावे सत्युभयार्थप्रतीतिजनकत्वादित्यनुमानमुक्तं भवति । अत्रानुमाने हेतुविशेषणतया प्रविष्टस्यापवादाभावस्य विवरणार्थमुत्तरकारिका । अत्रैवानुमाने अन्वयव्यतिरेकाभ्यां व्याप्तिप्रदर्शनार्थं उत्तरति **द्वयेति** । द्वितीयपक्षार्थः । यद्वेत्यनेन तु अनुमानपरत्वेन व्याख्याति । अथवा निरपवादेत्यनेनार्थापत्तिरुच्यते । यदीदं वैदिकशब्दजातं उभयार्थं न स्यात् तर्ह्यस्मादुभयार्थप्रतीतिः न स्यात् । तथा च निरपवादप्रतीत्यन्यथानुपपत्त्या उभयार्थमेषां स्वीकर्तव्यमित्यर्थः । यद्वेत्यनेन तु प्रसिद्धमनुमानमेवोच्यत इति । तथाऽरूढत्वादिति तच्छब्दार्थत्वेनारूढत्वादित्यर्थः । अत्र च यद्बाधकाभावे यस्यां बुद्धावारूढं तत्तदर्थ इति सामान्यव्याप्तिरुक्ता वेदितव्या ।

**शे०वा०— प्रमाणान्तरमिति** । निरपवादप्रतीतिविषयत्वरूपमित्यर्थः । ततश्च प्रमाणान्तराभिधायकत्वान्नोत्तरवाक्यवैयर्थ्यमित्यर्थः । रूढ इति रूढविषयग्रहणात् तदनुसारेण योगशब्दोऽपि योगवृत्तिविषयपर इत्याशयेनाह **योगवृत्तिविषय इति** । किमनेन प्रमाणमुक्तं भवतीत्यतोऽभिप्रायमाह **अयमर्थ इति** । **प्रथमसूत्र इति** । जिज्ञासासूत्रे 'प्रत्यक्षवच्च प्रामाण्यं स्वत एव', 'अप्रामाण्यं तथान्यतः' इत्यादिनेति शेषः । **विवृणोतीति** । अतो न तद्वैयर्थ्यमिति भावः । विवरणत्वं चास्य दृष्टान्तोपदर्शनादिना बोध्यम् । अनुमानापेक्षितव्याप्त्यभिधायकतया पूर्वोत्तरवाक्ययोरेकवाक्यत्वेनागतार्थत्वसम्भवे तद्विवरणत्वकल्पनमनुचितमित्यभिप्रेत्याह **यद्वेति** ।

**वा०र०—** यद्वा अजादिपदानीत्येतद्योजनायामनुमानसमर्पणस्य स्पष्टत्वेन पूर्वयोजनायामपि अतो निरपवादप्रतीतिबलादिति वक्ष्यमाणरीत्या निरपवादप्रतीतिरूपानुमानप्रमाणस्यैव मूलेऽभिप्रेतत्वमित्याशयेन व्याचष्टे **निरपवादप्रतीतीति** । प्रतीतीत्येव मूले उक्तत्वेऽपि सामानाधिकरण्यसिद्ध्यर्थं विषयत्वपर्यन्तमर्थकथनम् । निरपवादप्रतीतिविषयत्वरूपमनुमानमित्यर्थः । अनेनैव निरपवादप्रतीतिबलादित्येतत्प्रतीतिविषयत्वेति व्याख्यातं भवति । **अतो निरपवादेति** मूलम् । अनेन शब्दा उभयार्थाः । उभयोरर्थयोर्बाधकविधुरायां बुद्धौ तदर्थतया अरूढत्वात् । अर्थपदं विषयपरम् । यद्बाधकविधुरबुद्धौ यदर्थतया आरूढं स तदर्थक इति अव्यये यथा पुरोवर्ती यत्र स्तम्भत्वेन बुद्धावारूढः सा बुद्धिः तत्र स्तम्भार्थिकेति दृष्टान्तः । यद्यदर्थकं न भवति तदर्थो बाधकविधुरबुद्धौ तथाऽऽरूढश्च न भवति, यथा शुक्तिरजतज्ञानं रजतार्थकं न भवति तदर्थो बाधकविधुरबुद्धौ तथा आरूढश्च न भवति । रजतबुद्धेर्नेदं रजतमिति बाधकयुक्तत्वादिति प्रयोगप्रकारः सूचितः । अत एव **यद्वेति** मूले पूर्वोत्तरानुव्याख्यानयोः प्रतिज्ञाहेतुकथनत्वव्याप्तिप्रदर्शनपूर्वकदृष्टान्तकथनपरतया योजना करिष्यते । तेन हि पूर्वयोजनायां सम्पूर्णानुमानप्रयोगस्य पूर्वानुव्याख्यानलब्धत्वाङ्गीकारप्रतीतेः । अत एव च तदेव विवृणोतीत्यवतार उत्तरभाष्यस्य पूर्वयोजनायामिति ज्ञेयम् । स पूर्वारोह इति सम्बन्धमङ्गीकृत्य स इत्यस्यार्थकथनेन वैय्यर्थ्यं परिहरति **स स्वीकारेति** मूलम् । बुद्धावारोहो बुद्ध्या विषयीकारणमित्यभिप्रेत्य प्राचीनो बुद्धावारोह इति प्रयोगः । तथात्रापि पूर्वारोहो नाम पूर्वं बुद्धावारोहो व्यर्थः । बुद्ध्या विषयीकरणं व्यर्थं इति विषयीकरणरूपव्यापारविवक्षया वैय्यर्थ्यप्रतिपादनमेव बुद्धौ समारोहादित्यत्रेव पूर्वारोह इत्यत्रापि व्यापारस्यैव ग्रहणौचित्यात् ।





परन्तु विषयीकारिबुद्धिप्राधान्यविवक्षया पूर्वारोहपदेन पूर्वबुद्धिरपि गृहीतुं शक्या । आरुह्यतेऽस्मिन्नित्यारोहः । पूर्वश्चासावारोहश्च पूर्वारोह इति व्युत्पत्तिसम्भवात् व्यापारप्राधान्यविवक्षया पूर्वारोहपदेनारोहाधिकरणतया बुद्धेरपि उपसर्जनतयाऽप्युपस्थितिमादाय विशिष्टेऽभिहितवैय्यर्थ्यस्य बुद्धावप्युक्तप्रायतया पूर्वारोहो व्यर्थः । स्वीकारकरणं न भवतीति वाक्ये पूर्वबुद्धिर्व्यर्थेत्यप्यभिप्रेतम् । तेन भ्रमो यथेति दृष्टान्ते प्रत्ययरूपधर्मिग्रहणं न दोषाय । उभयोः योगरूढ्योः बुद्धावारोहः । त्यागे कारणाभावाच्छब्दानामुभयार्थत्वमिति पूर्वानुव्याख्यानोक्तप्रमेयस्य अनेन विवरणं त्वेवं बुद्धिपदस्य पूर्वबुद्धिरिति कारणपदस्य विपरीतप्रमेति व्याख्याना(नं तु)त् दृष्टान्तमात्रकथनेन सा भवेदित्यनेन विपरीतेत्युक्तस्य दार्ढ्यकरणेन चेति ज्ञेयम् ।

एतेनेदं निरस्तं यत्तु बुद्धौ समारोहादित्यनुव्याख्यानानुसारेण शब्दाः उभयार्थाः, अर्थद्वयस्य बुद्धौ समारोहे सति त्यागे कारणाभावादिति । प्रयोगस्वीकारे व्यधिकरणत्वं भ्रमरूपदृष्टान्ते उक्तहेतुसाध्ययोर्विशिष्याभावेन दृष्टान्तानानुगुण्यं च । सामान्यव्याप्तिरपि यत्र त्यागे करणाभावविशिष्टो यदर्थस्य बुद्धावारोहः तत्र तदर्थकत्वमित्यभिधेया । न तत्रापि भ्रमो यथेति दृष्टान्तः सङ्गतः । भ्रम इति प्रथमायाः सप्तम्यर्थत्वेन विपरिणामे तु स एव दोषः । पूर्वारोहपदस्य ज्ञानपरत्वे बुद्धौ समारोहादित्यनेन भिन्नविषयत्वापात इत्यादि व्यधिकरणत्वस्य दोषत्वानङ्गीकारात् प्रयोजकव्याप्तेश्चात्रापि सत्त्वात् वक्ष्यमाणरीत्या सामानाधिकरण्येनापि प्रयोगसम्भवाच्च दृष्टान्तानुगुण्यस्योपपादनाच्चेति सर्वमवदातम् ।

**दृष्टान्तोपदर्शनादिनेति** । आदिपदेन करणादिपदव्याख्यानादेः सङ्ग्रहः । **व्याप्त्यभिधायकतयेति** । विपरीतेत्युत्तरवाक्यस्येति शेषः । उपलक्षणं चेदम् । पूर्ववाक्यस्यानुमानप्रदर्शकतयेत्यपि ज्ञेयम् । मूले **तथा आरूढत्वादिति** । शब्दार्थस्य बुद्धौ समारोहादित्यनेन तात्पर्यतः लाभमाश्रित्य अयं हेतुः कथित इति ज्ञेयम् । **अन्वयव्यतिरेकाभ्यामिति** मूलम् । योऽर्थो यदर्थतया बाधकविधुरबुद्धावारूढः तत्प्रमाणं तदर्थकमिति सामान्यतोऽन्वयः । यत्प्रमाणं यदर्थकं न भवति तदर्थोऽपि बाधकविधुरबुद्धौ तदर्थतया आरूढो न भवतीति व्यतिरेकश्च सामान्यतो बोध्यः । अत्रारोहपदस्य प्रत्ययार्थकत्वात् विपरीतप्रमाभावविशिष्टपूर्वप्रत्ययः स्वीकारकारणमित्यादेर्विवक्षायाः स्पष्टत्वात् अन्वयव्यतिरेकरूपां व्याप्तिमित्यर्थः । सर्वत्र चार्थशब्दो विषयपरः । न तु वाच्यार्थपर इति न कश्चित्क्षुद्रोपद्रवः । ननु यद्यदर्थकं न भवति तदर्थोऽपि बाधकविधुरबुद्धौ तदर्थतया आरूढो न भवतीति व्यतिरेकव्याप्तौ भ्रमरूपदृष्टान्तोक्तावपि अन्वयव्याप्तौ दृष्टान्तानुक्तेः कथं व्याप्तिद्वयप्रतिपादकत्वमस्येत्यतो उपलक्षणया दृष्टान्तान्तरस्याभिमतत्वान्न दोष इत्याशयेनाह **तत्र पूर्वार्ध इति** । अन्वयव्यतिरेकव्याप्तिप्रदर्शनपरतयायोजितविपरीतेति श्लोके अन्वयव्याप्तिप्रदर्शनपरपूर्वार्ध इत्यर्थः । स्तम्भादिप्रत्ययो हि स्तम्भादावुत्पन्नः बाधकविधुरः अन्यस्तु नेति दर्शयितुं स्तम्भ इत्युक्तम् । स्तम्भादावित्यर्थः । स्तम्भादिप्रत्ययस्थले हि स्तम्भादिरूपोऽर्थः । बाधकविधुरायां स्तम्भादिप्रत्ययरूपबुद्धावारूढो भवति । स प्रत्ययस्तदर्थकश्च भवति । स्तम्भादेरेव विषयत्वात् इति दृष्टान्ते साधनसाध्ययोः सद्भावादिति भावः । एतेनोक्तहेतुसाध्ययोः स्तम्भादिप्रत्यये अभावेन





दृष्टान्तत्वायोग इत्यादि निरस्तम् । सामानाधिकरण्याभावस्तु न दोष इत्युक्तमेव बुद्धावारूढत्वमात्रस्य रूपान्तरेणारूढत्वमादाय अनर्थेऽपि सत्त्वात् तदर्थकतयेत्यस्य प्रयोग इत्यपि युक्तमेवेत्यादि ज्ञेयम् । यद्यपि यद्यदर्थविषयकाबाधितप्रतीतिजनकं तत्तदर्थविषयकमिति सामानाधिकरण्येऽपि नानार्थाक्षादिशब्दानां दृष्टान्तानां लाभात् तथैव प्रयोग उचितः । तथापि भ्रमो यथेत्युत्तरानुव्याख्यानानुसारेण सामानाधिकरण्यमुपस्कृत्य प्रयोगोऽभिहितः । यद्यपि चोक्तसामानाधिकरण्यप्रयोगपक्षेऽपि यो विपरीतप्रमाभावे सति यद्विषयः पूर्वारोहः स तदर्थस्वीकारकारणं यश्च न स्वीकारकारणं स न तादृशः पूर्वारोह इत्यनुभाष्यलब्धावन्वयव्यतिरेकौ इमौ च फलितान्वयव्यतिरेकावप्युपलक्षणयाऽभिप्रेतावित्याश्रित्य सामानाधिकरण्यप्रयोगोऽप्यनुव्याख्यानार्थतया व्याख्यातुं शक्यः, तथापि बुद्धौ समारोहादित्याद्युपक्रमोपसंहारपर्यालोचनया व्यधिकरणप्रयोगस्यैवानुभाष्यात् प्रतीतेर्वृथा व्यत्यासाश्रयणेन कृत्याभाव इत्याशयेन व्यधिकरण एव प्रयोगो दर्शितः । ये तु मूलस्थतथेत्यस्य द्व्यर्थकतयेत्यर्थमाश्रित्य शब्दधर्मतामिच्छन्ति तेषां शब्दजन्यबुद्धौ शब्दार्थस्यारोहप्रसङ्गे शब्दविषयकबुद्धौ शब्दस्य स्वार्थयुक्ततया आरूढत्वावर्णने कथं नासङ्गतिः । दृष्टान्तानानुगुण्यं तु स्पष्टमेव । स्तम्भादिप्रत्ययोऽपि स्वविषयकबुद्धौ स्वार्थयुक्ततया आरूढ इति योजनेऽपि अर्थयोरारूढत्वपरबुद्धौ समारोहादुभयोर्योगरूढ्योरिति भाष्यास्वारस्यप्रसङ्गः तदवस्थ एव । उक्तरीत्या आरोहपदस्य ज्ञानपरतया बाधकविधुरः प्रत्ययः बाधकसहितः प्रत्यय इत्येवार्थप्रतीत्या शब्दजन्यप्रतीतेर्बाधकविधुरत्वातिरिक्तशब्दविषयकप्रतीतेः बाधकविधुरत्वादिकल्पनाया निर्मूलत्वं चेत्यादि दूषणं बोध्यम् ।

एवं बुद्धौ समारोहादित्यादिर्मूलसङ्गतः ।
अनुव्याख्यागतः श्लोको योजितो विदुषां मुदे ॥

**विट्ठल०**— साक्षात्कण्ठतः अर्थद्वयस्य परममुख्यरूपार्थद्वयस्य किमनेन प्रमाणमुक्तमित्यतोऽनुभवः प्रमाणमित्याशयेनोपपादयति **प्रथमसूत्र इति** । जिज्ञासासूत्रे 'प्रत्यक्षवच्च प्रामाण्यं स्वत एवागमस्य चे'त्यनेनेति भावः । **तथा रूढत्वादिति** । द्व्यर्थतया रूढत्वादित्यर्थः । **कथिताविति** । बुद्धौ समारोहादिति श्लोकेनेति शेषः । **अनेनेति** । विपरीतप्रमाभाव इति श्लोकेन विपरीतप्रमाभावे बाधकप्रत्ययाभावे पूर्वारोहः । पूर्वोल्लेख एव कारणं उल्लिख्यमानार्थविषयत्वे कारणम् । यः प्रत्ययो बाधकरहितत्वे सति यदुल्लेखी स तद्विषय इति सामान्यान्वयव्याप्तिः । यत्र प्रत्यये यः पूर्वारोहो व्यर्थः उल्लिख्यमानार्थस्वीकारकारणं न भवति । उल्लिख्यार्थविषयको न भवतीति यावत् । तत्र प्रत्यये सा विपरीतप्रमा भवेत् । यः प्रत्ययो यद्विषयो न भवति स बाधकरहितत्वे सति तदुल्लेखी न भवति । यथा भ्रमः तत्र हीदं रजतमितिप्रत्ययः यद्विषयो न भवति रजतविषयो भवति किन्तु शुक्तिविषय एव शुक्तिसन्निकृष्टकरणजन्यत्वात् सः बाधकरहितत्वे सति रजतोल्लेखी न भवति किन्तु बाधके सत्येव रजतोल्लेखीत्येवमन्वयव्यतिरेकाभ्यां व्याप्तिमाचष्ट इत्यर्थः । ननूत्तरार्धोक्तव्यतिरेकव्याप्तौ यथा भ्रम इति दृष्टान्तोक्तिवत्पूर्वार्धोक्तान्वयव्याप्तावपि भाव्यमित्यत आह **तत्रेति** । वस्तुतः स्तम्भादौ स्तम्भादिप्रत्यय इत्यर्थः ।





५९ **सु०—** ''नन्वत्राजायाः कारणत्वमुच्यते, तच्च ब्रह्मलक्षणत्वेनोक्तम्, इत्यतो बाधकाद् बुद्धावारूढमपि प्रधानं त्याज्यमिति चेन्न; निमित्तमात्रत्वस्य ब्रह्मलक्षणत्वेन, जगदुपादानत्वस्य प्रधानेऽपि सत्त्वादस्य तदर्थत्वोपपत्तेरि''त्याशयवानुपसंहरति **अत इति ।**

## अतो जगदुपादानं प्रधानं वक्ति सा श्रुतिः ॥

**सा श्रुतिः** अजामेकामित्यादिका ॥ १-४-१,२ ॥

**परि०—** **अस्येति ।** अजावाक्ये श्रुतकारणत्वस्योपादानरूपत्वेनोपपत्तेरित्यर्थः । यद्वा अस्य वाक्यस्य प्रधानार्थत्वोपपत्तेरित्यर्थः ।

**वं०प०—** ननु अजावाक्ये निमित्तत्वरूपब्रह्मलक्षणप्रतिपादनात् प्रधानं त्याज्यमिति शङ्कायामाह **अस्येति ।** अजावाक्यस्य । **तदिति ।** उपादानत्वेत्यर्थः ।

**आनन्दः—** ननूत्तरश्लोके जगत्कारणमिति वक्तव्ये उपादानप्रयोगः किं निबन्धन इत्यतस्तन्निवर्त्याशङ्काप्रदर्शनपूर्वकं तत्तात्पर्यमाह **नन्वत्रेति ।**

**शे०वा०—** अजामेकामित्युपक्रमानुरोधेन 'अतः प्रधानं वक्ती'त्येवोपसंहर्तव्यत्वात् जगदुपादानमित्यधिकोक्तिरनर्थिकेत्यतो विवक्षितहेतौ विशेषणाप्रसिद्धिपरिहारार्थत्वात् नानर्थक्यमित्याशयवान् तद्व्यावर्त्यतया तदसिद्धिशङ्कामुत्थापयति **नन्विति ।**

**॥ इति अस्मत्पक्षे दोषाभावदर्शनम् ॥**

**॥ इति प्रथम-द्वितीय-अधिकरणव्याख्यानिराकरणम् ॥**

* * *

**॥ अथ एतत्पादीयपरोक्तव्याख्याननिरासे विशेषतः पादार्थनिराकरणे तृतीयाधिकरणव्याख्यानिराकरणम् ॥**

६० **सु०—** 'न सङ्ख्योपसङ्ग्रहात्' इत्येतदपि प्रधानस्याशाब्दत्वप्रतिपादनार्थतया व्याचक्षते (शां.भा.) । तथा हि । '' 'यस्मिन्पञ्चपञ्चजना आकाशश्च प्रतिष्ठितः । तमेव मन्य आत्मानं विद्वान्ब्रह्मामृतोऽमृतम्' इत्यस्मिन्मन्त्रे पञ्चपञ्चजना इति पञ्चसङ्ख्या-





विषयापरा पञ्चसङ्ख्या श्रूयते, पञ्चशब्दद्वयदर्शनात् । त एते पञ्चपञ्चकाः पञ्चविंशतिः सम्पद्यते । तथा च श्रुतिप्रसिद्धया पञ्चविंशतिसङ्ख्यया तेषां स्मृतिप्रसिद्धानां पञ्चविंशतितत्त्वानामुपसङ्ग्रहात्प्राप्तं श्रुतिमत्त्वं प्रधानादीनां इत्यत्रोच्यते ।

न सङ्ख्योपसङ्ग्रहादपि प्रधानादीनां श्रुतिमत्त्वप्रत्याशा कर्तव्या । कस्मात् ।

नानाभावात् । नाना ह्येतानि पञ्चविंशतितत्त्वानि । नैषां पञ्चशः पञ्चशः साधारणो धर्मोऽस्ति, येन पञ्चविंशतेरन्तराले पञ्च पञ्च सङ्ख्या निविशेरन् । न ह्येकं निबन्धनमन्तरेण नानाभूतेषु द्वित्वादिकाः सङ्ख्या निविशन्ते ।

अतिरेकाच्च । अतिरेको हि भवत्यात्माकाशाभ्यां पञ्चविंशतिसङ्ख्यायाः । आत्मनो हि पञ्चविंशतावन्तर्भावे यस्मिन्नित्यधिकरणत्वोक्तिविरोधः । आकाशस्यापि पृथगुक्तिविरोधः ।

तस्मान्न प्रधानादीनां शाब्दत्वम्'' इति ।

अत्र वक्तव्यम्— किं पञ्चविंशतितत्त्वप्रक्रिया सर्वथाऽप्रामाणिकीत्यभिप्रायः, उत एतद्वाक्यं तत्परं न भवतीति । पक्षद्वयमप्यनुपपन्नमित्याह **यत्तदिति** ।

अनु०— यत्तत्त्रिगुणमव्यक्तं नित्यं सदसदात्मकम् ।
प्रधानं प्रकृतिं प्राहुरविशेषं विशेषवत् ॥

**सदसदात्मकं** कार्यकारणात्मकम् । अविशेषत्वादकार्यत्वात् **प्रधानं** विशेषवत्त्वात् कार्यत्वात् **प्रकृतिं प्राहुः** ।

विशेषवदित्यस्य विवरणम् **पञ्चभिरिति** ।

पञ्चभिः पञ्चभिर्ब्रह्म चतुर्भिर्दशभिस्तथा ।
एतच्चतुर्विंशतिकं गणं प्राधानिकं विदुः ॥
इति भागवते प्राह विद्याधीशः स्वयं प्रभुः ॥ ३ ॥





**'पञ्चभिः महाभूतैः, पञ्चभिः** तन्मात्राभिः, **चतुर्भिः** महदहङ्कारमनोबुद्धिभिः, **दशभिः** इन्द्रियैश्च, **ब्रह्म** पूरितम्, **एतच्चतुर्विंशतिकं गणं**, प्रधानकार्यं, **विदुः'** इति सूत्रकृतैव ग्रन्थान्तरे पञ्चविंशतितत्त्वानां प्रतिपादितत्वान्न तावदाद्यः कल्पः ॥ अनुवादोऽयमिति चेत् । किं प्रमितस्योत कल्पितस्य । आद्ये तत्प्रमाणैरेव सिद्धिस्तत्त्वानाम् । न द्वितीयः वैयर्थ्यात् । दूषणार्थमिति चेन्न तदभावात्, न हि ग्रन्थान्तरे अनुवादो ग्रन्थान्तरे दूषणमिति सम्भवति।

**न द्वितीयः विरोधाभावात् ।**

**परि०— पञ्चसङ्ख्याविषयेति** । पञ्चजना इति समाहारसमासं प्राप्ता या पञ्चसङ्ख्या तद्विषयकेत्यर्थः । **पञ्चविंशतिरिति** । पञ्चपञ्चफ(पू)ल्य इत्यत्र यथा पञ्चविंशतिफ(पू)लाः सम्पद्यन्ते तथेति भावः । **स्मृतिप्रसिद्धानामिति** । साङ्ख्यतन्त्रप्रसिद्धानामित्यर्थः । **इत्यत्रेति** । पूर्वपक्ष इत्यर्थः । **नैषां पञ्चशः साधारणो धर्मोऽस्तीति** । पञ्चजनाः पञ्चेत्युक्ते कादिवर्गपञ्चकवत् पञ्चजनवर्गपञ्चकं प्रतीयते । तत्र पञ्चसु वर्गेषु पञ्चशः सङ्ग्राहकाः पञ्च साधारणधर्मा न सन्ति । यथा कादिवर्गेषु कण्ठ्यत्वतालव्यत्वमूर्धन्यत्वदन्त्यत्वौष्ठ्यत्ववदित्यर्थः । **पञ्चसङ्ख्या इति** । पञ्चसङ्ख्याकानि तत्त्वानि पञ्च निविशेरन्नित्यर्थः । साङ्ख्यतन्त्रोक्तपञ्चविंशतिरेव तत्त्वानि नात्र प्रतीयन्ते यस्मिन्निति निर्दिष्टस्य आत्मन 'आकाशश्च' इति निर्दिष्टस्याकाशस्य चाधिकस्य प्रतीतेः । **तथा च कथं** साङ्ख्यप्रसिद्ध-तत्त्वानामप्रत्यभिज्ञानेन शाब्दत्वं प्रधानादीनां मन्यस इति भावेन सूत्रशेषार्थं परोक्तमनुवदति **अतिरेकाच्चेति** । शाब्दत्वमितीतिशब्दस्य इति व्याचक्षत इति पूर्वेणान्वयः । सदसदात्मकमित्यत्र हेतुत्वेनाविशेषं विशेषवदित्येतद्योजयति **अविशेषत्वादिति** । विधेयाप्रतीतेराह **प्रकृतिं प्राहुरिति** । हेतुद्वयपूर्वं साध्यप्रदर्शनमेतदित्येके । **आद्यः कल्पः** अप्रामाणिकत्वपक्ष इत्यर्थः । ननु तदभावा-दित्युक्तदूषणाभावोऽसिद्धः । न सङ्ख्येतिसूत्रेण दूषणस्य क्रियमाणत्वादित्यतो नेदं सूत्रं तत्रोक्तस्य दूषणपरं भवितुमर्हतीति भावेनाह **न हीति** । एतद्वाक्यं तत्परं नेति कल्पं निराह **न द्वितीय इति** ।

**गु०दी०— न हि ग्रन्थान्तर** इत्यत्र भागवतेऽनुवादो ब्रह्मसूत्रे निराकरणमिति न हि सम्भवतीत्यर्थः ।

**यादु०— स्मृतिप्रसिद्धानामिति** । 'मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त । षोडशकश्च विकारो न प्रकृतिः न विकृतिः पुरुष' इति साङ्ख्यस्मृतिप्रसिद्धानामित्यर्थः । **नैषां पञ्चशः पञ्चशः साधारण इति** ।





अत्रात्माकाशयोः पृथग्ग्रहणात् तौ विहायैव पञ्चविंशतिरुक्ता । तस्यां च नावान्तरत्वेन पञ्चसङ्ख्यानिवेशः सम्भवति । शब्दादिपञ्चके तन्मात्रत्वरूपसङ्ग्राहकानुगतधर्मसद्भावेऽपि तदितरपञ्चकचतुष्टये तदभावात् । न खलु सत्त्वरजस्तमोमहदहङ्काराणामेकः क्रिया वा गुणो वा द्रव्यं वा जातिर्वा धर्मः पञ्चतन्मात्रादिभ्यो व्यावृत्तः सत्त्वादिषु चानुगतः कश्चिदस्ति । नापि पृथिव्यप्तेजोवायुघ्राणानाम् । नापि रसनचक्षुस्त्वक्श्रोत्रवाचाम् । नापि पाणिपाद-पायूपस्थमनसामित्यर्थः । **अतिरेकाच्चेति** । न प्रधानादीनां श्रुतिमत्त्वप्रत्याशा कर्तव्येत्यन्वयः । तत्त्वसङ्ख्यातिरेकश्च सिद्धान्तविरुद्ध इति भावः । ब्रह्मेत्यनुवादेन पूरितमिति व्याख्यानम् । तथा च प्राधानिके गणे चतुर्विंशतित्व-सङ्ख्या एभिस्तत्त्वैः पूरितेति भावः । **अनुवादोऽयमिति** । कपिलदेवहूतिसंवादानुवादोऽयं सूत्रकारस्य अतः स्वार्थे न तात्पर्यमस्य वचनस्येति भावः ।

**वं०प०— श्रुतिमत्त्वं** शब्दप्रतिपाद्यत्वम् । **द्वित्वादिका इति** । यथा 'विधिप्राणनाथौ इत्यादि-तारतम्यप्रकरणे । यथा वा लोके एतौ द्वौ इमे त्रय इति द्वित्वादिका सङ्ख्या साम्यादिनिमित्तं विना न दृष्टा तथा पञ्चत्वादिसङ्ख्येत्यर्थः । **आत्मनः** जीवस्य । आकाशस्यापि पञ्चविंशतावन्तर्भाव इति वर्तते । **पूरितं** पूर्णं सम्बद्धमित्यर्थः । प्रधानकार्यमिति प्राधानिकमित्यस्य व्याख्यानम् । **अयं** भागवतोक्तोऽर्थः । अत्रानुवादेऽपि ग्रन्थान्तरेऽस्ति दूषणमित्यत आह **न हीति** ।

**आनन्दः— एकं निबन्धनमिति** । एकमवच्छेदकमित्यर्थः । **ब्रह्म** इत्यस्यार्थः **पूरितमिति** । **विरोधाभावादिति** । एतेषां तत्त्वानां एतद्वाक्यप्रतिपाद्यत्वे विरोधाभावादित्यर्थः ।

**श्रीनिधि०— निबन्धनम्** अवच्छेदकम् । ग्रन्थान्तरे पञ्चविंशतितत्त्वानामिति । अत्र जीवसाहित्येन पञ्चविंशतित्वमभिमतमिति भावः । **ग्रन्थान्तरे अनुवादो ग्रन्थान्तरे दूषणमिति** । भागवते अनुवादः सूत्रे दूषणं न सम्भवतीति भावः ।

**शे०वा०—** ननु पञ्चजनाः वाक्यशेषस्थाः प्राणादयः पञ्च अव्याकृताख्याश्च आकाशो यस्मिन् प्रतिष्ठितः तमेव ब्रह्म अमृतात्मानं मन्य इत्यर्थकत्वान्मन्त्रस्य कथमस्मान्मन्त्रात् प्रधानप्राप्तिरित्यत आह **अस्मिन्मन्त्र इति** । तथापि कथं साङ्ख्यमतप्रसङ्ग इत्यत आह **एत इति** । अत्र पञ्चविंशतिसङ्ख्यादर्शनेऽपि कुतः साङ्ख्यीयतत्त्वसिद्धिरित्यतः सङ्ख्यैव सङ्ख्येयाकाङ्क्षास्मृतिसिद्धतत्त्वानि सङ्गृह्णातीत्याह **तथा चेति** । **स्मृतिप्रसिद्धानामिति** । 'मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त । षोडशकश्च विकारो न प्रकृतिः न विकृतिः पुरुषः' इति साङ्ख्यस्मृतिप्रसिद्धानामित्यर्थः । श्रुत्युक्तसङ्ख्ययाऽपेक्षितसङ्ख्येयविशेषार्पकत्वं स्मृतेर्युक्तं तयोर्मूलिमूलभावादित्याह **कस्मादिति** । सौत्रं हेतुमुपादाय व्याचष्टे **नानेति** । नानात्वमेव न विरुद्धत्व-मित्याशङ्क्याभिप्रेतं नानात्वमाह **नैषामिति** । किं तेनानुपयोगिनेत्यत आह **येनेति** । पञ्चविंशतिसङ्ख्यान्तराले पञ्चानामपि पञ्चसङ्ख्यानां भावात्तथोक्तिरित्याशङ्क्याह **न हीति** । त्रयस्त्रिंशद्वै देवा इति महासङ्ख्यायामष्टौ वसव





इत्याद्यवान्तरसङ्ख्याऽसाधारणधर्माधीना दृष्टा । तथा च अत्र असाधारणधर्मादृष्टेर्महासङ्ख्यायां न अवान्तर-सङ्ख्यासिद्धिरित्यर्थः । न प्रधानादीनां श्रुतिमत्त्वप्रत्याशा कर्तव्येत्यत्र सूत्रावयवं हेत्वन्तरमाह **अतिरेकाच्चेति** । तदेव स्फोरयति **अतिरेको हीति** । **अतिरेको** अनिर्वाहः । तत्कथमित्यतः श्रुतावात्माकाशयोः पृथगभिधानादिति भावेनोक्तम् **आत्माकाशाभ्यामिति** । पृथगुपात्ताभ्यामिति शेषः । ततश्चायमर्थः । आत्माकाशयोः पृथगग्रहणे श्रुतौ जनशब्दोक्तानां तत्त्वानामात्माकाशाभ्यां सह पञ्चविंशतित्वेन पञ्चपञ्चेत्युक्तपञ्चविंशतित्वसङ्ख्यानिर्वाहात् पञ्च-पञ्चजना इत्युक्तिसम्भवेऽपि यस्मिन्निति वाक्ये आत्माकाशयोः पृथगभिधानेन तयोः पञ्चविंशत्यनन्तर्भविन तद्व्यतिरिक्तजनशब्दोक्ततत्त्वानां त्रयोविंशतित्वेन पञ्चपञ्चेत्युक्तपञ्चविंशतित्वसङ्ख्याया अनिर्वाहात् त्रयोविंशतिर्जना इत्येव स्यान्न पञ्चपञ्चजना इति । न च आत्माकाशव्यतिरिक्तजनशब्दोक्तत्रयोविंशतितत्त्वेषु सत्त्वरजस्तमोरूप-मूलप्रकृतिभागविवक्षायां पञ्चविंशतित्वसङ्ख्यानिर्वाहात् पञ्च पञ्चजना इति युक्तो निर्देश इति वाच्यम् । तथा सति पञ्चविंशत्यनन्तर्भूताभ्यामात्माकाशाभ्यां तत्त्वानां सप्तविंशतित्वप्रसक्त्या पञ्चविंशतितत्त्वानीति स्वसिद्धान्त-व्याकोपः स्यादिति । ननु पञ्चविंशत्यन्तर्भूतयोरेवाकाशात्मनोरात्माकाशशब्दाभ्यां ग्रहणान्न पञ्चविंशतितत्त्वानीति सिद्धान्तव्याकोप इत्यत आत्मनः पञ्चविंशत्यन्तर्भावे दोषमाह **आत्मनो हीति** । **विरोध इति** । आत्मन आत्माधारत्वांशस्य बाधितत्वादिति भावः । आकाशस्यापि पञ्चविंशत्यन्तर्भावे तमाह **आकाशस्यापीति** । **पृथगुक्तीति** । यद्यप्यात्मपक्षेऽप्ययं दोषस्समस्तथाऽप्याधाराधेयस्यातिशयितत्वविवक्षया पृथगुक्तेरुपपादयितुं शक्यत्वात् तत्र तमनभिधाय आकाशस्याप्याधेयतया आधेयान्तरादनतिशयितत्वेनोक्तरीत्या पृथगुक्तेरुपपाद-यितुमशक्यत्वात् अत्रैवैतदुद्भावनं कृतमिति ध्येयम् । 'व्यक्ताव्यक्तात्मकं यत्तत् विद्यात् सदसदात्मकम्' इति तात्पर्यं मनसि निधाय सदसदात्मकमित्येतद्व्याचष्टे **कार्यकारणात्मकमिति** । यद्वा 'सदभिव्यक्तरूपत्वात् कार्यमित्युच्यते बुधैः । असदव्यक्तरूपत्वात् कारणं चापि शब्दितम्' इत्यभिधानं मनसि निधायेदं व्याख्यानम् । 'कार्यतः सा प्रधानत्वात् प्रधानमिति कीर्त्यते । अविशेषा ह्यकार्यत्वात्' इत्येतत्तात्पर्यं मनसि निधायाह **अविशेषत्वादिति** । अनेन हिशब्दो हेत्वर्थः । ततश्च स्वीकार्यपेक्षया प्रधानत्वेऽपि स्वयं यस्य कार्यं तदपेक्षया अप्रधानत्वात् कथं प्रधानत्वोक्तिरित्यतः अविशेषमित्युक्तं मूले । तद्व्याख्याति **अविशेषा ह्यकार्यत्वादिति** । अकार्यत्वादविशेषा यतोऽतः प्रधानमित्युच्यते इत्यर्थ इति तात्पर्यं व्याख्यातम् । 'विशेषः कार्यमुद्दिष्टं विशेषो दृश्यते यतः' इति तात्पर्यं मनसि निधायाह **विशेषवत्त्वादिति** । **विशेषवदित्यस्य विवरणमिति** । अनेन 'तद्विवृणोति पञ्चभिः' इतीत्युत्तरवाक्यमवतारितं भवति । 'महाभूतानि पञ्चैव' इत्युत्तरवाक्यानुसारेण पञ्चभि-रित्येतद्व्याचष्टे **महाभूतैरिति** । 'तन्मात्राणि च तावन्ती'त्युत्तरवाक्यानुसारेणाह **पञ्चभिस्तन्मात्राभिरिति** । 'मनोबुद्धिरहङ्कारश्चित्तमित्यन्तरात्मनः' इत्युत्तरग्रन्थानुसारेणाह **चतुर्भिरित्यादि** । यद्यप्यत्र चतुर्भिरित्येतद्विव-रणरूपे 'मनोबुद्धिरहङ्कारश्चित्तम्' इत्यत्र चित्तस्योपात्तत्वात् तदनुसारेण मनोबुद्धिरहङ्कारचित्तैरिति वाच्यम्, तथापि 'यत्तत्सत्त्वगुणं स्वच्छं शान्तं भगवतः पदम् । यदाहुर्वासुदेवाख्यं चित्तं तन्महदात्मकम्' इत्युत्तरत्र भागवत एवोक्तत्वात् तदनुसारेण यत् वासुदेवाख्यं भगवत्स्वरूपं ततो महदात्मकं चित्तं जायते इति तात्पर्यानुसारेण च तथोक्तमित्यवधेयम् । 'इन्द्रियाणि दश श्रोत्रे'त्येतदनुसारेणाह **दशभिरिति** । ब्रह्मेत्यनुवादेन पूरितमिति व्याख्यानम् ।





प्राधानिके गणे चतुर्विंशतित्वसङ्ख्या एभिस्तत्त्वैः पूरितेति भावः । **अनुवाद इति** । कपिलदेवहूतिसंवादस्यानुवाद एवायं सूत्रकारस्येत्यर्थः । ततश्च स्वार्थे तात्पर्याभावान्नानेन वचनेन पञ्चविंशतित्वप्रक्रियायाः प्रामाणिकत्वसिद्धिरिति भावः । ननु न सङ्ख्येत्यस्यैव तद्दूषणत्वान्न दूषणाभाव इत्यत आह **न हीति** । एतद्वाक्यं तत्परं नेति द्वितीयं दूषयति **न द्वितीय इति** । अस्माकमिति शेषः । यस्मिन्नित्यादेर्भगवत्परत्वेन प्रधाने तात्पर्याभावस्य अस्माकमविरुद्धत्वादित्यर्थः । उपलक्षणं चैतत् । यस्मिन्निति वाक्यस्य प्रधाने तात्पर्याभावमात्रेण प्रधानस्य अशब्दत्वासिद्धेश्चेत्यपि द्रष्टव्यम् ।

**वा०२०— वाक्यशेषस्था इति** । प्राणस्य प्राणमुत चक्षुष इति वाक्यशेषस्था इत्यर्थः । स्वरीत्येदं व्याख्यानं शङ्कितं **स्मृतिप्रसिद्धानामित्यर्थ इति** । प्रकृतिमहदहङ्कारादि रूपाणां स्वरूपं टीकायामुत्तरत्र स्पष्टं भविष्यति इत्याह **कस्मादितीति** । शङ्कात्वस्य स्पष्टत्वमाश्रित्य **इत्याह** इत्येवोक्तम् । **इत्याशङ्क्त** इति पाठस्तु सुगम एव । **नानात्वमेवेति** । नानात्वमात्रमित्यर्थः । **विरुद्धमिति** । विरोधीत्यर्थः । विरोधस्योभयाश्रयत्वाद्विरुद्धमित्यपि युक्तम् । विरोधीति पाठस्तु सुगम एव । नानात्वे विद्यमानेऽपि सङ्ख्योपसङ्ग्रहसम्भवेन अप्रयोजकत्वादिति भावः । **अभिप्रेतमिति** । केवलनानात्वस्याप्रयोजकत्वेऽपि अनुगतधर्मराहित्यविशिष्टस्य प्रयोजकत्वमभिप्रेतमित्यर्थः । आनन्दगिर्यनुसारेणायं टीकाग्रन्थः ।

**असाधारणधर्मादृष्टेरिति** । वसुत्वरुद्रत्वादेरसाधारणस्यानुगतस्याष्टैकादशादिषु सत्त्ववत् पञ्चपञ्चसु व्यूहकरणप्रयोजकतत्सङ्ख्याप्रयोगनिमित्तसाधारणधर्मप्रतीत्यभावादित्यर्थः । प्राक्साधारणत्वेन धर्मो निषिद्धः । इदानीं तु पञ्चस्वेकः साधारणपदोक्तानुगत्वात् स एव साधारणः पञ्चकान्तरव्यावृत्तो धर्मो नास्तीति प्रागुक्तसाधारणत्वान्तर्भाविनैव असाधारणत्वं धर्मस्य निषिद्ध्यत इति साधारणासाधारणपदयोः न विरोधः शङ्क्यः । न वा मूलविसंवादः शङ्क्यः । उक्तं च भामत्यां— 'नैषां पञ्चशः पञ्चशः साधारणो धर्मोऽस्तीत्युक्त्वा न खलु सत्त्वरजस्तमो महदहङ्काराणामेकः क्रिया वा गुणो वा द्रव्यं वा जातिर्वा पञ्चतन्मात्रादिभ्यो व्यावृत्तः सत्त्वादिषु चानुगतः क्वचिदस्तीत्यादी'ति ज्ञेयम् । पञ्चविंशतिसङ्ख्याया अनिर्वाह आधिक्यप्रयुक्त इति भ्रान्तिपरिहाराय तस्य न्यूनताप्रयुक्तत्वमिति दर्शयितुमभिप्रायमाह **ततश्चायमिति** ।

जना इतीत्यस्येति स्यादिति पूर्वेणान्वयः । एवं न्यूनताप्रयुक्तमतिरेकव्युत्पाद्याधिक्यप्रयुक्तमपि तं व्युत्पादयिषुः अर्थान्तरपरिग्रहे वा तत्त्वसङ्ख्यातिरेकः सिद्धान्तविरुद्धः प्रसज्येतेत्येतद्भाष्यविवरणरूपसत्यप्यात्माकाशयोर्व्यतिरेचने मूलप्रकृतिभागैरित्यादिभामत्यनुसारेणाह **न चात्माकाशेति** । 'व्याकोपः स्यादिती'त्यत्रत्येतिशब्दस्य 'इत्ययमर्थ' इति पूर्वेणान्वयः । यत्र भामत्यामुक्तं मूलप्रकृतित्वमात्रेणैकीकृत्य सत्त्वरजस्तमांसि पञ्चविंशतित्वोपपत्तेः । हिरुग्भावे (?) तु तेषां सप्तविंशतित्वाविरोध इति । तत्रेदं वक्तव्यम् । अत्र ह्यात्माकाशयोः पञ्चविंशत्यनन्तर्भाविन त्रयोविंशतित्वापादने मूलप्रकृतिभागकल्पनया भवता सामञ्जस्यमाशङ्क्य तथा सति पञ्चविंशतिजनसङ्ख्यानिर्वाहेऽपि वस्तुतः सिद्धान्ते पञ्चविंशतितत्त्वप्रक्रियाभङ्ग एव आत्माकाशमेलनेन जनानां सप्तविंशति-





त्वापत्तेरिति शङ्कापरिहाराय मूलप्रकृतित्वेनैकीकाराश्रयणेन पञ्चविंशतित्वमाश्रित्य हिरुग्भावेन (?) सप्तविंशतित्वाश्रयणं कृतं तत्कथं सङ्गतम् । मूलप्रकृतितत्वेन मेलने त्रयोविंशतित्वं जनानां प्रसज्यते । पृथग्भावे सप्तविंशतित्वं तत्त्वानां प्रसज्य इति व्यवस्थाया दूषणे उक्ते मेलनेन पञ्चविंशतित्वस्यामेलनेन सप्तविंशतित्वस्य चाश्रयणेनाविरोधोक्त्ययोगात् पञ्चविंशतित्वस्य तत्त्वे उपपादनानुसारेण जनानां न्यूनत्वापरिहारादिति । अत एव निरीश्वरसाङ्ख्यमते पञ्चविंशतितत्त्वनिर्वाहाय श्रुतिस्मृतिरूपस्थलभेदेन व्यवस्थां टीकाकृद्भिर्भावयिष्यति । **तात्पर्यं मनसीति** । तृतीयस्कन्धीयसप्तविंशत्यध्यायगत तत्त्रिगुणमित्येतद्भागवततात्पर्यमित्यर्थः ।

ननु व्यक्ताव्यक्तात्मकमिति तात्पर्यवाक्यस्य न क्रमेण सदसच्छब्दार्थत्वमप्यवधारयितुं शक्यम् । वाक्यशेषे 'असर्गा केवला व्यक्ता सिसृक्षुरुभयात्मिका । व्यक्तैव कार्यरूपा तु प्रकृतिस्त्रिविधा मते'ति त्रिप्रकारप्रकृतिप्रतिपादनेन अव्यक्ताव्यक्तात्मकमित्यस्य तृतीयविधापरत्वेनानुपपत्तेः । ततोऽव्यक्तं व्यक्तं व्यक्ताव्यक्तं चेति त्रिप्रकारप्रतिपादकवाक्यशेषानुसारेण व्यक्ताव्यक्तात्मकं विद्यादिति पूर्वभागस्यापि व्यक्तं सत् अव्यक्तमसत् व्यक्ताव्यक्तं सदसदिति विधात्रयप्रतिपादकत्वमित्याश्रयणीयम् । ततो न कार्यकारणात्मकमित्यस्यापि विधात्रयप्रतिपादकत्वं निर्णेतुं शक्यम् । शक्यत्वे वा बहूपपादनसापेक्षतेत्यतो व्यक्ताव्यक्तात्मकमित्यस्यैकविधाप्रतिपादकत्वद्विधान्तरप्रतिपादकोक्तरीत्या स्पष्टैव । तथात्वेन स्पष्टत्वे सन्तोषे तूक्ततात्पर्यस्यैकविधाप्रतिपादकत्वसाधकत्वेऽपि विधान्तरपरत्वज्ञापकं प्रमाणान्तरमेव भविष्यति इत्याशयेन सदसच्छब्दौ कार्यकारणयोः क्रमेणाभिधायकावित्यत्रापि प्रमाणान्तरमाह **यद्वा सदिति** । अथवोक्तरीत्या विधात्रयपरत्वेन कार्यकारणात्मकस्यापि प्रयोजना स्पष्टैव तथापि ततोऽपि स्पष्टं विधाद्वयसमर्पकं प्रमाणमाहेति योज्यम् । अत्र यद्वेत्यस्य किञ्चेत्यर्थः । निपातसमुदायः समुच्चयार्थो वा । तथा चाभिधानं च मनसि निधायेदं व्याख्यानमिति तात्पर्यस्याभिधानेन समुच्चयोऽङ्गीकृतः । ततश्चैवं सूचितम् । व्यक्ताव्यक्तात्मकमिति तात्पर्यानुसारेण विधात्रयं सिद्ध्यति कार्यात्मकं कार्यकारणात्मकं चेति तात्पर्यार्थो विचारावकाशशङ्कया स्पष्टम् । तत्त्रयाप्रतीतौ वा विधाद्वयं अभिधानादिना सिद्धमिति मिलित्वा विधात्रयपरत्वं तात्पर्याभिधानप्रमाणाभ्यां सिद्ध्यतीति कार्यकारणात्मकमित्यस्योक्तरीत्या त्रितयमप्यर्थ इति । एतेन समानार्थकप्रमाणयोरेकस्याभिधानानन्तरं द्वितीयस्य यद्वेति पक्षान्तरतयाभिधानायोग इत्याद्याशङ्कनं निरस्तमिति बोध्यम् । यद्वा व्यक्ताव्यक्तात्मकमिति तात्पर्यदिशा सदसदात्मकमित्यस्य त्रिरूपत्वपरत्वं प्रतीयते । कार्यकारणरूपेण द्विरूपत्वमपि स्थलान्तरे उच्यते यथा ... अतस्तदनुसारेण द्विरूपत्वसमर्पकतया व्यांख्यातुमाह **यद्वेति** । अनेन हिशब्द इत्यादेर्व्याख्यातमित्युत्तरेणान्वयः । **अनेनेति** । अस्येति तात्पर्यं व्याख्यातमिति वक्ष्यमाणेनान्वयः । **मूल इति** । भागवतश्लोक इत्यर्थः । अकार्यत्वादविशेषेति पाठः । नञ्त्यागो लेखकदोषात् । विशेषो दृश्यते यत इति तात्पर्यपाठः । अन्यादृशस्तु लेखकदोषात् । **उत्तरवाक्यानुसारेणेति** । उत्तरश्लोकानुसारेणेत्यर्थः । भूरापोऽग्निर्मरुन्नभ इति वाक्यशेषः । **उत्तरवाक्येति** । तदुत्तरार्धेत्यर्थः । गन्धादीनि मतानि मे इति वाक्यशेषः । **उत्तरग्रन्थेति** । चतुर्धा लक्ष्यते भेदो वृत्त्या लक्षणरूपयेति वाक्यशेषः । **चतुर्भिरित्येतदिति** । भागवतस्थचतुर्भिरित्येतदित्यर्थः । मनोबुद्ध्यहङ्कार-





चित्तैरिति पाठः । बुद्धिपदे विभक्तिर्लेखकदोषात् । **उत्तरत्रेति** । उक्ताध्याय एवोत्तरत्रेत्यर्थः । वासुदेवाख्यं चित्तमिति सामान्याधिकरण्यभ्रान्तिवारणाय च तात्पर्यानुसारेणेत्युक्तम् । प्रमाणान्तरं च तात्पर्ये उक्तम् । 'महत्तत्त्वगतो योऽसौ वासुदेवाभिधो हरिः । स चित्तजनकः प्रोक्तः प्राणिनां हि पृथक्पृथगिति चे'ति । इन्द्रियाणि दशश्रोत्रमित्येतदिति पाठः । श्रोत्रेत्यविभक्तिकोऽपि भागवते पाठोऽस्ति । तदनुसारेण श्रोत्रेत्यनुसारेणेति पाठोऽपि युक्त एव । 'त्वग् दृग् रसननासिकम् । वाक् करौ चरणौ मेढ्रं पायुर्दशम उच्यते' इति वाक्यशेषः । **ग्रन्थान्तरे पञ्चविंशतितत्त्वानामिति** मूलम् । ननु यानि ग्रन्थान्तरपञ्चविंशतितत्त्वानि प्रतिपादितानि यानि च सङ्ख्यास्मृतिसिद्धानि तेषु पञ्चभूतपञ्चमात्रादशेन्द्रियेषु विसंवादाभावेऽप्यस्ति विंशत्यतिरिक्तेषु विसंवादः । तथा हि । विंशत्यतिरिक्तत्वेन सङ्गृह्येषु यद्यपि प्रधानमहदहङ्कारमनोविषये विसंवादो नास्ति तथाप्यस्ति बुद्धिपुरुषविषये विसंवादः । भागवते प्रधानादिशब्दोक्तानां साङ्ख्यस्मृतौ मूलप्रकृत्यादिशब्दोक्तप्रधानमहदहङ्कारमनोरूपैः सङ्ग्रहणे चतुर्विंशत्या उभयसम्मतत्वप्राप्तावपि पञ्चविंशकत्वेन साङ्ख्यस्मृतिगणितानुभयरूपपुरुषस्य भागवते तत्र तथागणितबुद्धितत्त्वस्य च साङ्ख्यस्मृतावगणनात् ।

यश्च भागवते 'यः कालः पञ्चविंशक' इति वक्ष्यते स तु परमात्मैव । न तु जीवरूपः पुरुषः तत्परिग्रहे वा तत्त्वानां षड्विंशतित्वप्रसङ्ग एव । तथा च प्रधानं प्रधानिको गणश्चतुर्विंशतिक इति पञ्चविंशतिप्रतिपादिकं भागवतवाक्यम् । साङ्ख्यस्मृतिस्तु प्रधानमहदहङ्कारमनःपुरुषपञ्चमात्रादिरूपपञ्चविंशतिप्रतिपादिकेति कथं साङ्ख्योक्तप्रक्रिया सूत्रकारसम्मता वस्तुतो भागवते प्रधानपरित्यागेन कालाख्यभगवन्मूलनेन प्रधानादिकचतुर्विंशतिगण एव पञ्चविंशतित्वेन गणितः । साङ्ख्यस्मृतौ तु प्रधानमेलनेन महदहङ्कारमनःपञ्चमात्रादिगण एव पञ्चविंशतित्वेन गणित इति न प्रधानांशेऽपि तयोस्संवादः बुद्धिशब्देन प्रधानग्रहणमिति तु शङ्कामात्रम् । प्रधानस्य प्राक्कारणेन प्रतिपादिततया तस्य प्राधानिकशब्दोक्ततत्कार्यबुद्धिरूपत्वानुपपत्तेः । तत्त्वान्तरसिद्धिश्च सिद्धान्तेन स्यात्, यस्याव्यक्तं शरीरं यस्याहङ्कारः शरीरमित्यादिश्रुतिभिरव्यक्तादेरिव यस्य बुद्धिः शरीरमित्यादिश्रुत्या बुद्धितत्त्वस्यापि सिद्धान्ते सिद्धिमङ्गीकृत्य चतुर्विंशतेर्गणनात् । तदेवं विंशत्यतिरिक्तानां स्वरूपनिर्धारणायां विसंवादान्न तदतिरिक्तपञ्चकसिद्धिरिति न पञ्चविंशतिप्रक्रिया भागवतसम्मत्या प्रामाणिकीत्यभ्युपगन्तुं शक्यमिति चेदत्र ब्रूमः । न वयं सर्वांशे पञ्चविंशति क्रियायाः साम्यमाश्रित्य भागवतसम्मततामाचक्ष्महे अपि तु क्वचिदंशे विसंवादेऽपि महदहङ्कारमनोमात्रादि त्रयोविंशतितत्त्वेषु संवादस्तावदस्तीति तमाश्रित्यैव तत्सम्मतत्वमिति । तथा च प्रधानबुद्धिपुरुषरूपांशत्रये विसंवादमल्पत्वादविवक्षित्वा भूयः सुसंवादमेव च विवक्षित्वा भागवतसम्मतिरनुव्याख्यानकृतोक्ता । उक्तं च अवतारावसरे 'किं सर्वथा प्रामाणिकीत्यभिप्राय' इति । तत्र च सर्वथेत्यनेन क्वचिदंशे प्रमाणविसंवादवत् तदितरस्मिन्सर्वत्र प्रमाणसंवादो नास्तीति प्रकारसूचनात् । अन्यथा सर्वथेत्यस्य व्यर्थताप्रसङ्गात् । सर्वथेत्यस्य तदर्थकत्वे सन्तोषे चाल्पवैषम्यविवक्षा न कृतेत्येव परिहारे बाधकाभावाच्च । न हि समाख्यादिस्थले मात्रयापि वैषम्यं नास्तीति सचेतनो वक्तुमर्हति । एतेन विंशत्यतिरिक्तत्वस्य सङ्ग्राहकत्वानुपपत्तिरपि परिहृता । कालाख्यभगवन्मेलनेन पञ्चविंशतेर्भागवतेऽपि सुलभतया विंशत्यतिरिक्तपञ्चकलाभोपपत्तिः ।





साङ्ख्यस्मृतौ प्रधानपुरुषमेलनेन पञ्चविंशते सुलभत्वाच्च तल्लाभोपपत्तिः । तथा च भागवतोक्तेषु तदितरत्वावच्छेदकत्वसद्भावेनाग्रे तत्प्रतिबन्ध्यभिधानमपि समञ्जसम् । एतेन स्मृतिपुराणोक्तपञ्चविंशतौ वैषम्यस्य सद्भावे का पञ्चविंशतिरिति निर्णयायोगे श्रुतेरपि पञ्चविंशतितत्त्वानुवादत्वानुपपत्तिः परास्ता । साङ्ख्यस्मृतिपुराणयोर्विसंवादांशौदासीन्येनैव पञ्चविंशतिनिर्णयायोगे श्रुतेरपि पञ्चविंशतितत्त्वानुवादत्वानुपपत्तेः । एवमेव चन्द्रिकोक्तातिरिक्तानतिरिक्ताभिधानपक्षयोः पञ्चविंशतिनिर्वाहोपादानमपि संवादांशौदासीन्येनैवेति न तत्राप्यनुपपत्तिः । तस्मात्साधूक्तं ग्रन्थान्तरे पञ्चविंशतितत्त्वानां प्रतिपादितत्वादितीति । **कपिलेति** । तथा च तृतीयस्कन्धभागवते तदुभयोर्यः संवादः तस्यानुवाद एव सूत्रकृता क्रियते न तु पञ्चविंशतितत्त्वप्रक्रिया स्वतः प्रतिपाद्यत इत्यर्थः । अस्माकमविरोधादिति चन्द्रिकानुसारेण शेषं सम्पूर्य व्याख्याति **अस्माकमिति** । **शेष** इत्यादिना चन्द्रिकामनुकरोति ।

**स०व्र०— स्मृतिप्रसिद्धानामिति** । कापिलस्मृतिप्रसिद्धानामित्यर्थः । **पञ्चशः पञ्चशः साधारणो धर्म इति** । यथा पञ्चमहाभूतानि पञ्चतन्मात्रा एवं सर्वेषु तत्त्वानां पञ्चकेषु पञ्चत्वावच्छेदकीभूतो धर्मो नास्तीत्यर्थः । 'व्यक्ताव्यक्तात्मकं यत्तद्विद्यात् सदसदात्मकम्' इति भागवततात्पर्यं मनसि निधायाह **अविशेषत्वादिति** । अनेन हिशब्दो हेत्वर्थः । ततश्च, स्वकार्यापेक्षया प्रधानत्वे स्वयं यस्य कार्यं तदपेक्षया अप्रधानत्वात् कथं प्रधानत्वोक्तिरित्यतोऽविशेषमित्युक्तं मूले । तद्व्याख्याति **अविशेषा ह्यकार्यत्वादिति** । अकार्यत्वादविशेषा यतो अकार्यतः प्रधानमित्युच्यत इति अर्थ इति तात्पर्यं व्याख्यातं भवति । 'विशेषः कार्यमुद्दिष्टं विशेषो दृश्यते यतः' इति तात्पर्यं मनसि निधायाह **विशेषवत्वात्कार्यवत्वादिति** । 'महाभूतानि पञ्चैव भूरापोऽग्निर्मरुन्नभः' इत्युत्तरवाक्यानुसारेण पञ्चभिरित्येतद्व्याख्याति **महाभूतैरिति** । 'तन्मात्राणि च तावन्ति गन्धादीनां मतानि मे' इत्युत्तरवाक्यानुसारेणाह **पञ्चभिस्तन्मात्राभिरिति** । **चतुर्भिर्महदहङ्कारमनोबुद्धिभिरिति** । यद्यपि 'मनोबुद्धिरहङ्कारश्चित्तमित्यन्तरात्मन' इति वाक्यानुसारेण चित्तस्यैव ग्राह्यत्वात् महदहङ्कारमनोबुद्धिभिरित्ययुक्तम् तथापि 'यत्तत्सत्त्वगुणं स्वच्छं शान्तं भगवतः पदम् । यदाहुर्वासुदेवाख्यं चित्तं तन्महदात्मकम्' इत्यत्र भागवतवाक्यानुसारेण 'यत् वासुदेवाख्यं भगवत्स्वरूपं ततो महदात्मकं चित्तं जायत' इति तात्पर्यानुसारेण च महदहङ्कारमनोबुद्धिरित्युक्तमिति ध्येयम् । 'इन्द्रियाणि दश श्रोत्रत्वक्दृक्रसननासिका । वाक् करौ चरणौ मेढ्रं पायुर्दशम उच्यते' इति प्रमाणानुसारेणाह **दशभिरिति** । ब्रह्मशब्दार्थमाह **पूरितमिति** । ननु सूत्रकृता कपिलदेवहूतिसंवादस्यानुवादमात्रस्यैव क्रियमाणत्वेन तत्प्रतिपादने अतात्पर्यात् कथं तद्वचनेन पञ्चविंशतित्वप्रक्रियायाः प्रामाणिकत्वसिद्धिरित्याशयेन शङ्कते **अनुवादोऽयमितीति** । ननु तदभावादित्ययुक्तम् 'न सङ्ख्योपसङ्ग्रहादिति चेन्नानाभावात्' इत्यनेनैव दूषणस्य प्रतिपादितत्वादित्यत आह **ग्रन्थान्तर इति** । **न द्वितीय इति** । एतद्वाक्यं तत्परं नेति द्वितीयो नेत्यर्थः ।

**स०ना०— यत्तत्त्रिगुणमव्यक्तमिति** मूलसुधायाम् । पञ्चसतपञ्चवर्षाणि नववर्षम् । न क्रतुरित्यर्धेन स्थानान्तरगतेन द्वादशवार्षिकी अनावृष्टिरुच्यते । व्रतमेतदनुष्ठेयं नव वर्षाणि पञ्च चेति ब्रह्मकाण्डगतेन





चतुर्दशवर्षपर्यन्तरं व्रतस्यानुष्ठेयत्वमुच्यत इति बोध्यम् । पातञ्जलैरीश्वरस्यानङ्गीकृतत्वात् इति । नात्मना पञ्चविंशतिसङ्ख्याया अतिरेक इति भावः । आकाशेनाप्यतिरेक इत्याह **आकाशश्चेति** । पञ्चपञ्चजना आकाशाद्या इति भावेन आकाशश्च प्रतिष्ठित इत्येतत् पञ्चपञ्चजना इत्यस्य विवरणरूपं व्याख्यानमित्युपपन्नत्वात् अतिरेक इति असत् इति सम्बन्धः । ततश्चैवं यस्मिन् पञ्चपञ्चजनाः सन्ति तं ब्रह्म पूर्णं मोक्षहेतुत्वादमृतं आततत्वादात्मन वर्गं विद्वानन्यो यो जीवः मृतो भवति मुक्तो भवतीति । अयं पञ्चपञ्चजनात्मको वर्गः न यादृशतादृशो मन्तव्यः अपि तु आकाशादिरेवेति भावे च उक्तमेव विवृणोति **आकाशश्च प्रतिष्ठित इति** । अस्मिन्वर्गे आकाशः चकाराद्वाय्वादिश्च प्रतिष्ठित इति अस्मिन्पक्षे अधिकरणतयात्मनोऽनङ्गीकारात् । आकाशश्चेत्यस्योक्तविवरणत्वाङ्गीकारात् नातिरेकः ।

**विट्ठल०— स्मृतिप्रसिद्धानामिति** । मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्तषोडशकश्च विकारो न प्रकृतिर्नापि विकृतिः पुरुष इति साङ्ख्यस्मृतिसिद्धानामित्यर्थः । **पञ्चशः साधारणो धर्म इति** । यथा पञ्चमहाभूतानि पञ्च तन्मात्रा इत्येवं पञ्चस्ववच्छेदकीभूतो धर्मो वर्तते नैवमेतेषां तत्त्वानां पञ्चसु पञ्चस्ववच्छेदकीभूतः पञ्चविधो धर्मोऽस्तीत्यर्थः । **निबन्धनमिति** । अवच्छेदकधर्मरूपकारणमन्तरेणेत्यर्थः । किञ्च साङ्ख्यतन्त्रोक्तपञ्चविंशतितत्त्वान्येवात्रोच्यन्त इति सर्वथानुपपन्नं यस्मिन्निति निर्दिष्टस्यात्मनः आकाशेत्युक्ताकाशस्य चात्राधिकस्य प्रतीतेः तयोरत्रान्तर्भावायोगात् । अतः साङ्ख्योक्ततत्त्वानामाकाशाभ्यामतिरेकाच्च न तेषामत्र प्रत्यभिज्ञानेन शाब्दत्वं प्रधानादीनामिति वक्तुं शक्यत इति सूत्रशेषार्थमभिप्रेत्याह **अतिरेकाच्चेति** । **अनुवादोऽयमिति** । कपिलदेवहूतीसंवादत्वेनानुवादत्वात्सूत्रकारस्य स्वार्थे तात्पर्यं नेति भावः । ननु दूषणाभावो सिद्धः पञ्चभिः पञ्चभिरित्यादिना भागवतेऽनूदितायाः पञ्चविंशतितत्त्वप्रक्रियायाः न सङ्ख्योपसङ्ग्रहादित्यादिना ब्रह्मसूत्रे दूषितत्वात् तथा च दूषणार्थमनुवाद इत्यत आह **न हीति** । तद्वाक्यं तत्परं नेति पक्षं निराह **न द्वितीय इति** । **बाधाभावादिति** । तत्परत्वे बाधकाभावादित्यर्थः ।

**६१ सु०— यदुक्तं 'नानाभावादि'ति, तदसत्, सूत्रकारस्यापि सङ्ग्राहकाभावेन पञ्चभिरित्याद्युक्त्यनुपपत्तिप्रसङ्गात् । अथ तत्र भूतत्वादीनि सङ्ग्राहकाणि सन्ति इति चेत्, तर्हि तान्येव भूतत्वतन्मात्रत्वज्ञानेन्द्रियत्वकर्मेन्द्रियत्वतदितरत्वानि (च) श्रुतावपि सन्तीति समानम् । न चायमस्ति नियमोऽन्तराले सङ्ग्राहकेण विना न सङ्ख्यानिवेशोऽस्तीति । 'पञ्च सप्त च वर्षाणि न ववर्ष शतक्रतुः', 'व्रतमेतदनुष्ठेयं वर्षाणि नव पञ्च च' इत्यादौ व्यभिचारात् ।**

**यदपि 'अतिरेकाच्च' इति, तदप्यसत्, पातञ्जलैरीश्वरस्याङ्गीकृतत्वात् । आकाशश्चेत्याकाशाद्या इति व्याख्यानोपपत्तेः ।**





**परि०— भूतत्वादीनीति** । भूतत्वतन्मात्रात्वेन्द्रियत्वोक्तविंशत्यन्यत्वादीनामित्यर्थः । **श्रुतावपीति** । पञ्चपञ्चजना इति श्रुतावपि पृथिव्यादिषु भूतत्त्वस्य शब्दादिषु तन्मात्रात्वस्य घ्राणादिषु बाह्यज्ञानेन्द्रियत्वस्य वागादिषु कर्मेन्द्रियत्वस्य महदहङ्कारमनःप्रकृतिपुरुषेषु उक्तविंशत्यन्यत्वस्य सम्भवात् सौत्रो नानाभावादिति हेतुरसिद्ध इति भावः । अङ्गीकृत्य चेदमुक्तमिति भावेनाह **न चायमिति** । **न ववर्षेति** । वृष्टिं न चकारेत्यर्थः । व्रतमिति वाक्यान्तरम् । **पातञ्जलैरीश्वरस्येति** । तथा चात्मनः पञ्चविंशतावन्तर्भावेऽपि तदन्यस्येश्वरस्य यस्मिन्नित्यधिकरणत्वोक्तिसम्भवादिति भावः । नन्वेवमप्याकाशस्य पृथगुक्तिविरोध इत्युक्तमित्यत आह **आकाशश्चेति** । आकाशाद्याः पञ्चपञ्चजनाः पञ्चविंशतिर्जना यस्मिन्प्रतिष्ठिता इति व्याख्यानोपपत्तेरित्यर्थः । चशब्देनेतरत्वसमुच्चय इति वा । आकाशशब्दोऽन्येषां तत्त्वानामुपलक्षणमिति वाऽभिप्रायः ।

**यादु०— अथ तत्र भूतत्वादीनीति** । अनुपदमेव तर्हीत्यत्र वक्ष्यमाणानीत्यर्थः । अत्र तदितरधर्मावच्छिन्नं प्रागुक्तं महदादिचतुष्टयमेव । उत्तरत्र तु प्रधानेन सहितं महदादिचतुष्टयं तथेति ध्येयम् । **पातञ्जलैरिति** । ईश्वरस्याङ्गीकृतत्वादित्येव पाठः । तथा च तन्मते पञ्चविंशतितत्त्वानीत्यस्य अनीश्वरतत्त्वविषयतया तत्रात्मपदोदितस्य जीवस्यान्तर्भावेऽपि तदतिरिक्तस्येश्वरस्य यस्मिन्नित्याधारत्वेनोक्तिसम्भवेन न तमादाय तत्त्वातिरेके अपसिद्धान्त इति भावः । नापि आकाशमादाय अतिरेक इत्याह **आकाशश्चेति** । एकवचनं बहुवचनार्थे । तच्चार्थकं कडारा इत्यादिवदिति भावः । चशब्दः अनुक्तसमुच्चायक इत्यभिप्रायेण आकाशाद्या इत्युक्तमित्यप्याहुः ।

**वं०प०— तान्येव** सङ्ग्राहकाण्येव । **तदितरत्वमिति** । उक्तविंशत्यन्यत्वमित्यर्थः । **पातञ्जलैरिति** । तथा च यस्मिन्निति भगवतो निर्देशो युक्तः । पञ्चविंशतित्वं तु जीवसाहित्येन ज्ञेयम् । **आकाशाद्या इति** । तथा च यस्मिन् पञ्च पञ्च जनाः प्रतिष्ठिताः सन्ति के ते पञ्चजना इत्याकाङ्क्षायामाकाशश्चेत्युक्तम् । आकाशाद्या इत्यर्थः । आकाशस्य भूतेषु ज्यैष्ठ्यात् आकाशाद्याः पञ्च जना यस्मिन् प्रतिष्ठिता इति पञ्च पञ्च जना इत्युक्तविवरणरूपत्वेनोपपत्तेरित्यर्थः ।

**आनन्दः—** ननु परमामित्यनेन स्वरूपपरमत्वस्योक्तत्वात्परमत इत्येतत्पुनरुक्तमित्यत उपसंहारपरतया व्याख्याति **तस्मादिति** (?) । तर्ह्याकाशस्य पृथगुक्तिः न घटत इत्यत आह **आकाशश्चेति** । तथा च तस्यापि पञ्चविंशतिष्वन्तर्भाव इति भावः ।

**शे०वा०— सूत्रकारस्यापीति** । यद्यप्यत्र भूतत्वादीनामुपसङ्ग्राहकाणां सत्त्वादित्येव वक्तव्यं तथापि तेषामुपसङ्ग्राहकत्वं परमुखेनैवानेतुं प्रतिबन्दीग्रहणमित्यवधेयम् । आशयमविद्वान् शङ्कते **अथेति** । भूतत्वादीत्यादिपदेन तन्मात्रत्वादीनां सङ्ग्रहः । अभिसन्धिमुद्घाटयति **तर्हीति** । **ज्ञानेन्द्रियत्वेति** । बाह्यज्ञानेन्द्रियत्वेत्यर्थः ।





पृथिव्यादिषु भूतत्वस्य शब्दादिषु तन्मात्रत्वस्य घ्राणादिषु बाह्यज्ञानेन्द्रियत्वस्य वागादिषु कर्मेन्द्रियत्वस्य महदहङ्कारमनःप्रकृतिपुरुषेषूक्तविंशत्यन्यत्वस्य सत्त्वान्न यस्मिन् पञ्चपञ्चेत्यादिश्रुत्युक्तमहासङ्ख्यायाम् अवान्तर-सङ्ख्योपसङ्ग्राहकाभाव इत्यर्थः । ननु श्रुतावाकाशात्मनोः पृथगुक्तत्वात् अतिरेकनिरासाय सत्त्वरजस्तमोरूपान् प्रकृतिभागानुपादाय सत्त्वरजस्तमोमहदहङ्काराः पृथिव्यप्तेजोवायुघ्राणानि रसनचक्षुःश्रोत्रत्वग्वाचःपाणिपादपायू-पस्थमनांसि शब्दस्पर्शरूपरसगन्धा इति पञ्च पञ्चकानि वाच्यानि । तत्र च आद्ये पञ्चकचतुष्टये नास्त्युपसङ्ग्राहको धर्मः । न खलु सत्त्वरजस्तमोमहदहङ्काराणामेकः क्रिया वा गुणो वा द्रव्यं वा जातिर्वा पञ्चतन्मात्रादिभ्यो व्यावृत्तः सत्त्वादिषु चानुगतः कश्चिदस्ति । नापि पृथिव्यप्तेजोवायुघ्राणानाम् । नापि रसनचक्षुस्त्वक्श्रोत्रवाचाम् । नापि पाणिपादपायूपस्थमनसाम् । येनैकेनैवासाधारणधर्मेणोपगृहीतानां पञ्चपञ्चकत्वसिद्धिरिति चेन्न । आकाशस्थाने घ्राणस्य घ्राणस्थाने वाचः वाक्स्थाने च मनसो निवेशने उपसङ्ग्राहकाभावेऽप्याकाशमात्रस्थाने मनो निवेश्य सत्त्वादिपञ्चकस्य 'मनसस्तु परा बुद्धिः' इत्यादिश्रुतिसिद्धेन मनःपरत्वेन, पृथिव्यादेश्च विंशत्यतिरिक्तत्वेन, क्रोडीकरणे उपसङ्ग्राहकसद्भावात् पञ्चपञ्चकोपपत्तेरिति भावः । किञ्चोपसङ्ग्राहकाभावे कुत्रापि द्वित्वादिका सङ्ख्या नास्तीत्यभिमतं किंवा महासङ्ख्यायामवान्तरसङ्ख्या नास्तीति । नाद्यः त्वन्मतेऽपि प्राणचक्षुःश्रोत्रान्नमनस्सु पञ्चत्वाभावप्रसङ्गादिति भावेन द्वितीयं दूषयति **न चेति** । नापीत्यर्थः । आदिपदेन 'दशपञ्चदिनान्याहुः पक्षं मासो द्वयात्मकः । तासां स्वसृरजनयत्पञ्चपञ्च' । पञ्चपञ्चाशतस्त्रिवृतः संवत्सरा' इत्यादेः सङ्ग्रहः । **व्यभिचारा-दिति** । तत्र महासङ्ख्याया उपसङ्ग्राहकाभावेऽप्यवान्तरसङ्ख्यादर्शनादित्यर्थः । अतिरेकाच्चेत्यस्योक्त एवार्थः । आत्माकाशयोः पञ्चविंशत्यन्तर्भावेन पञ्चविंशतित्वनिर्वाहादात्माकाशाभ्यां पञ्चविंशतिसङ्ख्याया अतिरेकापादन-मनुपपन्नम् । न च यस्मिन्नित्युक्ताधिकरणत्वानुपपत्तेः न आत्मनः पञ्चविंशत्यन्तर्भाव इति वाच्यम् । पतञ्जलिना पञ्चविंशतितत्त्वातिरिक्तस्येश्वरस्याङ्गीकारेण तत्रात्मपदोदितस्य जीवस्यान्तर्भावेऽपि तदतिरिक्तस्येश्वरस्य यस्मि-न्नित्युक्ताधिकरणत्वसम्भवात् । न चैवं पञ्चविंशतितत्त्वानीति सिद्धान्तव्याकोपः स्यादिति वाच्यम् । तस्याधेय-त्वविषयत्वेन तदनवकाशात् । ततः पञ्चविंशतावनन्तर्भूतस्येश्वरस्याधिकरणत्वसम्भवान्न तमादाय तत्त्वातिरेके-ऽपसिद्धान्त इत्याह **पातञ्जलैरिति** । ईश्वरस्याङ्गीकृतत्वादित्येव मूलकोशेषु दर्शनात् पाठः । अन्यादृशस्तु प्रक्षिप्त इत्यवधेयम् । ननु तथाऽप्याकाशस्य पार्थक्यं पृथगभिधानान्यथाऽनुपपत्त्या वाच्यम् । तथा च चतुर्विंशति-त्वापत्त्योक्तसङ्ख्याऽनिर्वाह एवेत्यत आह **आकाशश्चेतीति** । तथा च पृथगभिधानमेवासिद्धमिति भावः । अनेन चशब्द आद्यर्थक आकाशाद्याः पञ्चविंशतिजना इति योजना सूचिता भवति । नन्वेवमस्तु सेश्वरसाङ्ख्यमते पञ्चविंशतित्वसङ्ख्यानिर्वाहो निरीश्वरस्य तु तस्य मते पञ्चविंशत्यन्तर्भूतयोरेवात्माकाशयोरात्माकाशशब्देन ग्रहणे यस्मिन्नित्युक्ताधिकरणत्वस्याकाशश्चेति पृथगुक्तेश्चानुपपत्तिप्रसङ्गेन पञ्चविंशतावन्तर्भूतयोरेव तयोर्ग्रहणे तद्व्यति-रिक्ततत्त्वानां त्रयोविंशतित्वेन पञ्चविंशतित्वसङ्ख्यायाः कथं निर्वाहः । सत्त्वरजस्तमोरूपप्रकृतिभेदविवक्षायां च जनानां सप्तविंशतित्वापत्त्या पञ्चविंशतितत्त्वानीति सिद्धान्तव्याकोप इति चेन्न । आत्माकाशव्यतिरिक्तानां त्रयोविंशतितत्त्वानामपि, प्रधानस्योक्तरीत्या त्रिधाकरणात् पञ्चविंशतित्वमिति श्रुतावभिप्रेतं साङ्ख्यस्मृतौ तु तत्त्वेष्वात्माकाशावन्तर्भाव्य प्रधानं चाभित्त्वा पञ्चविंशतित्वगणनाया अभिमतत्वेनाविरोधोपपत्तेरिति ।





**वा०र०— पृथिव्यादिष्विति** । न खलु सत्त्वरजस्तम इत्यादि भामतीग्रन्थस्याकाशात्मनौ विहाय या पञ्चविंशतिरुदिता तस्यां नामान्तरत्वेन पञ्चसङ्ख्यानिवेश इत्यादेराहेति कल्पतरावक्तारः कृतः तदुभयानुसारेण यथा सङ्ग्राहकधर्मघटना न सम्भवति तादृशप्रकारतस्याङ्गीकर्तव्यतामापाद्य सङ्ग्राहकाघटनां चन्द्रिकोक्तरीत्या शङ्कते **ननु श्रुताविति । घ्राणानामिति** । उद्रिक्ताकाशादीनां पृथिव्यादीनां ज्ञानेन्द्रियघ्राणस्य च साधारणोपाध्यभावादिति भावः । **नापि रसनेति** । ज्ञानेन्द्रियरसनादीनां कर्मेन्द्रियवाचश्च साधारण्यायोगादिति भावः । **पाणीति** । उद्रेचितवाचां कर्मेन्द्रियाणां न मनसा पञ्चत्वलाभ इत्याशयः । **असाधारणधर्मेणेति** । पञ्चपञ्चकसाधारणधर्मस्यैव प्रकृततया साधारण्येत्येव वक्तव्येऽपि पञ्चतन्मात्रादिभ्यो व्यावृत्तः सत्त्वादिषु चानुगत इति भामत्यामसाधारणरूपस्यापि कथनात् तथा व्यवहारा इति ज्ञेयम् । यद्यप्यत्र पञ्चकपञ्चककल्पने भूतादिपञ्चकादिरूपेण कल्पनायां प्रागुक्तरीत्या भूतत्त्वादीन्येवोपसङ्ग्राहकानीति न तदभाव इति शङ्कान्तरोऽनुवाद्यः तथापि आकाशाबहिर्भावे सति विनिगमकाभावेनैवमेव पञ्चकं निष्पादयामीति मन्यमानं प्रति तुष्यतु दुर्जन इति न्यायेन प्रकारान्तरेणोपसङ्ग्राहककथनेऽपि न दोष इत्याशयेनाह **आकाशमात्रस्थान इति** । मात्रपदेन प्राणादिस्थाने तु प्राणादीनामेव वेशोऽस्तु पृथिव्यादौ पञ्चत्वपूरणाय मनःप्रवेशेऽप्यन्यत्रान्यान्तर्भावादेरकल्पनीयत्वादिति सूचयति **सत्त्वादिपञ्चकस्येति** । बुद्धिशब्दस्य तत्रापि प्रयोगादिति भावः । तथा च दशेन्द्रियपञ्चमात्रासत्त्वादिरूपविंशतिलाभे तदतिरिक्तत्वे च मनःसहितपृथिव्यादेः क्रोडीकरणोपपत्तिरित्याशयः । **उपसङ्ग्राहकेति** । उपसङ्ग्राहकानामित्यर्थः । उक्तं च चन्द्रिकायां उपसङ्ग्राहकानां सत्त्वादिति । **इति भावेनेति** । इत्याद्यं पक्षं बहिरेव प्रदूष्येति भावः । परिमलकृतोक्तोदाहरणं चाह **तासां स्वसृष्टिरिति । उक्त एवेति** । अनिर्वाहरूप इत्यर्थः । सिद्धान्तव्याकोपः स्यादिति साङ्ख्यस्येति शेषः । **अन्यादृशस्त्विति** । अनङ्गीकृतत्वादिति नञ्गर्भ इत्यर्थः । **जना इति योजनेति** । प्रतिष्ठित इत्येकवचनं तु विपरिणाम्यमेव । अन्यथा जना इत्यनेनान्वयायोगप्रसङ्गात् । एतद्योजनायां तु विपरिणाममात्रं न तु यथाश्रुतस्यापि । ईश्वरपक्षीयोत्तरयोजनायामेव केनचिदन्वयोऽस्तीत्येतं तु वैषम्यमात्रमित्यवधेयं टीकायां मूले च ।

**स०व्र०— न चेति** । नापीत्यर्थः । पातञ्जलैरीश्वरस्याङ्गीकृतत्वादित्येव पाठः । तथा च आत्मनः पञ्चविंशत्यन्तर्भावेऽपि तदतिरिक्तस्य परमात्मनो यस्मिन्नित्यधिकरणत्वोक्तिसम्भवात् । परमात्मनश्च न तत्त्वगणनायां विवक्षेति भावः । आकाशस्यापि पृथगुक्तिविरोध इत्युक्तं दोषं परिहरति **आकाशश्चेत्याकाशाद्या इतीति** । अत्रैकवचनं बहुवचनार्थे । तच्चाद्यर्थकम् । कडाराः कर्मधारय इत्यत्र तथादर्शनादित्यभिप्रेत्य वा चशब्दोऽनुक्तसमुच्चायक इत्यभिप्रायेण वा आकाशाद्या इत्युक्तम् ।

**स०ना०—** पातञ्जलैरीश्वरस्याङ्गीकृतत्वाच्चेति क्वचित्पाठः । तत्र परेणाधियत्तत्त्वानामेव पञ्चविंशतित्वाङ्गीकारात् आधारेणातिरेककथनं अनुपपन्नमिति भावः । अयं पाठः सेश्वरसाङ्ख्यस्य पूर्वपक्षित्व एव लग्नो बोध्यः । न द्वावपि सम्भवत इति परेणानुदाहृतअसम्भावितस्य अनाशङ्कनीयत्वमाशङ्क्य न दूषणीयम् । परे चेत्





स्वशास्त्रे उदाहृतं न चापि असम्भावितत्वादुपेक्षणीयमेव न दूषणीयम् । अतो न द्वावपि सम्भवत इत्यर्थः । एतेन पञ्चपञ्चजना इत्यस्य पञ्चविंशत्यप्रत्यायकत्वादिति वक्ष्यमाणदूषणस्य सम्भावितत्वादाशङ्क्य दूषितमिति द्वितीयपक्षनिरासकत्वेऽपि परेणोक्तत्वात् आशङ्क्य दूषितमित्याद्यपक्षनिरासकत्वाभावात् न द्वावपि सम्भवत इत्ययुक्तमिति परास्तम् ।

**विट्ठल०— भूतत्वादीनीति** । भूतत्वतन्मात्रत्वेन्द्रियत्वैतददतिरिक्तत्वानीत्यर्थः । **श्रुताविति** । यस्मिन्निति श्रुतावित्यर्थः । अभ्युपेत्य चेदमुदितमित्याह **न चायमिति** । **न ववर्षेति** । न वृष्टिं चकारेत्यर्थः । **व्रतमेतदिति** । वाक्यान्तरम् । **पातञ्जलैरीश्वरस्याङ्गीकृतत्वादिति** । आत्मपदोदितस्य चतुर्विंशतिसङ्ख्यातिरेको नास्ति । तस्य जीवत्वेन चतुर्विंशतिसङ्ख्यान्तर्भावात् यस्मिन्नित्यधिकरणत्वेनोक्तस्त्वीश्वरः साङ्ख्यैकदेशिभिरीश्वरस्याङ्गीकृतत्वात् । तथा च न विरोध इति भावः । नाप्याकाशमादायातिरेक इत्याह **आकाशश्चेति** । आकाशाद्याः पञ्चपञ्चजना इति वा पञ्चपञ्चजनाकाशाद्याश्चेति वा योजनेति भावः ।

**चषकः— पातञ्जलैरिति** । पतञ्जलिप्रणीतशास्त्रदिशमनुरुन्धानैः साङ्ख्यैरित्यर्थः । ईश्वरस्याङ्गीकृतत्वादित्येव मूलकोशारूढपाठः । अनीदृशस्तु प्रक्षिप्त इति स्थितम् ।

**६२ सु०— किञ्चेदं वाक्यं पञ्चविंशतितत्त्वसिद्धये साङ्ख्येन स्वशास्त्रे गृहीतत्वाद्वा शङ्कितं, सम्भावितत्वाद्वा । न द्वावपि सम्भवतः, 'पञ्च पञ्चजना' इत्यस्य पञ्चविंशत्यप्रत्यायकत्वात् ।**

**'पञ्चजना' इत्यस्य समासत्वे हि द्वितीयः पञ्चशब्दो न तावत्पञ्चशब्देन सम्बध्यते, विशेषणस्योपसर्जनेन सम्बन्धायोगात् । नापि जनशब्देन, पञ्चजनाः कतीत्याकाङ्क्षानुदयेन विशेषणायोगात् ।**

**असमासत्वेऽपि न तावत्पञ्चशब्देन सम्बन्धः, एकार्थयोर्विशेषणविशेष्यभावानुपपत्तेः । नापि जनशब्देन, निराकाङ्क्षत्वात् । कथञ्चिदाकाङ्क्षायामपि दशत्वस्य प्राप्तेः ।**

**परि०— समासत्वे हीति** । यद्यपि नन्वित्यदिना शङ्क्ष्यमाणः समाहार एव पराभिमतः तथापि पक्षत्रये दोषोऽस्तीति भावेन पुल्लिङ्गबहुवचनान्तत्वात् पञ्च च ते जनाश्चेति विशेषणसमासो वा असमास एव वाच्यः न समाहार इति भावेन क्रमेण द्वयमपि निराह **द्वितीय इत्यादिना** । **पञ्चशब्देनेति** । जनपदविशेषणतया समासं प्राप्तेन पञ्चशब्देनेत्यर्थः । **कथञ्चिदिति** । पञ्चजनाः कतीत्याकाङ्क्षायामित्यर्थः ।





**यादु०**— अप्रत्यायकत्वमुपपादयितुं पञ्चजना इत्यस्य समासत्वमसमासत्वं वेति विकल्पं मनसि निधाय आद्ये आह **पञ्चजना इत्यस्येति** । **उपसर्जनेनेति** । समासे गुणभूतायाः सङ्ख्यायाः न सङ्ख्यान्तरं विशेषणम् । तथा सति विशेष्येण द्रव्येण विशेषणेन च सङ्ख्यया युगपदाकृष्यमाणा सङ्ख्या नैकेनाप्यन्वियात् । अतो विशेषणस्य नोपसर्जनेन सम्बन्ध इति भावः । द्वितीयं दूषयति **असमासत्व इति** । **निरकाङ्क्षत्वादिति** । पञ्चजनाः कतीत्याकाङ्क्षानुदयादिति भावः । **कथञ्चिदाकाङ्क्षायामिति** । सङ्ख्यान्तरश्रवणाद्रक्तपटन्यायेनोत्थाप्याकाङ्क्षायामपीत्यर्थः । सा च पुनः कतीत्येवंरूपा द्रष्टव्या । स्वारसिकाकाङ्क्षाभिप्रायेण कथञ्चिदित्युक्तम् ।

**वं०प०**— **द्वितीय इति** । समस्तपञ्चशब्दापेक्षया द्वितीयः । आद्य इति यावत् । पञ्चशब्देन समस्तेनेत्यर्थः । **विशेषस्येति** । विशेषणभूतस्याद्यपञ्चशब्दस्य पञ्चजना इति समासोपसर्जनभूतेन पञ्चशब्देन सम्बन्धायोगादित्यर्थः । **विशेषणायोगादिति** । विशेषणभूतस्याद्यपञ्चशब्दस्य जनशब्देन सम्बन्धायोगादित्यर्थः । **असमासत्वेऽपीति** । पञ्चजना इत्यस्य पृथक्पदत्वाङ्गीकार इत्यर्थः । अस्मिन्पक्षेऽप्याद्यस्य पञ्चशब्दस्य द्वितीयपञ्चशब्देन सम्बन्ध उत जनशब्देन । नाद्य इत्याह **न तावदिति** । **एकार्थयोरिति** । उभयोरपि पञ्चशब्दयोः पञ्चत्वसङ्ख्यावद्वस्तुवाचित्वेन परस्परविशेषणविशेष्यभावानुपपत्तेरित्यर्थः । नापि द्वितीय इत्याह **नापीति** । **निराकाङ्क्षत्वादिति** । जनाः कतीत्याकाङ्क्षायां पञ्चेत्युक्त्या आकाङ्क्षायाः पूर्णत्वात् पञ्चजनाः पुनः कतीत्याकाङ्क्षाया अनुदयेन द्वितीयस्य पञ्चेत्यस्य विशेषणस्यानाकाङ्क्षिततया वैयर्थ्यमित्याशयः । स्वारसिकाकाङ्क्षाया अभावेऽपि रक्तपटन्यायेनोत्थाप्याकाङ्क्षा सम्भवतीत्याशङ्क्य निषेधति **कथञ्चिदिति** । पञ्चजनाः कतीत्याकाङ्क्षा नोच्यते । किन्तु जनाः कतीत्याकाङ्क्षायां पञ्चेत्युच्यते । पुनः कतीत्याकाङ्क्षायां पुनः पञ्चेत्युच्यते इत्येवंरूपेणोत्थाप्य आकाङ्क्षायामित्यर्थः ।

**आनन्दः**— पञ्चविंशत्यप्रत्यायकत्वमेवोपपादयति **पञ्चजना इत्यस्य हीति** ।

**शे०वा०**— ननु पञ्च पञ्च जना इत्यस्य पञ्चशब्दद्वयदर्शनेन पञ्चपञ्चकसम्पत्त्या पञ्चविंशतितत्त्वप्रतिपादकतायाः परेणोक्तत्वात् कथमप्रत्यायकत्वमित्यतः पञ्चजना इति किं समास उत असमास इति विकल्प्याद्यं प्रत्याह **पञ्चजना इत्यस्येति** । यद्यप्यत्र समासासमासविकल्पस्य नावसरोऽस्ति भाषिकग्रन्थसिद्धान्तानुदात्तस्वरप्रयुक्तैकपदत्वेन समासनिश्चयात् । तथा हि । अस्मिन्मन्त्रे प्रथमः पञ्चशब्द आद्युदात्तो द्वितीयः सर्वानुदात्तो जनशब्दश्चान्तोदात्तः । तथा च न द्वितीयपञ्चशब्दजनशब्दयोः समासमन्तरेण अन्त्यस्याकारस्योदात्तत्वमितरेषां चानुदात्तत्वं घटते समासस्येति सूत्रेण समासस्यान्तोदात्तत्वविधानात् । अनुदात्तं पदमेकवर्जमिति सूत्रेण यस्मिन्पदे उदात्तः स्वरितो वा विधीयते तमेकं विहाय शिष्टस्यानुदात्तत्वस्मरणाच्च । एवमत्रान्तोदात्तस्वरबलात् समासो निर्धारितः । भाषिकसंज्ञके तु शतपथब्राह्मणस्वरविधायकग्रन्थे स्वरितानुदात्तो वेति सूत्रेण यो मन्त्रदशायामनुदात्तः स्वरितो वा स ब्राह्मणावस्थायामुदात्तो भवतीत्यपवाद आश्रितः । ततश्च अन्त्यादाकारादितरेषामनुदात्तानां ब्राह्मणदशायामुदात्तत्वं 'उदात्तमनुदात्तमनन्त्यमि'ति सूत्रेण मन्त्रदशायामुदात्त-





स्यान्त्यस्य परलग्नतयोच्चार्यस्यानुदात्तत्वं विहितम् । ततश्च नकारोपरितन आकार आकाशश्चेत्यनेन संलग्नतयोच्चार्यमाणोऽनुदात्तो भवति । सति चैवमन्तानुदात्तस्वरो भाषिकग्रन्थसिद्धो भाषिको भवति । ये तु 'छन्दोगा बह्वृचाश्चैव तथा वाजसनेयिनः । उच्चावचः स्वरं प्राहुः स वै भाषिक उच्यते' इति वचनमुदाहृत्य अन्तोदात्तो भाषिक इति व्याचक्षते तेषामध्ययनविरोधः । अन्तानुदात्तस्यैव पञ्चजनपदस्य समाम्नातृभिरध्ययनात् । ततश्च भाषिकेण स्वरेणैकपदत्वनिश्चयादत्र समाससिद्धिः । नन्वसमासेऽपि जनशब्दस्य पचाद्यजन्ततया चित इति सूत्रेणान्तोदात्तत्वलाभान्नान्तोदात्तस्वरेण समासनिश्चयः सम्भवतीति चेत् । न, तथा सति ज(?)कारोपरितन आ(?)कारस्य ब्राह्मणगतोदात्तस्थान्यनुदात्तस्वरसम्भवेऽपि पञ्चशब्दगतयोरकारयोः समासं विना तदसम्भवेन तत्स्वरेण समासनिश्चयसम्भवात् । ततश्च नेह टीकायामुक्तविकल्पावकाशः तथाऽप्युक्तरीत्या स्वरेण परोक्तं समासनिश्चयमनादृत्य वैदिकं 'जना यमग्निमयजन्त पञ्च' इत्यादिकं पञ्चजनशब्दयोरसमासेन प्रयोगं, 'पञ्चानां त्वा पञ्चजनानां यन्त्राय धर्त्राय गृह्णामी'ति तयोरेव समासेन प्रयोगं च मूलीकृत्य इह टीकायां समासासमासविकल्प आश्रित इति द्रष्टव्यम् । सिद्धान्ते सत्यपि समासप्रापके शाङ्करभाष्योक्तविशेषणसमासमनाश्रित्य पञ्चपञ्चेति वीप्साश्रयणं तु प्रतिशरीरं प्रसिद्धप्राणादिनियामकानि भगवतः प्राणादिनामकानि पञ्चरूपाणि सन्तीत्यर्थातिशयलाभाय कृतम् । केचित्तु समाहारद्विगुवादिमते यथा पञ्चजना इति पुलिङ्गं छान्दसत्त्वेन समाधीयते तथा सत्यपि समासप्रापके पञ्चजना इत्यसमासः पञ्चपञ्चेति वीप्सावादिनो मते छान्दसत्वेन समाधेय इत्याहुः ।

**विशेषणस्योपसर्जनेनेति** । शुक्लादिशब्दवत्पञ्चशब्दस्य सङ्ख्यामुपसर्जनं कृत्वा । प्राधान्येन द्रव्यपरत्वात् । गुणभूतसङ्ख्याया न सङ्ख्यान्तरेण विशेषणम् । तथा सति विशेष्येण द्रव्येण विशेषणेन च सङ्ख्यया युगपदाकृष्यमाणा सङ्ख्या नैकेनाप्यन्वयादित्यर्थः । **आकाङ्क्षानुदयेनेति** । पञ्चसङ्ख्ययोत्पत्तिविशिष्टया जनानामवच्छिन्नत्वादिति भावः । न च सङ्ख्यान्तरश्रवणे सति रक्तपटन्यायेनाकाङ्क्षोत्थापनाददोष इति वाच्यम् । विजातीयविशेषणान्तरप्रयोग एव रक्तपटन्यायप्रवृत्त्या सजातीयप्रयोगे तदप्रवृत्तेः । न हि भवति रक्तपटो रक्त इतीति ध्येयम् । द्वितीयं प्रत्याह **असमासत्वेऽपीति** । **निराकाङ्क्षत्वादिति** । पञ्चत्वसङ्ख्ययाऽवच्छिन्नत्वेन स्वरसतो निराकाङ्क्षत्वादित्यर्थः । स्वरसतो निराकाङ्क्षत्वेऽपि सङ्ख्यान्तरश्रवणाद्रक्तपटन्यायेनाकाङ्क्षोत्थापनाददोष इत्यत आह **कथञ्चिदिति** । रक्तपटन्यायस्य विजातीयविशेषणप्रयोगविषयत्वान्न सजातीये तत्प्रवृत्तिरित्याशयेन कथञ्चिदित्युक्तम् । **दशत्वस्येति** । ततश्च न पञ्चविंशतितत्त्वप्रत्यभिज्ञानसिद्धिरिति भावः ।

**वा०र०**— परश्चात्र पञ्चशब्दो जनशब्देन समस्तः पञ्चजना इति भाषिकस्वरेणैकपदत्वनिश्चयादिति शाङ्करभाष्यव्याख्यानरूपभाष्यभाषिकस्वरेणेति तस्यार्थः । अत्र मन्त्रे प्रथम इत्यादि कल्पतर्वनुसारेण समाससिद्धिं दर्शयितुं भाष्योक्तमनुवदति **यद्यप्यत्रेत्यादिना** । **भाषिकग्रन्थसिद्धान्तेति** । सिद्धो येनानुदात्तस्वर इति योज्यम् । अत्र भाषिकग्रन्थेति वदतेदं सूचितम् । यद्यपि भाषिकः स्वरो नाम ब्राह्मणस्वरः भाषाशब्दस्य ब्राह्मणभागे प्रवचनशब्दस्य च मन्त्रभागे वैदिकानां निरूढेः । अत एव भाषास्वरूपोपदेशो वैरवत्प्रवचनप्रतिषेधः स्यादित्येतत् द्वादशस्य तृतीये नवमाधिकरणे मन्त्रसमाम्नाये स्वरान्तरेण समाम्नाताः ये मन्त्राः विनियोजकब्राह्मणे च





स्वरान्तरेणोपात्तास्ते किं स्वसमवायसिद्धेन स्वरेण कर्मणि प्रयोक्तव्या उत ब्राह्मणस्वरेणेति सन्देहे वाचनिकत्वात् ब्राह्मणस्वरस्य तेनैव प्रयोक्तव्या इति पूर्वपक्षे च प्राप्ते लिङ्गविनियोज्यमन्त्रेषु मन्त्रस्वरूपे तत्स्वरे वा न ब्राह्मणव्यापारः किन्तु तत्र ब्राह्मणं गुणार्थवादपरिसङ्ख्यार्थमेव वचनविनियोज्यमन्त्रेष्वपि न स्वरविनियोगेऽपि व्यापारः किन्तु मन्त्रविनियोगमात्रे । न चैवं ब्राह्मणे स्वरान्तरोपादानं व्यर्थम् । ब्राह्मणं प्रवृत्तस्य स्वरस्याविच्छेदार्थत्वेन सार्थकत्वात् तस्मादात्मीयेनैव स्वरेण कर्मणि प्रयोक्तव्या मन्त्रा इति सिद्धान्तितम् । मीमांसकैः तत्र च ब्राह्मणस्वरे भाषिकस्वर इति मन्त्रस्वरे च प्रावचनिकस्वर इति व्यवहारस्य कृतत्वात् । अत एव तन्न्यायत्वाददृष्टेऽप्येवमिति तदुत्तराधिकरणे मन्त्रसमाम्नाये अनधीतानां ब्रह्मण एव चोत्पन्नानां मन्त्राणामपि स्वरूपविनियोगपरमेव ब्राह्मणं न तु स्वरविनियोगपरमिति पूर्वपक्षे स्वरविनियोगाभावेऽपि मन्त्रस्वरूपस्य ब्राह्मणाद्यथा प्रतीतिः तथा प्रयोक्तव्यत्वात् ब्राह्मणस्वरातिरेकेण च स्वरान्तरानवगतेर्ब्राह्मणस्वरेणैव प्रयोग इत्युक्तम् । भाट्टसारे तु 'तं प्राहेद्वानस्पत्योऽसीत्याम्नानसिद्धवानस्पत्योसी'ति मन्त्रे न कश्चित्प्रा(यव)वचनिकः स्वरः । अस्य मन्त्रस्य ब्राह्मण एवोत्पन्नत्वात् किन्तु भाषिकस्वर इति स्पष्टं व्यवहारात् । तथा च भाष्यस्थभाषिकस्वरो नाम ब्राह्मणे य उक्तस्वरः स इत्येवं प्रतीतिः स्यान्न चात्र ब्राह्मणे उक्तस्वराख्यभाषिकस्वरेणान्तानुदात्तरूपेण समासनिश्चयः । समासेऽन्तोदात्तस्यैव नियततयान्तानुदात्तत्वे समासानुपपत्तेः । तथापि नात्र भाषिकस्वरो नाम ब्राह्मणः स्वरसः किन्तु भाषिकाख्ये शतपथब्राह्मणस्वरविधायकग्रन्थविशेषे उक्त एव । तत्र च वक्ष्यमाणरीत्या समासप्रयुक्तान्तोदात्तस्वरापवादेनान्तानुदात्तस्वरविधानात् नानुपपत्तिरिति । **अनुदात्तस्वरप्रयुक्तेति** । अनुदात्तस्वरस्थान्युदात्तस्वरेत्यर्थः । समासप्रयुक्तत्वेन तस्यैव साक्षान्निर्देशो तात्पर्यात् । परम्पराभिप्रायेण त्वत्रानुदात्तग्रहणात् । वक्ष्यति च जनशब्दश्चान्तोदात्तः अन्त्यस्याकारस्योदात्तत्वमित्यादि । **आद्युदात्त इति** । न्रः सङ्ख्याया इति सूत्रेण रेफान्तनकारान्तसङ्ख्याया आदिरुदात्तो भवतीति विधानेन पञ्चन्शब्दप्रवृत्तिपञ्चेत्यस्योक्तसङ्ख्यात्वेन तदादेरुदात्तत्वादिति भावः । **अन्तोदात्त इति** । तस्यान्तोदात्तत्वाभावे उदात्तमनुदात्तमनन्त्यमिति सूत्रेण उदात्तस्यानुदात्तादेशो न प्रसज्यत इति भावः । एवमुत्तरत्रापि तात्पर्यम् । एतेन जनशब्दस्यान्तानुदात्तत्वतया पाठात् अन्तोदात्तत्वोक्त्ययोग इति शङ्का परास्ता । **इतरेषामिति** । पञ्चजेत्येतद्वर्णत्रयगताकारणामित्यर्थः । यद्यप्येवमन्तोदात्तस्वर उक्तव्याकरणानुसारेण वस्तुतः आयाति । पञ्चानां त्वा पञ्चजनानामित्युदाहरिष्यमाणमन्त्रे तथाभावदर्शनात्, तथापि ब्राह्मणे मन्त्रभागो यः पठ्यते तस्य ब्राह्मणपठितमन्त्रत्वनिमित्तेन मन्त्रदशायामन्त्यस्योदात्तस्याप्यनुदात्तत्वं विधानबलात्सेत्स्यतीति न स्वरपाठो युक्त इत्याशयेन अन्त्यस्यानुदात्ततासाधकसूत्रेण तत्प्रवृत्तिं दर्शयितुमित्यस्यानुदात्तत्वेऽपि शिष्टानामनुदात्तानामुदाहृतत्वं कथमित्यतस्तत्साधकं तावद्दर्शयति **भाषिकसंज्ञिके त्विति** । शतपथब्राह्मणस्य यः स्वरः तद्विधायके ग्रन्थ इत्यर्थः । शतपथब्राह्मणं च वाजसनेयकेऽस्ति । तत्र दीक्षाप्रकरणम् 'अयं वै यज्ञो योऽयं पवते तमेतमीप्सन्ति ये संवत्सरा यदीक्षन्ते तेषां गृहपतिः प्रथमो दीक्षित' इत्यादिरूपमस्ति । तत्रैकादश्यां पक्षे पक्षे चोपवसेत्तस्मिन्नहोतव्यमित्याद्युक्तम् । तथा अथ कात्यायनः पप्रच्छ याज्ञवल्क्येति होवाचेत्यादिखण्डनवके ऊर्ध्वपुण्ड्रधारणचक्रशङ्खधारणप्रतिपादनमस्ति स्वरितानुदात्तौ चेतीति द्विवचनयुक्तः पाठः । **अपवाद इति** । **समासस्येति** । सूत्रविहितसमासस्वरस्येति शेषः ।





तावता अनेन सूत्रेण क्रियतामनुदात्तत्वं सिद्धमित्यतस्तत्स्पष्टयति **ततश्चान्त्यादिति** । अनुदात्तत्वमित्यत्रापि स्वरितानुदात्तौ चेति सूत्रेणेति वर्तते । भवतीति शेषः । उदात्तमनुदात्तमनन्त्यमिति सूत्रेण चेति चशब्दयुक्तः पाठः । तथैव कल्पतरूक्तेः । ननु तत्रानन्त्यस्यैवानुदात्तताविधानेन प्रकृते च नकारोपरितनः आकारोऽन्त्य एवेति कथमनुदात्तत्वप्रसङ्ग इत्यत उक्तं **परसंलग्नतयोश्चार्यस्येति** । प्रतिष्ठित इत्यर्धान्ते यथा विरामोऽस्ति तथा न प्रकृते, किन्तु विरामं विनोच्चार्यस्येत्यर्थः । एतेन आकाशश्चेत्युत्तराकारेण जना इत्यत्रत्याकारस्य विशिष्टतयैवोच्चारणसद्भावेन संलग्नतयोच्चार्यस्येत्ययुक्तमिति निरस्तं भवति । तथा चानन्त्यत्वस्य विरामं विनोच्चार्यत्वरूपपरसंलग्नतयोच्चार्यत्वरूपत्वेनाकारस्य च विरामं विनोच्चारेण परसंलग्नतयोच्चार्यत्वाद्युक्तं वैवक्षिकमनन्त्यत्वमिति हृदयम् ।

असमासेऽपि जनशब्दस्येत्यादिपरिमलानुसारेणाशङ्क्य समाधत्ते **नन्वसमासेऽपीति** । अयं भावः । उक्तरीत्या ब्राह्मणपठितमन्त्रत्वमुपाधीकृत्य मन्त्रदशायामुदात्तस्य भाषिकग्रन्थेनानुदात्तत्वविधानात् पञ्चजना इति श्रूयमाणानुदात्तस्योक्तान्तोदात्तादेशतया तत्स्थानिनान्तोदात्तस्वरेण समासनिश्चय इत्ययुक्तम् । समासाभावेऽपि जनशब्दस्य चित्त्वादन्तोदात्तत्वेन तस्यैव च भाषिकग्रन्थेनानुदात्तताप्राप्त्युपपत्त्योक्तानुदात्तस्थान्युदात्तेन तन्निश्चयायोगादिति । चित्त इति सूत्रस्यान्तोदात्तताविधायकतया अन्त्यस्योदात्तत्वे तेन प्राप्ते विशिष्टस्यानुदात्तत्वं जकारोपरितनाकारमात्रे पर्यवसन्नम् । पञ्चेत्यत्रत्ययोरकारयोस्तु कुत अनुदात्तता । तदभावे च न भाषिकस्वरेणोदात्तत्वम् । ततस्तदनुदात्ततासिद्ध्यै समास एवाङ्गीकरणीय इत्याशयेनाह **तथा सतीति** । **उदात्तस्थान्यनुदात्तेति** । चित्त्वादुदात्तोऽकारो जातः पश्चाद्भाषिकस्वरेणानुदात्तो भवतीति हि स्थितिः । तथा चोदात्तः स्थानीयस्येति तथोक्तः । स चासावनुदात्तः स्वर इति विग्रहः । अत्र ब्राह्मणगतस्वरसम्भवेऽपि पञ्चशब्दगतयोरकारयोः समासं विना तदसम्भवेनेति प्रथमतो योजना । ब्राह्मणगतस्वरस्वरूपमुक्तम् **उदात्तस्थान्यनुदात्तेति** । तथा च तदसम्भवेनेत्यस्य ब्राह्मणस्वरासम्भवेनेत्यर्थः । स च स्वरितानुदात्तौ चेति भाषिकसूत्रेण विहित उदात्तस्वर एवेत्यतोऽनुदात्तस्थान्युदात्तस्वरसम्भवेनेति लभ्यत इति ज्ञेयम् । यद्वा तदसम्भवेनेत्यत्र तच्छब्देनेत्यत्रत्यतच्छब्देन उदात्तस्थान्यनुदात्तस्वर एव परामृश्यते । अनुदात्ततानन्तरं भाषिकस्वरेण तस्योदात्ततया अपि भावेन तत्प्रतिपादनार्थत्वात् तस्य चैवं योजना । उदात्तस्य स्थानीति तथोक्तः स चासावनुदात्तस्वर इति उदात्तं प्रति प्रकृतिभूतोऽनुदात्तस्वर इति फलितं भवति । तस्यात्रासम्भवेनेत्यर्थः । **तत्स्वरेणेति** । पञ्चेत्यत्रोदात्तं प्रति स्थानिभूतानुदात्तस्वरेणेत्यर्थः । उपलक्षणं चैतत् । चित्स्वरेण प्राप्तान्तोदात्तत्वस्यापि वृषादीनां चेति सूत्रेणापोदिततया वृषादिगणे च जनशब्दस्य पठिततया वृषादित्वप्रयुक्ताद्युदात्तत्वप्राप्त्यान्तोदात्तताप्रसिद्धेरसम्भवेन प्राग्विहितसकलस्वरापवादकसमासस्वरेणैवाद्युदात्तस्वरापवादेन तत्सिद्धेराश्रयणीयत्वमित्यपि बोध्यम् । **परोक्तमिति** । सङ्क्षेपेणोक्तमित्यर्थः । यदपि जना यमग्निमित्यादिनाऽसमासमाशङ्क्य परिमलकृता समासनियमतात्पर्यं निरूपितं तदसदिति भावेन विकल्पावकाशहेतुत्वेन वैदिकमुभयविधप्रयोगमेवाश्रयते **वैदिकमिति** । अयं भावः । यत्र पञ्चशब्दद्वयं तत्र समासनियम इत्याश्रयता हि क्वचिदप्येकपञ्चशब्दयुते जनशब्दे समासो नास्तीति लोकोत्तरप्रज्ञतया





वाच्यम् । वीप्सासंशयेन क्वचिदपि पञ्चशब्दो नास्तीत्यपि कल्पनीयं स्यात् । ततोऽपहासापादककल्पनां परित्यज्य स्वरेणैव समासनिर्णय इति समासाभावे स्वराभाव एवोपन्यसनीयः । अत एवोक्तं **स्वरेण समासनिश्चयमनाश्रित्येति** । तथा च वैदिकप्रयोगस्यासमासप्रापकता युक्तेति । **पञ्चानामिति** । अस्य मन्त्रस्याज्यग्रहणे विनियुक्ततया विनियोगानुसारेण हे आज्य, त्वा त्वां, पञ्चानां पञ्चजनानां यन्त्रधर्तृशब्दोक्त-शरीरादिनियमनधारणार्थं गृह्णामीत्युदाहरणमन्त्रार्थः । ननु तर्हि सिद्धान्ते समासमनाश्रित्य कथं पञ्चपञ्चेति वीप्सा आश्रिता । स्वरेण समासनिश्चयादित्यतस्तदङ्गीकारं घटयति **सिद्धान्त इति** । सत्यपीत्यनेन समासप्रापका-भावादेव तदनाश्रयणं नेति ध्वनयति **पञ्चपञ्चेतीति** । तदुक्तं तत्त्वप्रकाशिकायां सर्वशरीरेष्वनुवृत्त्यर्थं पञ्चपञ्चेतीति । तत्र हि 'प्राणश्चक्षुस्तथैवान्नं मनः श्रोत्रं च पञ्चमम् । मूलप्रकृतिसंयुक्तं यद्गतं प्रतिपूरुषमि'ति श्रुत्यर्थकथनरूप-बृहद्भाष्यप्रतिपुरुषमित्यनेन पञ्चपञ्चेति वीप्सार्थकथाद्वीप्सैव पञ्चपञ्चेति । तदनुसारेण सिद्धवत्कृत्य सर्वशरीरे-ष्वित्यादेरुक्तेः । तथा च सिद्धान्ते या पञ्चपञ्चेति वीप्सा आश्रिता सा अर्थातिशयलाभाय । उपलक्षणं चैतत् । पञ्चजना इति समासेऽपि द्वितीयपञ्चशब्दोक्तसङ्ख्यान्वयानुपपत्त्या पञ्चविंशतिसङ्ख्यानां तत्त्वानां पूर्वत्रोत्तरत्र वा सन्निधानाभावेन प्राणादयो वाक्यशेषादित्यादिसूत्राभ्यां प्राणाद्येकपञ्चकस्यैवोक्त्या च समासे बाधकदर्शनेन वीप्साश्रितेत्यपि द्रष्टव्यम् । अर्थातिशयलाभायेति वदतेदमपि सूचितम् । साङ्करभाष्यकृता हि पञ्चविंशति-तत्त्वपरतां निराकृत्य स्वपक्षे वाक्यं योजयितुं समासप्राबल्यात् दिक्सङ्ख्ये संज्ञायामिति सूत्रेण समासो भवन्पञ्च-शब्दस्य जनशब्देन संज्ञायामेव जात इति सप्तर्षिशब्दवत् रूढत्वमेव । पञ्चजनशब्दस्येति पञ्चजनशब्दोक्तेऽप्यर्थे कतीत्याकाङ्क्षोदयसम्भवेन पुनः पञ्चसङ्ख्यान्वयोऽपि युज्यते । सप्तर्षयः सप्तेति यथेति प्रतिपादितं तत्पक्षे संज्ञाया समासगतपञ्चशब्दरूपावयवार्थस्य रूढत्वप्रयुक्तस्त्याग आश्रयणीयः । 'स्युः पुमांसः पञ्चजनाः पुरुषाः पूरुषा नरा' इत्यमरेण मनुष्येषु एकस्मिन्नपि वृत्तिप्रतिपादनेऽपि प्राणादिषु पञ्चजनसम्बन्धेन लक्षणैवाश्रयणीया । 'ते वा एते पञ्च ब्रह्मपूरुषा' इत्येतत्प्रकरणे 'प्राणो ह पिता प्राणो माते'त्यादि ब्राह्मणानुसारेण पुरुषशब्दस्य प्राणेषु प्रयोगेऽपि तच्छब्दस्य जनशब्दपर्यायित्वेऽपि च पञ्चजनशब्दरूढेः प्राणे तु वक्तुमशक्यत्वाच्च । सत्यप्येवं समासान्तर्गत-पञ्चशब्दार्थविवक्षामनाश्रित्य पञ्चजनाः कतीत्याकाङ्क्षायां पञ्चेत्युक्तौ पञ्चपञ्चजना इत्येतावतोऽपिपदसमुदाया-देकस्यैव पञ्चकस्य प्रतीत्याश्रयणाद्वरं पञ्चपञ्चेति वीप्साश्रयणं न च प्रयोजनाभावः । प्रतिपुरुषं पञ्च प्राणादय इति सर्वशरीरानुगतिप्रतिपादनस्यैव प्रयोजनोपपत्तेः । तदेतदप्यभिप्रेत्योक्तमर्थातिशयलाभायेतीत्याद्यवधेयम् । उत्प्रेक्षितं पक्षान्तरमाह **केचित्त्विति** ।

न च पूर्वत्रापि समासपरित्यागे छान्दसत्वातिरिक्तनिमित्ताभाव इति वाच्यम् । 'गुणाधिक्यं येन भवे-द्वेदस्यार्थः स एव ही'ति ऋग्भाष्योदाहृतप्रमाणानुसारेण समासे सत्यपि अधिकार्थलाभाय वीप्साश्रयणे तात्पर्य-व्याख्यानोपपत्तेरित्यास्ताम् । न चैका पञ्चसङ्ख्या पञ्चसङ्ख्यान्तरेण शक्या विशेष्टुमित्येतद्भामतीव्याख्यान-कल्पतर्वनुसारेण व्याचष्टे **शुक्लादिशब्दवदिति** । ननु तासां स्वसृरजनयत्पञ्चपञ्चेति चतुर्थाष्टकवाक्ये वीप्सया दशानामेव लाभः स्यात् यदि तत्रैका पञ्चसङ्ख्या पञ्चसङ्ख्यान्तरेण विशेष्यते । तर्ह्यत्रापि तथास्त्विति चेन्न तासां





स्वसृरित्यत्र चतुर्थाष्टकयजुर्वेदवाक्यशेषानुसारेण अगत्या विशेषणान्वयस्वीकारेऽप्यत्रावयवद्वारा सङ्ख्यालक्षणया पञ्चशब्दद्वयोपपादने सम्भवत्यनन्यगतिकविशेषणसम्बन्धकल्पनायोगात् तानि द्वेधा पञ्चान्यानि पञ्चान्यानि सम्पद्यन्ते सा दशमीत्यैतरेयब्राह्मणवत् ते एते पञ्चान्ये पञ्चान्ये दश सन्तः तत्कृतमिति श्रुत्यन्तरसिद्धदश-सङ्ख्याकसङ्ख्याग्रहणे सम्भवति साङ्ख्यस्मृतिसिद्धतत्त्वपर्यवसायि पञ्चविंशतिसङ्ख्याग्रहणायोगाच्च वैषम्यमिति तात्पर्यात् पञ्चजना इत्यत्र तु पञ्चसङ्ख्ययोत्पत्तिशिष्टया जनानामवच्छिन्नत्वादिति भामत्यनुसारेण व्याचष्टे **पञ्चसङ्ख्ययेति**। विजातीयविशेषणान्तरप्रयोगे च रक्तपटन्यायो न सजातीय इत्यादिकल्पतर्वनुसारेण शङ्कामुत्थाप्य दूषयति । **न च सङ्ख्यान्तरेत्यादिना** । ननु यत्रैकया सङ्ख्यया विशेषितानामर्थानां सजातीयेन विजातीयेन वा सङ्ख्यान्तरेण विशेषणात् संवर्धनेन महासङ्ख्यालाभः तत्र रक्तपटन्यायप्रवृत्तिः सम्भवत्येव । यथा हि पञ्चभि-र्धाता विदधाविदं यत्तासां स्वसृरजनयत् पञ्चपञ्चेति याजुषमन्त्रे पञ्चेत्यत्र त्रिंशत्स्वसार इति वाक्यशेषानुसारेण पञ्चविंशतिरूपमहासङ्ख्यालाभाय सङ्ख्यावर्धनस्यावश्यकतया संवर्धनेन पञ्चविंशतिलाभे पञ्चभिर्धातेत्युक्तमेलने त्रिंशत्सङ्ख्याया वाक्यशेषोक्ताया निर्वाहो रक्तपटन्यायेनाद्रीयते । एवं पञ्चपञ्चाशतस्त्रिवृतः संवत्सराः पञ्चाशतः पञ्चदशाः पञ्चपञ्चाशतः सप्तदशाः पञ्चाशत एकविंशा इत्यत्र परातपरातब्राह्मणे (?) (तै. ब्रा. ३-१२-९-८) विश्वसृजां सहस्रसंवत्सरमिति वाक्यशेषानुसारेण सङ्ख्यासंवर्धनेन महासङ्ख्यालाभाय पञ्चाशदुत्तरद्विशतार्धत्वं पञ्चपञ्चाशच्छब्दस्येत्यादि द्रष्टव्यम् । तत्कथं महासङ्ख्यानिर्वाहाय अवश्याश्रयणीयास्तु पटन्यायस्यात्रानवकाश इति । मैवम् । इत्यपि विजातीयविशेषणान्तरप्रयोगस्थल एव रक्तपटन्याय इति नियमे वाक्यशेषोक्तसङ्ख्या-निर्वाहलोभेन तत्रानन्यगत्या रक्तपटन्यायावतारस्वीकारः । न चैवं प्रकृते संवर्धनेन निष्पाद्या महासङ्ख्या वाक्यशेषे श्रुतास्तीति तन्निर्वाहरूपप्रयोजनाभावे तन्न्यायस्यात्रानवकाशादित्याशयात् । एतेनैतदपि निरस्तम् । पञ्चजनाः कतीत्याकाङ्क्षायामेव पञ्चेति पुनः सङ्ख्याप्रयोग इत्यनन्यगत्याश्रयणीयम् । अन्यथा पञ्चजनशब्दे समासाङ्गी-कारेण सिद्धान्तेऽप्यगतेरिति पञ्चजनशब्दे विशेषणसमासेऽङ्गीकृतेऽपि स्युः पुमांसः पञ्चजना इति अभिधान-सिद्धमनुष्यमात्रस्यैव पञ्चजनशब्दसमासविषयतया प्रसक्तेऽपि समासावयवपञ्चशब्दार्थपञ्चजनशब्देनोपस्थिते कतीत्याकाङ्क्षोदयसम्भवेन पञ्चसङ्ख्यान्वयोपपत्तेरिति वक्तुं शक्यतया वैषम्यात् । तद्रीत्या पञ्चत्वस्यैकस्यैव प्राप्त्या पञ्चविंशत्यप्राप्तिप्रसङ्गाच्च । वस्तुतो नात्र समासः किन्तु पञ्चपञ्चेति वीप्सैव । तथा च न समास-माश्रित्य विशेषणयोगाश्रयणं सिद्धान्त इति न प्रतिबन्धावकाश इत्यास्ताम् । तृतीयाष्टकतृतीयाध्यायान्त्यवर्गे षोढायुक्ताः पञ्चपञ्चा वहन्तीत्येतद्वेदभाष्यनिष्कासनेनानुगुण्यविचारः कार्योऽस्ति । अष्टमाष्टकचतुर्थे तृतीयवर्गे उक्षणो हि मे पञ्चदशेति प्रयोगोऽपि तत्र पञ्चदशेत्येकपदस्य पञ्चदशसङ्ख्याकानिति वेदभाष्येऽपि । दशावनिभ्यो दशकक्ष्येत्यादावेकपदत्वम् । पञ्चारे चक्रे इत्यत्रापि ।

**स०व्र०— विशेषणस्योपसर्जनेनेति** । पूर्वपञ्चशब्दो विशेषणं जनपदसमस्तः, द्वितीयपञ्चशब्दस्तु उपसर्जनभूत इति भावः । **सम्बन्धायोगादिति** । असामर्थ्यादिति भावः । **विशेषणायोगादिति** । द्वितीय-पञ्चशब्दरूपविशेषणायोगादित्यर्थः । **एकार्थयोरिति** । अव्यावर्तकत्वादिति भावः । रक्तो घटस्तिष्ठतीत्यादाविव





पुनः क्रियन्त इत्येवंरूपोत्थाप्य आकाङ्क्षा भवत्येवेत्याशयेनाह **कथञ्चिदाकाङ्क्षायामिति** । स्वारसिकाकाङ्क्षा-भावाभिप्रायेण कथञ्चिदित्युक्तम् ।

**विठ्ठल०— द्वितीयः पञ्चशब्द इति** । प्रथमपञ्चशब्द इत्यर्थः । वस्तुतो द्वितीयपञ्चशब्दस्य पञ्चजना इति समासान्तर्गतत्वेनैव प्रथमस्य तदपेक्षया द्वितीयत्वमिति ज्ञेयम् । **उपसर्जनेनेति** । पञ्चजना इत्यत्र समासे गुणभूते न पञ्चेति पदेन पञ्चेति पूर्वपदस्य सम्बन्धायोगादित्यर्थः । **विशेषणायोगादिति** । द्वितीयत्वेनोक्तपञ्च-शब्दरूपविशेषणायोगादित्यर्थः । **असमासत्वेऽपीति** । द्वितीयपञ्चशब्दस्येति शेषः । **कथञ्चिदाकाङ्क्षायामिति** । पुनः पञ्चजनाः कतीत्याकाङ्क्षायामुत्थापितायामपीत्यर्थः ।

**६३ सु०— ननु पञ्चजना इति समाहारद्विगुः । तस्य पञ्चेति विशेषणे पञ्चविंशतिः सम्पद्यते । यथा पञ्चपञ्च(फ)पूल्यं इत्युक्ते पञ्चविंशति पूल्यो लभ्यन्त इति । मैवम् । तथा सति पुल्लिङ्गानुपपत्तेरित्यलम् ॥ १-४-३ ॥**

**परि०—** पराभिमतमाशङ्कते **नन्विति** । **पुल्लिङ्गेति** । 'सङ्ख्यापूर्वो द्विगुः' इति संज्ञायां 'द्विगुरेकवचनम्' इत्येकवद्भावे 'स नपुंसकम्' इति नपुंसकत्वे प्राप्ते 'अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्यत इति स्त्रीत्वे 'द्विगोरि'ति ङीप्प्रत्ययेन भाव्यत्वादिति भावः । **इत्यलमिति** । विस्तरस्तु चन्द्रिकायां बोध्यः ।

**यादु०— पुल्लिङ्गत्वानुपपत्तेरिति** । 'अकारान्तो द्विगुः समाहारे स्त्रियामिष्टः' इति वचनादिति भावः । पुल्लिङ्गत्वादेव न पात्रादित्वमपि । छान्दसत्वेन समाधानं त्वगतिका गतिरित्यवधेयम् । किञ्च जनशब्दस्य न तत्त्वेषु रूढिः किन्तु योग एव । पञ्चजनशब्दस्य तु 'दिक्सङ्ख्ये संज्ञायाम्' इति समासविधानात् मनुजेषु रूढिः । ततश्च रूढत्वाभिप्रायेण केचित्पञ्चजना नाम विवक्ष्यन्ते । ते कतीत्याङ्क्षायां पुनः पञ्चेति प्रयुज्यते । 'सप्तर्षयः सप्त' इति यथा । एवं च कथं साङ्ख्यप्रसक्तिरत्रेत्याद्यभिप्रेत्याह **इत्यलमिति** ।

**वं०प०— समाहार इति** । पञ्चानां फलानामितिवत् पञ्चानां जनानां समाहार इति समाहारद्विगु-रित्यर्थः । **तस्य** समाहारद्विगुसमासभूतस्य पञ्चजना इत्यस्य । पञ्चानां जनानां समाहाराः कतीत्यपेक्षायां पञ्चेत्युच्यते । तथा पञ्चवर्गरूपपञ्चजनसमाहारस्य पञ्चत्वोक्तौ पञ्चपञ्चकाः पञ्चविंशतिः सम्पद्यत इत्यर्थः । **पुल्लिङ्गत्वेति** । 'अकारान्तोत्तरपदो द्विगुः समाहारे स्त्रियाम्' इति वार्तिकात् । यथा पञ्चफल इति शब्दात् समाहारद्विगुभूतात् स्त्रियां 'द्विगोः' इति ङीपि पञ्चफलीति जाते तद्बहुवचनं पञ्चफल्य इति भवति । तद्वदत्रापि समाहारद्विगुभूतात् पञ्चजनशब्दात् स्त्रियां ङीपि पञ्चजनीति जाते तद्बहुवचनं पञ्चजन्य इति स्यात् पञ्चजना इति पुल्लिङ्गत्वमनुपपन्नमेवेत्यर्थः ।





**आनन्द**:— समाहारः द्विगुरिति पञ्चजनानां समाहारः पञ्चजना इति द्विगुरित्यर्थः । **तथा सतीति** । पञ्चजन्य इति स्यादित्यर्थः । किञ्च यद्यत्र पञ्चविंशतिसङ्ख्या विवक्षिता स्यात् तदोत्तरवाक्ये तावता मुक्तिः स्यात् । न चैवं किं तु प्रमाणादयः पञ्चैवोत्तरवाक्येऽभिधीयन्ते इत्ययुक्तम् । पञ्चपञ्चेत्यस्य पञ्चविंशत्यभिप्रायेणाह **अलमिति** ।

**श्रीनिधि०**— **समाहारद्विगुरिति** । पञ्चजनसमाहारस्य पञ्चत्वे पञ्चविंशतिः सम्पद्यत इति भावः । **पुल्लिङ्गानुपपत्तेरिति** । अकारान्तोत्तरपदो द्विगुः स्त्रियमिष्ट इति स्त्रीत्वे द्विगोः । अकारान्त उत्तरपदात् द्विगोः स्त्रियां स्यादिति च पञ्चजनीति भवतीति भावः । ननु चात्रादौ नेति अपवादात् न स्त्रीत्वमिति चेन्न । तथा सति नपुंसकलिङ्गापत्तेः । तदिदमुक्तं **पुल्लिङ्गानुपपत्तेरिति** ।

**शे०वा०**— **समाहारद्विगुरिति** । तथा च समस्तेन पञ्चजनशब्देनोक्तस्य समाहारस्य युक्ता परिच्छेदकपञ्चत्वसङ्ख्यापेक्षा । यद्यपि च पञ्चत्वसङ्ख्यावच्छेदिकाऽस्ति तथापि इयं समुदायिनोऽवच्छिनत्ति न तु समुदायं समासगम्यम् । अतस्तस्मिन् कति ते समुदाया इत्यपेक्षायां पदान्तराभिहिता पञ्चत्वसङ्ख्या सम्बद्ध्यते **पञ्चेति** । एवं च पञ्च पञ्चकाः सम्पद्यन्त इति भावः । प्राप्तपञ्चत्वसङ्ख्याकानां जनानां पञ्चत्वसङ्ख्यया विशेषणे पञ्चविंशतितत्त्वधीरित्येतद्दृष्टान्तेन साधयति **यथेति** । ईबन्तद्विगुसमासेन समाहाराभिधानात् पदान्तरोपात्तसङ्ख्यया समाहारोऽवच्छेद्यः । उत्पत्तिविशिष्टया तु समानपदस्थया समाहारिणः पूला अवच्छेद्या इति पञ्चपूलीत्यत्र स्वगतसङ्ख्यया समुदायिनां पञ्चत्वसिद्धावपि समाहाराणां तदसिद्ध्या कति समुदाया इत्यपेक्षासम्भवेन तन्निबन्धनपदान्तरोपात्तपञ्चत्वसङ्ख्याऽन्वयासम्भवेन पञ्चविंशतिपूलप्रतीतिसम्भवेऽपि पञ्चजना इत्यत्र पञ्चपूलीत्यादाविवेबन्तत्वाश्रवणेन समाहाराप्रतीत्या न तेषां पदान्तरोपात्तपञ्चत्वसङ्ख्याऽन्वयापेक्षा युक्ता । नापि जनानाम् । तेषां समानपदस्थत्वेनोत्पत्तिविशिष्टया पञ्चत्वसङ्ख्ययाऽवच्छिन्नत्वात् । तथा च जनाः कतीत्यपेक्षाया जनानां स्वपदगतसङ्ख्ययाऽवच्छिन्नत्वेनासम्भवात् समुदायस्य च सर्वथैवाप्रतीतत्वेन समुदायाः कतीत्याकाङ्क्षाऽनुदयेन तन्निबन्धनपदान्तरोपात्तसङ्ख्याऽन्वयानुपपत्तेः न पञ्चविंशतितत्त्वप्रतिपादकत्वं पञ्चपञ्चजनशब्दस्येत्याह **तथा सतीति** । द्विगुसमासत्वे पञ्चपूलीत्यादाविवेबन्तत्वापत्त्या स्त्रीलिङ्गत्वमेव स्यान्न तु पुल्लिङ्गत्वमित्यर्थः । ननु सङ्ख्येयानां जनानां मा भूच्छब्दान्तरवाच्यसङ्ख्यावच्छेदः । पञ्चसङ्ख्यायास्तु तथा अवच्छेदो भविष्यति । न हि सा स्वावच्छिन्ना । आत्माश्रयप्रसङ्गेन सङ्ख्यायास्तयैवावच्छेदानुपपत्तेः । तथा च सङ्ख्यान्तराकाङ्क्षितत्वाद्युक्तोऽवच्छेद इत्यत आह **अलमिति** । तदर्थस्तु पञ्चशब्दस्य सङ्ख्योपसर्जनद्रव्यवाचकत्वादुपसर्जनसङ्ख्याया न शब्दान्तरोक्तसङ्ख्यासम्बन्ध इत्यसमासवत् समासेऽपि दोषः । समासे पञ्चशब्दोपात्तसङ्ख्याया जनशब्दार्थं प्रति विशेषणत्वाच्च न विशेषणान्वयः । न च विशेषणस्याप्युपसर्जनान्वयः किं न स्यादिति वाच्यम् । तथा सति साकाङ्क्षतया स्वविशेषणेनाकृष्यमाणस्य विशेष्यान्तरान्वयानुपपत्त्या समासाभावप्रसङ्गात् । ऋद्धविशेषणापेक्षस्य राज्ञः पुरुषेणासमासात् । न हि भवति ऋद्धस्य राजपुरुष इति किन्तु ऋद्धस्य राज्ञः पुरुष इति वृत्तिरेवेति । यद्वा ।

ईबन्तत्वाश्रयणेऽपि पञ्चपात्रमित्यादाविव समाहाराभिधानोपपत्तेर्युक्तः पञ्चजना इत्यत्र समाहारस्यैव पदान्तरोपात्तसङ्ख्यासम्बन्ध इत्यत उक्तम् **अलमिति** । तथा सति तद्वदेव नपुंसकत्वाद्यापत्त्या पञ्चजना इति पुल्लिङ्गत्वाद्यनुपपत्तेरिति च तदर्थः ।

**वा०र०**— पञ्चफलीत्यत्र यद्यपि पृथक्त्वैकार्थसमवायिनी पञ्चसङ्ख्यावच्छेदिकास्तीत्यादिना वैषम्योपपादनं कृतं, तदनुसारेण साम्यपरतया शङ्काग्रन्थं योजयितुं तत्रोक्तप्रकारं दार्ष्टान्तिके दर्शयति **यद्यपि च पञ्चत्वसङ्ख्येति** । पञ्चफलीत्यत्र यद्यपीत्यादि भामत्याशयकथनपर-ईबन्तद्विगुसमास इत्यादि कल्पतर्वनुसारेण उत्तरवाक्याशयमाह **ईबन्तेत्यादिना** । भवदपीदं विशेषणं पञ्चसङ्ख्याया एव भवेदित्येतद्भाष्याशयरूप-स्यादेतदित्यादि भामत्याद्यनुसारेण अलमित्येतदवतारयति **ननु सङ्ख्येयानामिति** । न ह्युपसर्जनमित्येतद्भामतीव्याख्यानरूप-पञ्चशब्दस्य सङ्ख्योपसर्जनद्रव्येत्यादि कल्पतर्वनुसारेणाह **तदर्थस्त्विति** । पुरुषेणासमासदर्शनादिति पाठः । समासाभावदर्शनादित्यर्थः । असमासादिति पाठेऽपि समासाभावदर्शनादित्येवार्थः । समासाभावदर्शनमेवाभिनीय दर्शयति **न हि भवतीति** । **वृत्तिरेवेति** । पदानां वृत्तिर्वाक्यमेवेत्यर्थः । एतच्च सम्बन्धसूत्रीयपदमञ्जर्यनुसारेण वृत्तौ हि राजपदमित्यादिना प्रागानन्दमयाधिकरणे टीकाकृता स्पष्टीकृतोक्तरीत्या अवधेयम् । स्वयमेव शङ्कान्तरमुत्थाप्य तन्निवर्तकतयालमित्येतद्योजयति **यद्वेति** । नपुंसकत्वादीत्यादिपदेनैकवचनपरिग्रहः । पुल्लिङ्गादीत्यादिपदेन बहुवचनपरिग्रह इति सर्वमवदातम् ।

**स०व्र०**— **तस्य पञ्चेति विशेषण इति** । पञ्चजनसमाहारस्य पञ्चकरूपस्य पञ्चत्वे पञ्चविंशतिः सम्पद्यत इति भावः । **तथा सतीति** । अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्ट इति स्त्रीलिङ्गत्वविधानात् पुल्लिङ्गत्वाभावः । न च पञ्चपात्रमित्यादाविव पात्रादित्वात् स्त्रीलिङ्गत्वाभाव इति वाच्यम्, तथापि तद्वदेव नपुंसकत्वापत्त्या पुल्लिङ्गत्वानुपपत्तेः । छान्दसत्वेन समाधानं त्वगतिका गतिः । तदिदमभिप्रेत्योक्तम् **अलमिति** ।

**विट्ठल०**— स्वारसिकाकाङ्क्षाभावात् कथञ्चिदित्युक्तं **पुल्लिङ्गत्वानुपपत्तेरिति** । 'अकारान्तोत्तरपदो द्विगुसमाहारे स्त्रियामिष्ट' इति वचनादिति भावः । छान्दसत्वेन समाधानमिति चेत् तस्यागतिकागतित्वादित्यभिप्रेत्योक्तमित्यलमिति । विस्तृतं चैतच्चन्द्रिकायाम् ।

**चषकः**— **पुल्लिङ्गत्वानुपपत्तेरिति** । 'अकारान्तो द्विगुः स्त्रियामिष्ट' इति वचनेन स्त्रीलिङ्गतया द्विगोरित्यनेन ङीबन्तत्वापत्त्या पुल्लिङ्गत्वानुपपत्तिप्रसङ्गेन पात्रादित्वाश्रयणस्य चायोगादित्यर्थः ।

**॥ इति एतत्पादीयपरोक्तव्याख्याननिरासे विशेषतः पादार्थनिराकरणे तृतीयाधिकरणव्याख्यानिराकरणम् ॥**

* * *





**॥ तत्र चतुर्थपञ्चमाधिकरणयोरपव्याख्यानस्यादूषणे कारणम् ॥**

६४ **सु०— कारणत्वेनेत्यादिसूत्राणामपव्याख्यानं स्फुटदूषणमिति न दूषितम् ॥**

**परि०— स्फुटदूषणमिति** । चन्द्रिकायां व्यक्तत्वात् न अस्माभिरपि प्रपञ्च्यते ।

**यादु०— स्फुटदूषणमिति** । 'अध्यायसङ्गतेः पादसङ्गतेरप्यभावतः । पूर्वपक्षानुत्थितेश्च सिद्धान्तस्याप्ययोगतः' इत्यादि चन्द्रिकोक्तरीत्या दूषणानां स्फुटता ज्ञातव्या ।

**आनन्दः— ** ननु कारणत्वेनेत्यादिसूत्राणामपव्याख्यानं कुतो न निराक्रियत इत्यत आह **कारणत्वेनेति** ।

**शे०वा०—** कारणत्वेन जगद्वाचित्वाद्वाक्यान्वयादित्यधिकरणानामपव्याख्यानानिराकरणेन प्रसक्तां तद्व्याख्यानस्यानुमतताभ्रान्तिमनिरासे निमित्तोपन्यासेन परिहरति **कारणत्वेनेत्यादिसूत्राणामिति** । **अपव्याख्यानमिति** । 'आत्मन आकाशः सम्भूत' इति वेदान्तेषु क्वचिदाकाशादिकायाः सृष्टेरुक्तेः, क्वचित् 'तत्तेजोऽसृजते'ति तेजआदिकायाः तस्या उक्तेः, वेदान्तानां विरोध इति प्राप्ते, सृज्येष्वाकाशादिषु सृष्टिक्रमादिद्वारकविगानेऽप्येकस्मिन्वेदान्ते 'सोऽकामयते'ति चेतनस्य कारणत्वेन व्यपदेशवत् 'तदैक्षत तत्तेजोऽसृजते'ति वेदान्तान्तरेऽपि तस्यैव कारणत्वेन व्यपदेशान्न कारणत्वे विगानमिति 'कारणत्वेने'त्यस्य । 'यस्य चैतत्कर्मे'ति धर्माधर्माख्यजीवलिङ्गात् 'प्राण एकधा भवती'त्युत्तरवाक्ये प्राणशब्दश्रवणात् 'यस्य चैतत्कर्म स वेदितव्य' इति वाक्ये वेदितव्यत्वेनोक्तो जीवो वा मुख्यप्राणो वेति प्राप्ते एतत्कर्मेत्यत्रैतच्छब्दस्य प्रत्यक्षसिद्धजीववाचित्वात् कर्मशब्दस्य च क्रियत इति व्युत्पत्त्या क्रियमाणवाचित्वात् जगत्कर्तृत्वस्य च जीवादावयोगाद् ब्रह्मैव वेदितव्यत्वेनोक्तमिति जगद्वाचित्वादित्यस्य 'न वा अरे पत्युः कामाय पतिः प्रियो भवति । आत्मनस्तु कामाय सर्वं प्रियं भवती'ति पूर्ववाक्ये प्रियाप्रिययुक्तस्य भोक्तुर्जीवस्योपक्रमात् 'आत्मा वा अरे द्रष्टव्य' इत्यादिवाक्यं जीवपरमिति प्राप्ते 'आत्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेनेदं सर्वं विदितमि'त्येकविज्ञानेन सर्वविज्ञानादिवाक्यस्य जीवपक्षेऽनन्वयाद् ब्रह्मपक्ष एव चान्वयाद् ब्रह्मपरमिति वाक्यान्वयादित्यन्यापव्याख्यानमित्यर्थः । **स्फुटदूषणमिति** । कारणत्वेनेत्यस्य सौत्रचशब्दे तुशब्दार्थत्वस्य कारणत्वेनेत्यस्य विच्छेदाविच्छेदाभ्यामुभयार्थत्वस्य क्लिष्टत्वादाकाशादिष्वित्यस्यान्वयार्थं सृष्टिद्वारकविगानशब्दस्याध्याहार्यत्वात् विरोधनिरासस्य अविरोधलक्षण एव सङ्गतत्वेन अध्यायार्थसमन्वयाप्रतिपादकतया अध्यायासङ्गतेः । प्रधानाशब्दत्वाप्रतिपादकत्वेन पादासङ्गतेः । 'तत्तेजोऽसृजत' इत्यत्राकाशसृष्टिमुक्त्वा तेजःसृष्ट्युक्त्या तत्रोक्तानुक्तिमात्रसद्भावेऽप्याकाशात्पूर्वं तेजःसृष्टेरनुक्त्या विरोधशङ्कारूपपूर्वपक्षानुत्थानात् । 'सदेव सोम्येदमग्र आसीत्' 'असदेवेदमग्र आसीत्' इति कारणेऽपि विगानदर्शनेन सिद्धान्तस्याप्ययोगादिति दूषणजातम् । जगद्वाचित्वादित्यत्रापि पादार्थस्य प्रधानाशाब्दत्वस्याप्रतिपादनेन पादासङ्गतिः । समाकर्षादित्यत्रान्वितानां शब्दानामेव मद्रीत्या अन्वयसम्भवे





एतच्छब्दस्येत्यध्याहारो न युक्त इति दूषणजातम् । वाक्यान्वयादित्यत्र समन्वेतव्यविशेषानुक्त्या पूर्वशेषत्वस्यैव स्पष्टत्वेन समन्वयपरत्वानुपपत्तिः पादासङ्गतिश्चेत्यादिदूषणजातं स्पष्टमेवेति कारणत्वेनेत्याद्यपव्याख्यानं स्फुटदूषणमित्यर्थः । विस्तरस्तु चन्द्रिकायां द्रष्टव्यः । **न दूषितमिति** । भाष्यकृतेति शेषः ।

**वा०र०**— कारणत्वेनेत्येतदधिकरणीयक्वचिदात्मन आकाशः सम्भूत इत्याकाशादिः सृष्टिराम्नायत इत्येतद्भाष्यसङ्ग्रहरूपवेदान्तेषु क्वचिदाकाशादिकेत्यादि चन्द्रिकानुसारेण कारणत्वेनेत्येतदधिकरणशरीरं समाकर्षाधिकरणबहिर्भावाश्रयणेन परपरिकल्पितोत्तराधिकरणयोस्तु समाकर्षाधिकरणीययच्चोक्तमुभाभ्यां यो वै बालाके इति, यच्चोक्तमुभाभ्यां आत्मा वाऽरे द्रष्टव्य इत्यादिकमिति च चन्द्रिकोक्तभाष्यसङ्ग्रहप्रकारानुसारेण शरीरं दर्शयति **आत्मन आकाशः सम्भूत इत्यादिना** । जीवलिङ्गाज्जीवो वा प्राणशब्दश्रवणान्मुख्यप्राणो वेति सम्बन्धः । कारणत्वेन समाकर्षादित्येतदधिकरणीयचन्द्रिकानुसारेणापव्याख्यानदूषणं स्पष्टयति **कारणत्वेनेत्यत्रेत्यादिना** । सम्पूर्णदूषणानामनभिधानात् कथमुच्यते दूषणजातमितीत्यतः तत्प्रकारमात्रप्रदर्शनेऽप्यधिकदूषणानि चन्द्रिकोक्तरीत्या सन्त्येवेति न कश्चिद्दोष इत्याशयेनाह **विस्तरस्त्विति** ।

**स०व्र०**— **स्फुटदूषणमिति** । अध्यायपादसङ्गत्यभावेन पूर्वपक्षसिद्धान्तानुत्थित्या चेत्यर्थः ।

**विठ्ठल०**— **कारणत्वेनेत्यादिसूत्राणामिति** । 'कारणत्वेन चाकाशादिषु यथा व्यपदिष्टोक्तेरि'त्यधिकरणस्य पादासङ्गतिलक्षणं दूषणं सुधायामेव कारणत्वेनेत्यादौ तदभावादित्यत्राभिहितं तत्सूत्रापव्याख्यानप्रकारश्चास्माभिस्तत्रैव प्रदर्शित इति नेहोच्यते । यच्च समाकर्षादित्यस्य व्याख्यानं 'असद्वा इदमग्र आसी'दित्यत्र असत्कारणत्वेनोच्यत इति प्राप्ते 'अस्ति ब्रह्मेति चेद्वेदे'ति प्रकृतं ब्रह्मैवासद्वेत्यत्र समाकृष्यत इति सिद्धान्त इति । तत्राप्यस्य सूत्रस्य ब्रह्मण्यसच्छब्दसाधकत्वेन समन्वयपरत्रिपाद्यामेव सङ्गतिः न तु प्रधानशाब्दत्वनिरासकेस्मिन्पाद इति दूषणस्य स्फुटत्वात् यदपि जगद्वाचित्वादित्यस्य व्याख्यानां 'यो वै बलाक एतेषां पुरुषाणां कर्ता यस्य चैतत्कर्म स वेदितव्य' इति कौषीतकब्राह्मणस्थे बाला किं प्रत्यजातशत्रुवाक्ये वेदितव्यत्वेनोक्तो जीवः स्यात् । तस्य चैतत्कर्मेति धर्माधर्माख्यजीवलिङ्गात् मुख्यप्राणो वा उत्तरवाक्ये प्राण एवैकधा भवतीति प्राणशब्दादिति प्राप्ते एतत्कर्मेत्येतच्छब्दस्य प्रत्यक्षादिसिद्धजगद्वाचित्वात्कर्मशब्दस्य क्रियत इति व्युत्पत्त्या क्रियमाणवाचित्वाज्जगत्कर्तृत्वस्य च जीवादावयोगात् । **ब्रह्मैवेति सिद्धान्त इति** । तत्राप्यस्य सूत्रस्य ब्रह्मण्युदाहृतवाक्यसमन्वयसाधकत्वेन पूर्वत्रिपाद्यामेव सङ्गतिः न तु प्रधानशाब्दत्वनिरासकेऽस्मिन्पाद इति दूषणस्य स्फुटत्वाच्च कारणत्वेनेत्यादिसूत्राणां परकृतापि व्याख्यानं स्फुटदूषणमिति भावः । तथा चोक्तं चन्द्रिकायां 'अध्यायासङ्गतेः पादसङ्गतेरप्यभाव' इति ।

**॥ इति चतुर्थपञ्चमाधिकरणयोरपव्याख्यानस्यादूषणे कारणम् ॥**

* * *





**॥ तत्र षष्ठाधिकरणव्याख्यानिराकरणम् ॥**

**॥ तत्रादौ 'षष्ठं प्रकृत्यधिकरणं ब्रह्मणो जगदुपादानताप्रतिपादनार्थमि' ति भास्करादिव्याख्यानस्य निराकरणम् ॥**

**॥ तत्राप्यादौ ब्रह्मणो जगदुपादानत्वाभावे प्रमाणसद्भावः ॥**

**॥ तत्राप्यादौ श्रुतिस्मृतियुक्तिभिर्ब्रह्मणो निर्विकारत्वावगमः ॥**

**॥ तत्राप्यादौ प्रकृतिशब्देन ब्रह्मण उपादानत्वं नोच्यते ॥**

६५ **सु०—** प्रकृतिश्चेत्येतद(त्य)धिकरणं ब्रह्मणो जगदुपादानताप्रतिपादनार्थमिति व्याचक्षते ।

तथा हि । 'जन्माद्यस्य यत' इति जगत्कारणं ब्रह्मेत्युक्तम्, तत्र संशयः किमुपादानत्वेन उत निमित्तत्वेनेति । 'स ईक्षांचक्रे स प्राणमसृजत' इतीक्षापूर्वककर्तृत्वश्रवणादिना केवलं निमित्तत्वेनैवेति प्राप्तेऽभिधीयते '' 'प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्' । न केवलं निमित्तकारणमेव ब्रह्म, किन्तु **प्रकृतिः** उपादानं च । कुतः; **प्रतिज्ञादृष्टान्तानुपरोधात्** । एवं हि प्रतिज्ञादृष्टान्तौ नोपरुध्येते ।

'येनाश्रुतं श्रुतं भवति' इति ब्रह्मविज्ञानेन सर्वविज्ञानं प्रतिज्ञातम् । तच्चोपादानत्व एवोपपद्यते, कार्यस्योपादानाव्यतिरेकात् । न हि निमित्तकारणाव्यतिरेकः कार्यस्यास्ति, तक्ष्णः प्रासादव्यतिरेकदर्शनात् ।

दृष्टान्ताश्च 'यथा सोम्यैकेन मृत्पिण्डेन' इत्यादय उपादानगोचरा आम्नायन्ते । 'यतो वा इमानि भूतानि' इति पञ्चमी चोपादानत्वं गमयती''ति । जनिकर्तुः प्रकृतिरिति विशेषस्मरणात्; 'अभिध्योपदेशाच्च', 'सोऽकामयत बहु स्यां प्रजायेय' इत्यभिधानपूर्वकबहुभवनोपदेशाच्च निमित्तत्वमुपादानत्वं च गम्यते ।

'साक्षाच्चोभयाम्नानात्' । इतश्चोपादानं ब्रह्म, 'सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते आकाशं प्रत्यस्तं यन्ति' इति साक्षाद्ब्रह्मैव कारणमुपादायोभयोः प्रभवप्रलययोराम्नानात् । यद्धि यस्मात्प्रभवति यस्मिंश्च लीयते तत्तस्योपादानं प्रसिद्धम्, यथा व्रीह्यादीनां पृथिवी(ति) । प्रत्यस्तमयश्च नोपादानादन्यत्र कार्यस्य दृष्टः । 'आत्मकृतेः परिणामात्', 'तदात्मानं स्वयमकुरुते'त्यात्मनः कर्मत्वकर्तृत्वश्रवणा(व्यपदेशा)च्चोपादानं ब्रह्म । कथं पुनः





**पूर्वसिद्धस्य क्रियमाणत्वम् । परिणामात् । पूर्वसिद्धोऽप्यात्मा विकारात्मना विशेषेणात्मानं परिणामयामासेति ह्युपपन्नम् । परिणामादिति वा पृथक् सूत्रम्; सच्च त्यच्चाभवदित्यादिना ब्रह्मण एव विकारात्मना परिणामः सामानाधिकरण्येनाम्नायते, अतश्चोपादानं ब्रह्म । 'योनिश्च हि गीयते', 'यद्भूतयोनिम्' इति योनिश्च ब्रह्म गीयते, योनिशब्दश्चोपादानवचनः समधिगतो लोके, अतश्चोपादानं ब्रह्मेति ।**

**तदेतन्निराकरोति न चेति ।**

## अनु०— न च प्रकृतिशब्देन ब्रह्मोपादानमुच्यते ॥

**परि०— उपादानत्वेनेति** । उपादानत्वेनापीति निमित्ते(त्वे)नैवेति चार्थो ध्येयः । **जनिकर्तुरिति** । जायमानस्य प्रकृतिरुपादानकारणमपादानसंज्ञं भवतीत्यपादानसंज्ञायाम् 'अपादाने पञ्चमी' इति परमते सूत्रार्थः । वृत्तिमञ्जर्यादौ तु प्रकृतिशब्दः कारणमात्रपरो न तु तद्विशेषोपादानपरः । पुत्रात् प्रमोदो जायत इत्याद्यसिद्धिप्रसङ्गादित्युक्तम् । अन्यत् समम् । अत्र जनेः कर्ता जनिकर्ता तस्य जनिकर्तुरिति षष्ठीसमासो यद्यपि 'कर्तरि चे'ति सूत्रेण निषिद्धः तथाप्येतन्निर्देशबलादेव कर्तरि चेति निषेधोऽनित्य इति जनिकर्तुरिति सूत्र एव मञ्जर्यामुक्तत्वाददोष इति ज्ञेयम् । स्यामित्युत्तमपुरुषैकवचनम् । **ब्रह्मैव कारणमुपादायेति** । तल्लिङ्गादिति न्यायेनाकाशस्य ब्रह्मत्वादिति भावः । यद्यस्मात्प्रभवति तत्तस्योपादानमित्येतत् दृष्टान्तेनोपपाद्य यत् यस्मिंश्च लीयते तत् तस्योपादानमित्येतद्व्यतिरेकमुखेनोपपादयति **प्रत्यस्तमयश्चेति** ।

**गु०दी०— जनिकर्तुः प्रकृतिः** इत्यत्र जनिकर्तुर्जायमानस्य प्रकृतिरुपादानं अपादानसंज्ञं स्यादिति वृत्तिकारैर्व्याख्यातत्वेन जनिधातोर्योगे उपादानस्यैवापादानसंज्ञाविधानादिति भावः । **यथा व्रीह्यादीनां पृथिवीति** । व्रीह्यादीनां पृथिव्यादौ लयात्पृथिव्यादिकमुपादानमित्यर्थः । अयं च दृष्टान्तोऽननुगुणः तेषामङ्कुरोपादानकत्वादिति ज्ञेयम् । **योनिशब्दश्चोपादानवचन** इत्यप्यनानुभविकं, स्त्रीगवादिषु अव्यवधानेन प्रसवोपाधीनामेव योनित्वप्रसिद्धेः ।

**यादु०— कर्तृत्वश्रवणादिनेति** । आदिपदेन, ब्रह्म न द्रव्यप्रकृतिरीक्षितृत्वात् प्रभुत्वाच्च राजवत् । सुखाद्युपादाने राज्ञि साध्यवैकल्यव्यावृत्तये प्रतिज्ञायां द्रव्यपदम् । ब्रह्म न पृथिवीप्रकृतिः निर्गन्धत्वादभाववदित्याद्यनुमानमभिप्रेतम् । **एवं हि प्रतिज्ञादृष्टान्ताविति** । तथा च पूर्वपक्ष्यनुमानानां बाधितत्वमिति भावः ।





**जनिकर्तुः प्रकृतिरिति** । जनिकर्तुर्जायमानस्य प्रकृतिर्हेतुरुपादानं स्यादिति सूत्रार्थः । उदाहरणं तु शृङ्गाच्छरो जायत इत्यादि । विशेषस्मरणादित्यस्याभिप्रायमग्रे स्वयमेव दर्शयति **अभिध्यानपूर्वकमित्यादि** । तत्राभिध्यानपूर्वकस्वतन्त्रप्रवृत्तिस्मरणान्निमित्तत्वं बहुभवनस्य स्वात्मविषयकत्वकथनेन कार्यकारणाभेदसूचनादुपादानत्वं च गम्यत इति भावः । **ब्रह्मैव कारणमुपादायेति** । अत्राकाशशब्दस्य ब्रह्मवाचित्वादिति भावः । साक्षादिति चोपादानान्तरानुपादानं दर्शयति । आकाशादेवेत्यवधारणात् । नन्वत्र प्रभवप्रलययोरुभयोः प्रत्येकमुपादानतासाधकत्वमभिप्रेतम् । अन्यथा वैयर्थ्यप्रसङ्गात् । तत्र प्रभवस्योपादानभिन्नात् कर्त्रादेरपि दर्शनेन व्यभिचारसम्भावनायां सत्यामपि न द्वितीयहेतौ तत्सम्भावनेत्याशयेनाह **प्रत्यस्तमयश्चेति** । उपादानं ब्रह्मेत्यत्रोपादानग्रहणमुपलक्षणम् । निमित्तमित्यपि द्रष्टव्यम् । तथा च कर्मत्वश्रवणादुपादानं कर्तृत्वश्रवणान्निमित्तमिति विवेको द्रष्टव्यः । **सच्च त्यच्चेति** । अत्र सच्छब्देनापरोक्षं पृथिव्यप्तेजोलक्षणं त्यच्छब्देन च परोक्षं वाय्वाकाशलक्षणं भूतं विवक्षितमिति ज्ञातव्यम् । **सामानाधिकरण्येनेति** । सामानाधिकरण्येनाभेदसिद्धावुपादानत्वसिद्धिरिति भावः । **समधिगतो लोक इति** । 'पृथिवी योनिरोषधिवनस्पतीनाम्' इत्यादावित्यर्थः । एवं स्त्रीयोनेरप्यस्त्येवावयवद्वारेण गर्भं प्रत्युपादानत्वमिति द्रष्टव्यम् ।

**वं०प०— अव्यतिरेकः** अभेद इत्यर्थः ।

**आनन्दः—** ननु न च प्रकृतिशब्देनेत्यत्र ब्रह्मण उपादानत्वं निषिद्ध्यते तदयुक्तम् । उपादानत्वस्य अप्रसक्तेन निषेधायोगादित्यतस्तत्प्रसक्तिं दर्शयितुं परमतमनुवदति **प्रकृतिश्चेति** । अनुपादानत्वे प्रसक्ते उपादानत्वप्रतिपादनं त्वयुक्तम् । न च तत्प्रसक्तमित्यतस्तत्प्रसक्तिं दर्शयति **तथा हीति** । यत इति पञ्चमी हेतौ तेन जगत्कारणत्वं लभ्यत इत्यर्थः । **श्रवणादिना** इत्यत्र आदिशब्देन संहर्तृत्वं ग्राह्यम् । **अव्यतिरेकादिति** । अभेदादित्यर्थः । सूत्रोक्तप्रतिज्ञादृष्टान्तानुपरोधं उपलक्षणत्वेन व्याचष्टे **यतो वेति** । **जनिकर्तुरिति** । जायमानस्य कार्यस्य प्रकृतिहेतुः उपादानं अपादानं स्यादित्यर्थः । नन्वभिध्येत्यत्र इच्छापूर्वकस्रष्टृत्वाद्युक्त्या निमित्तत्वं प्रतीयते इत्यतो व्याख्याति **सोऽकामयतेति** । **इतश्चेति** । तथा च ब्रह्म जगदुपादानं तत्प्रलयाधिकरणत्वादित्यनुमानादित्यर्थः । अत्राप्रयोजकत्वमाशङ्क्याह **प्रत्यस्तमयश्चेति** ।

**श्रीनिधि०— ईक्षापूर्वककर्तृत्वश्रवणादिनेति** । ईक्षा श्रवणकर्तृत्वश्रवणाच्चेत्यर्थः । अन्यथा अंशतः असामञ्जस्यापत्तेः । कार्यानुकूलज्ञानेच्छाप्रयत्नानामेव कर्तृपदार्थत्वात् । न चैवमन्यतरवैयर्थ्यं सामान्यविशेषभावेन वाक्यद्वयज्ञापनार्थत्वात् । कार्यानुकूलकृतिमत्वं कर्तृमिति विवक्षयेदमित्यप्याहुः । **प्रत्यस्तमय इति** । लय इत्यर्थः ।

**शे०वा०—** कारणभावस्योभयथादर्शनं सन्देहबीजमिति भावेन सन्देहमाह **तत्रेति** । **किमुपादानत्वेनेति** । किमुपादानत्वेनापीत्यर्थः । कर्तृत्वे सत्युपादानताया एव सिषाधयिषितत्वात् । अत एव निमित्तत्वेनेत्यस्य





निमित्तत्वेनैवेत्यर्थः । निमित्तमात्रत्वस्यैवोक्तकोटिविरुद्धतया निमित्तत्वमात्रस्य तदविरोधित्वात् । अत एव जगत्कारणत्वं ब्रह्मण किं निमित्तत्वेनैव उत उपादानत्वेनापीत्येव भामत्यां संशयो दर्शितः । अत एव च उत्तरत्र पूर्वपक्षटीकायां निमित्तत्वेनैवेत्येवोपसंहार इत्यवधेयम् । ब्रह्म न द्रव्यप्रकृतिरीक्षितृत्वात् कर्तृत्वाच्च ल्लालादिवत् । सुखाद्युपादानतया कुलालादौ साध्यवैकल्यपरिहाराय प्रतिज्ञायां द्रव्यपदम् । हेतुद्वयस्य त्वान्नासिद्धत्वमिति भावेन पूर्वपक्षयति **स ईक्षामित्यादिना** । ईक्षितृत्वादिमात्रस्य अव्यभिचारितया हेतुत्वमत्राभिमतं किन्त्वीक्षितृत्वकर्तृत्वयोः प्रत्येकमेवेत्यवधेयम् । अत्रादिपदेन, ब्रह्म न द्रव्य-वत् । ब्रह्म, न पृथिवीप्रकृतिर्निर्गन्धित्वादभाववत् । द्रव्योत्पत्तिर्भिन्ननिमित्तोपादानपूर्वा द्रव्यो- । विमतमचेतनोपादानं कार्यद्रव्यत्वाद्घटादिवत् । विमतं न ब्रह्मोपादानमचेतनत्वा-परिग्रहः । निमित्तत्वेनैवेत्येवकारार्थं स्फुटयति **केवलमिति** । ननु चोदाहृतानुमानै-पीति प्रतिज्ञा बाधितविषयेत्याशयेन शङ्कते **कुत इति** । श्रौतप्रतिज्ञादि-नमित्याशयेन सौत्रं हेतुमुपादाय व्याचष्टे **प्रतिज्ञेति** । **एवम्** इत्युभयथा नक्तं प्रतिज्ञामाह **येनेति** । तदनुपरोधं स्वमते दर्शयति **तच्चेति** । दित्यत आह **न हीति** । दृष्टान्तानुपरोधमाह **दृष्टान्ताश्चेति** । म । न केवलमनुमानानां प्रतिज्ञादिलिङ्गैरेव बाधः किन्तु न प्रकृता अपि तु हेतुत्वमात्रे 'हेतुमनुष्येभ्योऽन्य-ति प्रकृतस्य पञ्चम्यर्थस्य हेतोरिति विशेषणेन नेन विद्युन्नयनाद्वरमिव प्रत्यक्षविधि-द इत्यादिषु । न च ब्रह्म गुणो-जायमानस्य कार्यस्य प्रकृति-दित्यर्थः । यद्यपि चात्र शब्दवदेतत्सूत्रस्थ- अनागते नेन





राकाशस्य तन्मात्रत्वमत्र नेष्टमित्यर्थः । **कर्मत्वकर्तृत्वव्यपदेशादिति** । आत्मानमिति कर्मत्वस्य स्वयमकुरुतेति कर्तृत्वस्य, व्यपदेशादित्यर्थः । उपादानमित्युपलक्षणम् । निमित्तं चेत्यपि द्रष्टव्यम् । कर्मत्वश्रवणादुपादानत्वस्य, कर्तृत्वश्रवणान्निमित्तत्वस्य च सिद्धिरिति भावः । **कथं पुनरिति** । सिद्धत्वसाध्यत्वयोर्विरुद्धत्वान्नैकत्र समवाय इत्यर्थः । **विकारात्मनेति** । एकेन रूपेण पूर्वसिद्धस्याप्यसिद्धरूपान्तरेण परिणामे बाधकाभावादिति भावः । एकवाक्यतया व्याख्याय वाक्यभेदेनापि व्याख्याति **परिणामादिति वेति** । अर्थभेदाभावे कथं पार्थक्यमित्यतो भेदमाह **सच्च त्यच्चेति** । सुवर्णं कुण्डलमितिवत् सच्च त्यच्चेति जगता सामानाधिकरण्यादभेदादुपादानत्वम् । निमित्तत्वे तदयोगादिति भावः । **समधिगतो लोक इति** । पृथिवी योनिरोषधिवनस्पतीनामित्यादाविति शेषः । न चोपादानत्वं विनाऽपि स्त्रीयोनौ योनिशब्ददर्शनान्न तस्य प्रकृत्यर्थत्वमिति वाच्यम् । स्त्रीयोनेरप्यवयवद्वारेण गर्भं प्रत्युपादानत्वेनादोषात् । न च क्वचित्स्थानवचनोऽपि योनिशब्दो दृश्यते । 'योनिष्ट इन्द्र निषदे अकारि' इत्यादौ हे इन्द्र ते तव निषदे निषदनायोपवेशनाय स्थित्यर्थमिति यावत् । योनिः स्थानमकारीत्यर्थप्रतिभासात् कथं तेनोपादानत्वनिश्चय इति चेत् । न । 'यथोर्णनाभिः सृजते गृह्णते च' इत्येवंविधाद्वाक्यशेषात् प्रकृते प्रकृत्यर्थत्वनिश्चय इत्यभिप्रायात् । **उपादानं ब्रह्मेति** । न च ईश्वरो जगन्निमित्तमात्रमीक्षितृत्वात् कर्तृत्वात् कुलालादिवत् इत्याद्यनुमानविरोध इति वाच्यम् । अत्रेश्वरासिद्ध्या हेतोराश्रयासिद्धत्वात् । न चागमात् तत्सिद्धिरिति वाच्यम् । तथा सति यादृशमीश्वरमागमोऽवगमयति तादृश एवासावभ्युपगन्तव्यः । स चोपादानकारणं च निमित्तकारणं चेश्वरमवगमयतीति विशेष्याश्रयग्राहकत्वेनोपजीव्यागमविरोधान्नानुमानप्रवृत्तिरिति कुतस्तेन निमित्तमात्रत्वाध्यवसाय इति भावः । एवमपव्याख्यानमनूद्य तन्निरासपरतयोत्तरभाष्यमवतारयति **तदिति** ।

**वा०र०**— कारणभावस्योभयथादर्शनात् तज्जगत्कारणत्वं ब्रह्मणः किन्निमित्तत्वेनैव उत उपादानत्वेनापीति भामत्यनुसारेण तत्र लक्षणं घटरुचकादीनां मृत्सुवर्णादिवत् प्रकृतित्वे कुलालसुवर्णकारादिवन्निमित्तत्वे च समानमिति भाष्यसङ्ग्रहरूपमूलं व्याकरोति **कारणभावस्येत्यादिना** । कारणत्वस्येत्यर्थः । कुतो निमित्तत्वेनैवेत्यवधारणार्थव्याख्यानमित्यतो निर्धारणनिमित्तस्योपादानत्वसहिष्णुतयोपादानत्वे सति निमित्तत्वेनापि निमित्तत्वं पर्यवसन्नं भवतीति तत्परित्यागेनोपादानरूपनिमित्तेतरभिन्नत्वसहितं निमित्तत्वमेव व्याख्येयमित्याह **निमित्तत्वमात्रस्यैवेति** । उपादानत्वाभावेनाविशेषितनिमित्तत्वस्यैवेत्यर्थः । **उक्तकोटीति** । उपादानत्वेनापीति कोटीत्यर्थः । **निमित्तत्वमात्रस्येति** । उपादानत्वाभावेन विशेषितनिमित्तत्वस्येत्यर्थः । व्याख्यानद्वयेऽपि उपष्टम्भकमप्याह **अत एवेति** । भामतीवाक्यमुभयत्रोपष्टम्भकं, उत्तरं तु निमित्तत्वेनैवेत्येतद्व्याख्यान इति विवेकः । तत्र निमित्तकारणमेवेत्यादि भाष्यव्याख्यानरूप ईक्षापूर्वककर्तृत्वं प्रभुत्वस्य सरूपता । निमित्तकारणेष्वेव नोपादानेषु कर्हिचिदिति भामत्युक्तहेतुव्याख्यानरूप ब्रह्म न द्रव्यप्रकृतिरीक्षितृत्वादित्यादिकल्पतर्वनुसारेणाह **ब्रह्म न द्रव्येत्यादिना** । ईक्षापूर्वकेत्युक्तावपीक्षितृत्वकर्तृत्वयोः प्रत्येकमेव हेतुत्वं अन्यतरस्य वैय्यर्थ्यप्रसङ्गे विशिष्टस्य हेतुत्वकल्पनावैय्यर्थ्यात् । तथा च ईक्षितृत्वात् कर्तृत्वादित्यनूद्य स्वतन्त्रत्वादिति





यावदिति कल्पतरूक्तं निरस्तमित्याशयेनाह **कर्तृत्वाच्चेति** । वक्ष्यति च 'न विशिष्टस्य हेतुत्वमत्राभिमतमि'ति । **सुखादिति** । स्वपरमतयोरन्तःकरणपरिमाणत्वेऽपि तार्किकरीत्येदमिति बोध्यम् । मूले **श्रवणादिनेति** । श्रवणस्य ग्रहणेऽपि न श्रवणमेव हेतुः किन्तु ईक्षितृत्वकर्तृत्वे श्रवणं तु हेतुसाधकतयोपन्यस्तमित्येतन्मूलतात्पर्यं विशदयति **हेतुद्वयस्य चेति** । **व्यभिचारितया न विशिष्टस्येति** । ईक्षितृत्वादेः प्रत्येकं हेतुत्वोक्तौ व्यभिचार आयातीत्यतोऽत्र विशिष्टस्य हेतुत्वं विवक्षितमित्यत्र नाभिमतमिति योजना । **प्रत्येकमेवेति** । प्रत्येकं व्यभिचाराभावादिति भावः । प्रभुत्वाच्चेति भामत्युक्तहेतुकमनुमानमभिधायासरूपतेत्यनेनोक्ततया कल्पतरूक्तं ब्रह्म न पृथिवीप्रकृतिरित्येतदनुमानं प्रदर्शयन् तद्ग्रन्थस्थेत्यादि इत्यनेनोक्तान् प्रयोगान् स्वयमाह **ब्रह्म न पृथिवीप्रकृतिरित्यादिना** । द्रव्योत्पत्ति-पक्षकानुमानेऽपि विमतपदमभिप्रेतमेव किन्तु उत्तरानुमानेषु विमतिविषयत्वातिरिक्तरूपानुक्तेस्तद्रूपस्य मुखतः कीर्तनम्, अत्र तु द्रव्योत्पत्तित्वरूपातिरिक्तरूपादरणात् तदनुक्तिरिति ज्ञेयम् । एते च प्रयोगाः .........ग्रन्थे उक्ता द्रष्टव्याः ।

एवकारकेवलपदयोरन्यतरस्य वैय्यर्थ्यमित्याशङ्कां परिहरति **निमित्तत्वेनैवेत्येवकारार्थमिति** । आनन्द-गिर्याद्यनुसारेण कुत इत्यादिकं योजितम्, न केवलमित्यादि कल्पतर्वनुसारेणाह **न केवलमिति** । आगमे हि यत इति पञ्चमी न प्रकृतावपि तु हेतुत्वमात्रे इत्यादि प्राचीनकल्पतरुं ज्ञापनेन विद्युन्नयनादित्याद्यत्रत्यकल्पतरुं चाभिप्रेत्याशङ्क्योत्तरवाक्याशयकथनेन शङ्कां निराकुर्वन्नुत्तरवाक्यं अवतारयति **ननु श्रुतावित्यादिना** । हेतुभ्यो मनुष्येभ्यो इत्येवं वृत्त्यादावुक्तत्वेऽपि कल्पतर्वनुसारेणैकवचनम् । ज्ञापनेन न स्वतोऽर्थसिद्धिः । पाणिनीये ज्ञापकयोगविभागलभ्यस्य व्याकरणान्तरस्थविधिमूलकतया तद्विधावेव पर्यवसानात् तस्य च अनुमिततया स्मृत्यनुमितश्रुतेः प्रत्यक्षश्रुतित इव श्रुतिलिङ्गवाक्येत्यधिकरणरीत्या लिङ्गानुमितश्रुतेः प्रत्यक्षश्रुतित इव च प्रत्यक्षाज्जनिकर्तुरुपादाने पञ्चमीत्येतस्माद्विधेर्दुर्लभतया तदपवादेन प्रत्यक्षविधिप्राप्तप्रकृतावेव पञ्चमीयमित्याह **ज्ञापनेनेति** । एतेन ज्ञापनस्य प्रत्यक्षविधिप्रतियोगितया तत एव प्रत्यक्षविधेः प्राबल्याभिप्राये उन्नीतविधि-पर्यन्तगमनमनर्थकमिति परास्तम् । ननु व्याकरणान्तरस्थविधेरपि प्रत्यक्षमेव । अत एव तद्विधं दृष्ट्वैव व्याख्यातॄणां ज्ञापकाद्यन्वेषणप्रवृत्तिः तथा चोन्नीतविधेरपि प्रत्यक्षतया कथं प्रकृतित्वोपादाने प्रत्यक्षविधिप्राप्तत्वं हेतुरुच्यत इत्यतो ज्ञापकस्यान्यथासिद्धत्वादत्राप्राप्तिरित्याह **किञ्चेति** । एतच्च 'अस्तु वोपादाने पञ्चमी तथापी'त्यादिवक्ष्यमाणमूलटीकोपपादनावसरे व्यक्तीभविष्यति **न च ब्रह्मेति** । ब्रह्म च न गुण इति सम्बन्धः । **अनाश्रितत्वादिति** । वोतो गुणवचनादित्येतत्सूत्रीयगुणपदार्थकथनरूपसत्त्वे निवेशिते अपैतीत्यादि श्लोक-वार्तिके आश्रितत्वस्य तल्लक्षणत्वोक्तेरिति भावः । **स्यादिति** । अतस्तेन पञ्चम्यप्राप्त्येर्युक्तं प्रकृतित्वोपादानमिति भावेनेत्यर्थः । कल्पतरौ प्रकृतिरपादानसंज्ञा भवतीत्येवोक्तेऽपि प्रकृतिग्रहणस्य वक्ष्यमाणरीत्या सूत्रोपात्त-प्रकृतिमात्रपरत्वं प्रकृतित्वं चात्राभिप्रेतोपादानत्वरूपमेव परस्य विवक्षितमिति पराशयं स्पष्टयितुं प्रकृतिपदं व्याचष्टे **उपादानमिति** । मञ्जर्यादौ कारणपदस्योपादानपरत्वाद्युक्तेरेवमित्यप्याहुः । जनीत्येतस्य पञ्चमीविधायक-त्वाभावादुक्तं **ततोऽपादान इत्यादि** । अथ मतमुपादान इत्युत्तरमूलानुसारेणेदमिति ज्ञेयम् । **सर्वकारकेति** । एतच्चान्ये





तु ध्रुवग्रहणानुवृत्तेरेव प्रकृतिपरिग्रहे सिद्धे प्रकृतिपरिग्रहणं कारणमात्रपरिग्रहार्थं वर्णयन्ति । अत एव वृत्तौ कारणमित्येवोक्तं न पुनरुपादानकारणमितीति मञ्जर्यां न्यासोक्तपक्षानुवादोऽस्ति तन्न्यासाद्यनुसारेणाशङ्कनम् । स्पष्टं चेदं विशेषणस्मरणादित्युक्तमिति चेदित्युत्तरमूलव्याख्यावसरे टीकाकृदेव प्रतिपादयिष्यतीति बोध्यम् । अनागते चेत्यादि भामतीतद्व्याख्यानरूपसौत्राभिध्यानागतवस्तुनीच्छेत्यादि कल्पतरुं च मनसि कृत्वाह **अभिध्येत्यादिना** । भामती-कल्पतरु-आनन्दगिर्याद्यनुसारेण अपव्याख्यानसमाप्तिपर्यन्तो ग्रन्थो विशिष्य व्याकर्तव्योऽस्ति ।

**स०व्र०— जनिकर्तुः प्रकृतिरितीति** । जायमानस्य प्रकृतिर्हेतुरुपादानं स्यादिति सूत्रार्थः । उदाहरणं तु ब्रह्मणः प्रजाः प्रजायन्त इति । **ब्रह्मैव कारणमुपादायेति** । अत्राकाशशब्दस्य ब्रह्मवाचित्वादिति भावः । साक्षादिति चोपादानान्तरानुपादानं दर्शयति आकाशादेवेत्यवधारणात् । हेत्वन्तरमाह **प्रत्यस्तमयश्चेति** । प्रत्यस्तमयशब्देन यत्र विनाशोऽभिधीयते तत्रोपादानमेव विनाशाधिकरणतया निर्दिश्यत इति दृष्टमिति भावः । **समधिगतो लोक इति** । पृथिवीयोनिरौषधिवनस्पतीनामित्यादावित्यर्थः ।

**विट्ठल०— कर्तृत्वश्रवणादिनेति** । आदिपदेन ब्रह्म नोपादानकारणं चेतनत्वादित्यादिलिङ्गमभिप्रेतम् । **कार्यस्येति** । ब्रह्म कारणं सर्वं कार्यमिति निश्चितम् । तत्र ब्रह्मज्ञाप्यत्वे प्रपञ्चस्य ब्रह्मण उपादानत्वमेव वक्तव्यम् । ज्ञाप्यस्य कार्यस्योपादानकारणेनैवाभेदात् भिन्नत्वेऽन्यज्ञानेनान्यज्ञानानुपपत्तेरिति भावः । उपादानकारणेनैवाभेद इति नियमः कुत इत्यत आह **न हीति** । **जनिकर्तुः प्रकृतिरिति** । जनिकर्तुः जायमानस्य प्रकृतिरुपादानकारणमपादानसंज्ञिकं स्यादिति सूत्रार्थः । उदाहरणं तु शृङ्गाच्छरो जायत इत्यादि ततश्चापादाने पञ्चमीति पञ्चमी स्यादिति परीत्या सूत्रार्थः । वस्तुतस्तु वृत्तिमञ्जर्यादौ प्रकृतिशब्दः कारणमात्रपरः न तु तद्विशेषापादानपरः । तथात्वे पुत्रात्प्रमोदो जायत इत्याद्यसिद्धिप्रसङ्गादित्युक्तम् । सोऽकामतेत्यभिध्यानोपदेशान्निमित्तत्वं बहु स्यामिति बहुभवनस्य स्वविषयकत्वेनोपादानत्वं त्ववगम्यत इति भावः । **ब्रह्मैव कारणमिति** । आकाशाधिकरणन्यायेनाकाशशब्दस्य ब्रह्मवाचित्वादिति भावः । साक्षादिति चोपादानान्तरानुपादानं दर्शयति ब्रह्मैवेत्यवधारणात् । स प्रभवस्योपादानभिन्नकर्तरिपि दर्शनेन व्यभिचारस्य सम्भावितत्वेऽपि प्रत्यस्तमयस्य तत्सम्भावना नेत्याशयेनाह **प्रत्यस्तमयश्चेति** । कथं पुनरिति शङ्काया उत्तरमाह **परिणामादिति** । **समधिगतो लोक इति** । पृथिवी योनिरोषधिवनस्पतीनामित्यादावित्यर्थः।

**॥ अथ ब्रह्मण उपादानस्य श्रुत्यादौ निषिद्धत्वम् ॥**

**६६ सु०— कुतो नोच्यत इति चेत् । प्रमाणान्तराविरुद्धो हि सूत्रार्थो वर्णनीयः । उपादानत्वं च ब्रह्मणः श्रुत्यादिविरुद्धम् । परिणामिकारणं ह्युपादानमुच्यते, यथा घटरुचकादीनां मृत्सुवर्णादि । ब्रह्मणश्च स्वरूपान्तरापत्तिलक्षणो विकारापरपर्यायः परिणामो निषिद्ध्यते श्रुत्यादाविति कथं सूत्रार्थतया वक्तुं शक्यत इत्याह अविकार इति ।**





अनु०— अविकारः सदा शुद्धो नित्य आत्मा सदा हरिः ।
सदैकरूपविज्ञानबल आनन्दरूपकः ॥
निर्विकारोऽक्षरः शुद्धो निरातङ्कोऽजरोऽमरः ।
अविश्वो विश्वकर्ताऽजो यः परः सोऽभिधीयते ॥
निर्विकारमनौपम्यं सदैकरसमक्षयम् ।
ब्रह्मेति परमात्मेति यं विदुर्वैदिका जनाः ॥
इति श्रुतिपुराणोक्त्या न विकारी जनार्दनः ।

सदाशब्दद्वयस्य अविकारः शुद्ध इत्याभ्यां सम्बन्धः । विकारो द्वेधा भवति, धर्मिणो धर्मस्य चेति । तत्र अविकारः सदा इत्याद्यस्य निषेधः । सदैकरूपेति द्वितीयस्य । **एकरूपे निर्विकारे विज्ञानबले** यस्यासौ तथोक्तः । उपमाविषय औपम्यम्, न औपम्यम् **अनौपम्यम्** । **एकरसं** स्वगतभेदवर्जितम्, प्रधानानन्दात्मकं वा । **न विकारीति** गम्यत इति शेषः ।

**परि०— इत्याहेति** । यद्यपीदं न मिथ्यावादिदूषणम् । तथापि भास्करादिना जगत्सत्यत्वमुपेत्य ब्रह्मपरिणामोपगमात् तं प्रतीति ध्येयम् । **आभ्यां सम्बन्ध इति** । सदाऽविकारः सदा शुद्धः जडामिश्रः इति सम्बन्ध इत्यर्थः । नयचन्द्रिकायां तु सदात्मा मुक्तिदशायामपि स्वामीत्युक्तम् । ननु सदाऽविकार इत्यनेन सदैकरूपीत्यादि पुनरुक्तमित्यत आह **विकारो द्वेधेत्यादि** । धर्मिणो यथा मृदादेः घटाद्यापत्तिः धर्मस्य यथा बदरादिफलेषु श्यामत्वरक्तत्वादि । श्रुतिपुराणोक्तेः न विकारीत्युक्तविकारित्वहेतुत्वायोगादाह **इति गम्यत इति शेष इति** ।

**यादु०— रुचकं** कण्ठभूषणम् । 'स आनन्दो रसस्तत' इति प्रमाणं मनसि निधायाह **प्रधानानन्दात्मकं चेति** । मूलेऽविकार इति च पृथक् प्रमाणमिति मन्तव्यम् ।

**वं०प०— आद्यस्य** धर्मिविकारस्य । **द्वितीयस्य** धर्मविकारस्य ।

**आनन्दः—** नन्वविकार इत्यादिना ब्रह्मणो विकारशून्यत्वे प्रमाणोदाहरणमयुक्तम् । अनुपादानत्वस्य पूर्वं प्रतिज्ञातत्वेन तत्प्रमाणोदाहरणस्यैव सङ्गतत्वादित्यतो विवर्ताधिष्ठानत्वरूपमुदानत्वं नाभिमतं इति युक्तम् ।





पूर्ववादिनस्तथा च परिशेषाद्विकारापरपर्यायपरिणामित्वरूपमुदानत्वमेव परस्याभिमतं इति युक्तम् । अविकारत्वे प्रमाणोदाहरणमित्याशयेनाह **प्रमाणान्तरेति** । अस्तु ब्रह्मणस्तादृशमुपादानत्वं इत्यत्राह **ब्रह्मणश्चेति** । ननु परिणामयतीति व्युत्पत्त्या लब्धं यत्परिणामशब्दवाच्यत्वं तन्निषिद्ध्यत इति प्रतीतिं वारयितुं विकारपरपर्याय इति अत्रापि विविधं करोति इति व्युत्पत्त्या हरेरपि तादृशपरिणामसद्भावादयुक्तो निषेध इत्यत उक्तं **स्वरूपान्तरा-पत्तिलक्षण इति** । ननु भावप्रत्ययान्तस्य अनौपम्यशब्दस्य धर्मपरत्वाद्धर्मिवचनेन निर्विकार इत्यनेन सामा-नाधिकरण्यमनुपपन्नं इत्यतः सम्बन्धार्थकष्यञ्प्रत्ययान्तमभिप्रेत्याह **उपमेति** । विशेषार्थकस्य निर्विकार इत्यादेर्विशेषाभावार्थक एकरसशब्देन विरोध इत्यतो व्याख्याति **स्वगतेति** । अनेन च एकस्वरूपत्वोक्त्या स्वगतभेदाभाव उक्तो भवतीत्यर्थः । **प्रधानेति** । अत्रैकशब्दः प्रधानवाची । रसस्य तावत् 'रसं ह्येवायं लब्ध्वानन्दीभवती'ति श्रुतेः रसशब्देनानन्दो ग्राह्यः । पुराणोक्त्या न विकारीत्युक्ते विकाराभावे पुराणोक्तेर्हेतुत्वं प्रतीयते । अतश्च श्रुत्यादिविरुद्धम् । अतः परिशेषेण व्याख्याति **गम्यत इति शेष इति** ।

**श्रीनिधि०— उपमाविषय औपम्यमिति** । गुणवचन ब्राह्मणादिभ्यः कर्मणि ष्यञित्यनेन ष्यञिति भावः । न तु भावे तथात्वे अनुपमत्वमित्यापत्त्या असामञ्जस्यापत्तेः ।

**शे०वा०**— ननु ब्रह्मणः श्रुत्यादिबलेन निर्विकारत्ववर्णनपरोत्तरवाक्यं व्यर्थमित्यतो, 'न च प्रकृति' इति प्रतिज्ञाते ब्रह्मण उपादानतायाः सूत्रार्थत्वाभावे श्रुत्यादिविरुद्धत्वरूपहेतुकथनार्थत्वान्न तद्वैयर्थ्यमित्याशयेन हेतुपरतयोत्तरवाक्यं सङ्गमयितुं हेत्वाशङ्कामुत्थापयति **कुत इति** । कथमस्य गमकत्वमित्यतो यः सूत्रार्थः स श्रुत्याद्यविरुद्ध इति नियमादिति भावेन व्यतिरेकव्याप्तिं सूचयति **प्रमाणान्तरेति** । यः सूत्रार्थः स प्रमाणाविरुद्ध इति हि प्रसिद्धमिति योजना । यदि हि कश्चिदपि सूत्रार्थः प्रमाणविरुद्धो भवेत् तदा प्रमाणविरुद्धत्वस्य तत्रैव व्यभिचरिततया असूत्रार्थत्वगमकत्वं न स्यात् । न चैतदस्तीत्यभिप्रायः । व्याप्तिमुक्त्वा पक्षधर्मतामाह **उपादानत्वं चेति** । ननु 'अविकारः सदा शुद्धः' इत्युदाहरिष्यमाणश्रुत्यादिभिर्विकारनिरासेऽप्युपादानत्वानिरासा-न्नोपादानत्वस्य श्रुत्यादिविरुद्धत्वमित्यत उपादानत्वस्य विकारघटितमूर्तिकत्वान्निर्विकारत्वाभिधायकश्रुत्यादि-विरुद्धत्वमेवेत्यभिप्रेत्य तत्स्वरूपमाह **परिणामीति** । ननु तावतोपादानत्वेन ब्रह्मणः परिणामित्वप्राप्तावपि विकारित्वाप्राप्तेः कथं निर्विकारत्वाभिधायकश्रुत्यादिविरोधसिद्धिः, इत्यतो रूपान्तरापत्तिलक्षणपरिणामस्य विकारापरपर्यायत्वादस्त्येव विकारित्वप्राप्तिरिति कथं न तद्विरोध इति भावेनाह **ब्रह्मणश्चेति । आभ्यां सम्बन्ध इति** । सदा विकारः सदा शुद्ध इत्याभ्यां सम्बन्ध इत्यर्थः । अविकारत्वशुद्धत्वयोः सार्वकालिकत्ववर्णनस्य निर्विकारत्वश्रुतिविरोधोपपादकत्वेन अवश्यवक्तव्यत्वात् अन्यथा कादाचित्कविकारादिमतो हरेरविकारापगमे विकारवत्कारणत्वरूपोपादानत्वोपपत्तेरुपादानत्वस्य श्रुत्यविरुद्धत्वप्रसङ्गादिति ध्येयम् । नन्वविकारः सदेत्यनेनैव विकाराभावबोधनात् श्रुतौ सदैकरूपविज्ञानबल इत्यस्यानर्थक्यमित्यतो विकारस्य द्वैविध्यादविकार इत्यनेन निरस्तविकारातिरिक्तविकारान्तरनिरासकत्वान्न वैयर्थ्यमित्यभिप्रेत्य तद्वैविध्यमाह **विकार इति** । एवं विकार-





द्वैविध्यमभिधाय अनियमेन यस्यकस्यचित् यत्किञ्चिद्विकारनिवर्तकत्वमिति भ्रान्तिनिरासाय व्यवस्थया विकारद्वयनिवर्तकत्वं विशेषणद्वयस्य दर्शयति **तत्रेति** । धर्माणां विकाराभावस्य सदैकरूपविज्ञानबल इत्यत्र अनभिधानात् कथं धर्मविकारनिषेधकत्वं तस्येत्यतः प्रकृतोपयोगितया तद्व्याचष्टे **एकरूपे निर्विकार इत्यादिना** । **उपमाविषय औपम्यमिति** । सोपम इत्यर्थः । 'तद्धिता' इति बहुवचनज्ञापित 'विचित्रा तद्धितगतिः' इति वचनादुपमाया अयमित्यर्थे ष्यञि आदिवृद्धौ यस्येति चेत्याकारलोपे औपम्यशब्दसिद्धिरिति भावः । नञ्समासमभिप्रेत्याह **नेति** । उपलक्षणं चैतत् । उपमैवोपम्यम् । उक्तरीत्या स्वार्थिकोऽत्र ष्यञ् । नास्त्यौपम्यं यस्येति बहुव्रीहिरपि द्रष्टव्यः । 'एकः प्राधान्यतस्तथा' इतीशावास्यभाष्यं 'स आनन्दो रसस्ततः' इति तैत्तिरीय-भाष्यं च मनसि निधाय व्याचष्टे **प्रधानानन्दात्मकमिति** । श्रुत्यादेर्ज्ञापकत्वेन कारकत्वाभावाद्योग्यं शेषं पूरयति **गम्यत इति शेष इति** ।

**वा०र०**— बहुव्रीहिशङ्कानिरासार्थं समानाधिकरणसमासोऽयमित्याह **नञ्समासमिति** । समासान्तर-स्यात्राप्रसक्तिभ्रान्तिं वारयति **उपलक्षणं चैतदिति** ।

**स०व्र०**— **रुचकं** कण्ठभूषणम् । मूले प्रमाणान्तरम् 'अविकार' इति । मूले प्रमाणान्तरं 'निर्विकारमि'ति ।

**विट्ठल०**— **रुचकं** कण्ठभूषणम् । ननु सदा विकार इत्यनेन सदेकरूपेत्यादि पुनरुक्तमित्यत आह **विकारो द्वेधेत्यादि** ।

**चषकः**— **घटरुचकानामिति** । कलशकण्ठभूषणानामित्यर्थः ।

**॥ इति ब्रह्मण उपादानस्य श्रुत्यादौ निषिद्धत्वम् ॥**
**॥ इति प्रकृतिशब्देन ब्रह्मण उपादानत्वं नोच्यते ॥**

* * *

**॥ अथ युक्तिविरुद्धं च ब्रह्मणो विकारित्वम् ॥**
**॥ तत्रादौ विकारप्रकारप्रदर्शनम् ॥**

**६७ सु०— युक्तिविरुद्धं च ब्रह्मणो विकारित्वमिति वक्तुं विकारप्रकारांस्तावदाह पराधीनेति ।**

**अनु०— पराधीनविशेषाप्तिरनिवर्त्योऽन्यथाभवः ॥**
**क्षीरादिवद्विकारः स्यात्**





**विकारस्तावद् द्विविधो भवति, विशेषाप्तिर्विशेषिपरिवर्त(वृत्ति)श्चेति । तत्र विशेषाप्तिर्नाम धर्मिणस्तादवस्थ्ये सति धर्ममात्रपरिवृत्तिः । विशेषिपरिवर्त(वृत्ति)स्तु धर्मिस्वरूपस्यैव परिणामः । द्विविधोऽप्ययं पराधीनो भवति । प्रत्येकं च द्वेधा, अनिवर्त्योऽन्यथाभावोऽनिवर्त्यश्चेति । अत्रैकैकप्रकारानुक्तिः स्फुटत्वादिति ज्ञातव्यम् । अन्यथा वाक्यस्यासामञ्जस्यं स्यात् ॥ क्षीरादिवदिति चतुर्णामुदाहरणम् । क्षीरादीनामिव दधित्वाद्यापत्तिरित्यर्थः ।**

**परि०— वक्तुमिति** । 'नैव स स्यादि'त्यनेनेति योज्यम् । नन्वेवं चातुर्विध्यस्याभिमतत्वे सति पराधीनविशेषावाप्तिरित्यत्र पराधीनविशेषिपरिवर्तश्चेति अनिवर्त्योऽन्यथाभाव इत्यत्र निवर्त्यान्यथाभावश्चेति च कोटिद्वयं वक्तव्यं स्यात् । आद्ये कोटिद्वये द्वितीयकोटिद्वये चैककोट्युक्तिर्विशेषिपरिवर्तकोटेर्निवर्त्याभावकोटेश्चानुक्तिः कुत इत्यत आह **अत्रैकैकेति** । **अन्यथा वाक्यस्येति** । यथान्यासं प्रकारद्वयस्यैव विवक्षायां विशेषाप्तिप्रतिद्वन्द्विनो विशेषिपरिवर्तरूपकल्पस्यैव वाच्यत्वेनानिवर्त्यान्यथाभावकल्पो न वाच्यः स्यात् । क्षीरस्य दधिभावरूपानिवर्त्यविशेषिपरिवर्तोदाहरणं चासङ्गतं स्यात् । अनिवर्त्यान्यथाभावप्रतिद्वन्द्विनो निवर्त्यान्यथाभावरूपकल्पस्यैव वाच्यत्वेन विशेषावाप्तिकल्पो न वाच्यः स्यात् । तथा च यथा शब्दो नित्यो गुणः सम्भवतीति कल्पद्वयपरं वाक्यं नित्योऽनित्यः गुणो द्रव्यं चेति कल्पद्वये सति समञ्जसं अन्यथा न समञ्जसं तथेदमपि मूलवाक्यं विशेषाप्तिर्विशेषिपरिवर्तश्च अनिवर्त्यान्यथाभावो निवर्त्यान्यथाभावश्चेति कोट्यन्तरद्वये सति समञ्जसम् । अन्यथा तु यथोक्तकल्पयोः परस्परप्रतिद्वन्द्विताऽभावात् उक्तरूपेण द्विरूपोक्तिपरं वाक्यमसमञ्जसं स्यादित्यर्थः । यद्वा प्रकारान्तरद्वयमेवोक्त्वा नैवेति वाक्येन निषेधे प्रकारान्तरस्यानिषेध एव हरौ कृतः स्यात् । तथा च विकारनिषेधार्थं प्रवृत्तोऽयं श्लोकोऽभिमतार्थसाधकत्वेनासमञ्जसः स्यादित्यर्थः । अत एव वक्ष्यति 'न च पञ्चमी विधा दृष्टा सम्भाविता वा' इति ।

**गु०दी०— अत्रैकैकप्रकारानुक्तिः** इति विशेषाप्तिरित्यनेन धर्मपरिवर्तग्रहणेऽपि धर्मिपरिवर्तानुक्तेः, **अनिवर्त्योऽन्यथाभाव** इत्यत्र निवर्त्यान्यथाभावस्यानुक्तेः, एकैकप्रकारानुक्तिरित्यर्थः । **अन्यथा वाक्यस्यासामञ्जस्यं स्यादिति** । **अनिवर्त्यः अन्यथा** पूर्वस्थितरूपात्प्रकारान्तरेण भवः उत्पत्तिरिति वदता अनिवर्त्यान्यथाभवस्य विशेषाप्तेः धर्मपरिवर्तरूपत्वेन धर्मिपरिवर्तस्यापि वक्तव्यत्वात् तदसङ्ग्रहे वाक्यस्यासामञ्जस्यानिस्तारादिति भावः ।





**यादु०**— **एकैकप्रकारानुक्तिरिति** । विशेषिपरिवर्तरूपप्रकारस्य निवर्त्यान्यथाभावरूपप्रकारस्य च कण्ठरवेणानुक्तिरित्यर्थः । **स्फुटत्वादिति** । उपलक्षणतया ज्ञातुं शक्यत्वादित्यर्थः । **अन्यथा वाक्यस्येति** । विकाराणामुक्तरीत्या चातुर्विध्यविवक्षाभावे पराधीनान्यथाभावो विकार इत्येव वक्तव्यम् । विशेषास्यनिवर्त्यपदे न समञ्जसे । तेन ज्ञायते विशेषपदं विशेषिणोऽनिवर्त्यपदं निवर्त्यस्य चोपलक्षकम् । ततश्चोक्तरीत्या चातुर्विध्यविवक्षासिद्धिरिति । पीतत्वकटकादिविकाराणां सौरातपस्वर्णकारातञ्चनौषधाद्यधीनत्वोक्त्या तेषां पराधीनत्वमुपपादितमिति ज्ञातव्यम् ।

**आनन्दः**— ननूत्तरकारिकायां विकारप्रकारकथनमयुक्तम् । विकाराभाववचनस्यैव सङ्गतत्वात् । किञ्च विकाराणामनेकविधत्वात् किञ्चिद्विकाराभावेऽपि विकारान्तरं स्यादेव । श्रुत्यादिकं तु तद्विषयं भविष्यतीत्यत आह **युक्तिविरुद्धं चेति** । ननु विशेषिपरिवर्तो निवर्त्यान्यथाभावश्च मूले कुतो नोक्त इत्यत्राह **अत्रैकैक इति** । ननूक्तप्रकारद्वयाभावादनुक्तिरिति किं न स्यादत आह **अन्यथेति** । अन्वयानुत्पत्त्या वाक्यस्यासामञ्जस्यं स्यादिति भावः ।

**शे०वा०**— निर्विकारत्वस्य समर्थितत्वात् 'न विकारी जनार्दनः' इत्युपसंहृतत्वाच्च पुनर्विकारानेकविधत्ववर्णनमनर्थकमित्यतो युक्तिविरोधोपपादकत्वान्नानर्थक्यमित्याशयेनोत्तरवाक्यं सङ्गमयति **युक्तीति** । **वक्तुमिति** । नैव स स्यात् इत्यादिनेति शेषः । वक्ष्यमाणं प्रत्येकं द्वैविध्यमभिप्रेत्य तावच्छब्दः । किं तद्विधाद्वयमित्यतो विशिष्य निर्दिशति **विशेषाप्तिरिति** । अत्र विशेषाप्तेर्मूले कण्ठोक्तत्वात् प्राधान्यं विशेषिविपरिवर्तस्य च सूचितत्वात् अप्राधान्यमिति भावेन पूर्वं विशेषाप्तेर्निर्देशोऽनन्तरं च विशेषिविपरिवर्तस्येति ध्येयम् । यथोद्देशं विकारद्वयं लक्षयति **तत्रेति** । तर्हि पराधीनविशेषाप्तिरित्येतावतैव विकारानेकविधत्वसूचनत्वात् 'अनिवर्त्योऽन्यथाभावः' इत्यस्य वैयर्थ्यमित्यतो विकारद्वयस्यापि प्रत्येकं द्वैविध्यसूचकत्वान्नानर्थक्यमित्याशयेन तत्सूचितं प्रत्येकं द्वैविध्यमाह **प्रत्येकं चेति** । नन्वेवं विकाराणामनेकविधत्वविवक्षायां विशेषाप्तेरिव विशेषिपरिवर्तस्यानिवर्त्यान्यथाभावस्येव निवर्त्यान्यथाभावस्यापि भाष्ये निर्देष्टव्यत्वात् कथं भाष्ये विशेषाप्तित्वानिवर्त्यान्यथाभावत्वरूपप्रकारद्वयस्यैवोक्तिरित्यतो विशेषाप्त्युक्त्या विशेषिविपरिवर्तस्यानिवर्त्यान्यथाभावोक्त्या च निवर्त्यान्यथाभावस्योक्तिं विनाऽपि ज्ञातुं शक्यत्वात् तदनुक्तिरन्यथासिद्धेत्याह **अत्रैकेति** । ननु किमन्यथासिद्धिकल्पनया यथाभाष्यं प्रकारद्वयमेव विवक्षितं किं न स्यादित्यतो भाष्ये निर्दिष्टविधाद्वयस्य परस्परप्रतिद्वन्द्वित्वाभावेनोक्तरीत्या द्वैविध्याभिधायकस्यास्य वाक्यस्यासमञ्जसत्वापत्तेरन्यथासिद्धिरेव वर्णनीयेत्याह **अन्यथेति** । नन्वेवमपि क्षीरादिवदिति भाष्यखण्डवैय्यर्थ्यमित्यतो निर्दिष्टानां चतुर्णां विकाराणामसम्भावितत्वशङ्कानिरासाय निदर्शनप्रदर्शनार्थत्वान्न वैयर्थ्यमित्याशयेन तत्तात्पर्यमाह **क्षीरादिवदितीति** । क्षीरादीनामित्यादिपदेन फलादीनां परिग्रहः । दधित्वादीत्यादिपदेन पीतत्वादीनां परिग्रहः । क्षीरादीनां दधित्वाद्यापत्तेरुक्तचतुर्विधविकारोदाहरणत्वं च यथायोग्यं प्रतिपत्तव्यं, न तु यथाक्रममित्यभिप्रेत्य चतुर्णामुदाहरणमित्युक्तम् ।





**वा०र०— नानार्थक्यम्** इत्यत्र तस्येति शेषः । **अत्र विशेषाप्तेरिति** । एतच्च कथं पीतत्वापत्तिर्विशेषापत्तिरिति पाठः । त्वादिरिति लेखकदोषात् ।

**स०व्र०— एकैकप्रकारानुक्तिरिति** । विशेषिपरिवर्तनिवर्त्यान्यथाभावरूपप्रकारानुक्तिरित्यर्थः । **अन्यथा वाक्यस्येति** । विशेषाप्तिप्रतियोगित्वेन विशेष्यपरिवर्तिः एव वक्तव्या । अनिवर्त्यान्यथाभावकथनं न युज्यते । तथा अनिवर्त्यान्यथाभावप्रतियोगित्वेन निवर्त्यान्यथाभाव एव कथनीयः, विशेषाप्तिकथनं न युज्यते । तस्माद्विकारस्य चतुर्विधत्वे वाक्यं समञ्जसं भवति । द्विविधत्वे तु उक्तरीत्या असमञ्जसं स्यादिति भावः । केचित्तु । यद्यत्र पराधीनविशेषावाप्तिरूप एक एव विकारोऽभिप्रेतः स्यात् तदा क्षीरादिवदित्यसमञ्जसं स्यात् । विशेषिपरिवर्तोदाहरणत्वात् तस्य । अतः तद्बलाद्विशेषिपरिवर्तोऽभिप्रेतः । न चैवं विशेषपरिवर्तोदाहरणानुक्तिः । आदिशब्देनैव तदुक्तिसम्भवात् । प्रत्येकं द्वैविध्यस्य चानभिप्रेतत्वेऽनिवर्त्यान्यथाभाव इत्युक्तिर्व्यर्था स्यात् । न हि सुवर्णादिः कुण्डलादिविकारोऽनिवर्त्यान्यथाभावरूप इति अयुक्ता च स्यात् । अतो वाक्यसामञ्जस्यार्थमन्यथाभाव इत्यस्योपलक्षणत्वादादिपदेन च तयोरप्युदाहरणोक्तिसम्भवादुक्तं चातुर्विध्यं युक्तमेवेति भाव इत्याहुः । पीतत्वादिविकाराणां सौरातपस्वर्णकारातञ्चनौषध्याद्यधीनत्वोक्त्या तेषां पराधीनत्वमुपपादितमिति ज्ञातव्यम् ।

**विट्ठल०— एकैकप्रकारानुक्तिरिति** । विशेषे परिवर्तस्य निवृत्त्यान्यथाभावस्य च कण्ठरवेणानुक्तिरित्यर्थः । **स्फुटत्वादिति** । उपलक्षणतया ज्ञातुं शक्यत्वादित्यर्थः । **अन्यथेति** । विशेषपरिवृत्ताभावे विशेषाप्तिरित्यत्र विशेषग्रहणवैयर्थ्यप्रसङ्गेन निवर्त्यान्यथाभावाभावे अनिवर्त्यान्यथाभाव इत्यत्र अनिवृत्तिग्रहणस्य वैयर्थ्येन वाक्यासामञ्जस्यप्रसङ्गादित्यर्थः । किं च विशेषाप्तिर्विकारः सोऽप्यनिवृत्य इत्येकविधत्वमेवैवं सिद्ध्यति । न तु द्वैविध्यमिति । अस्त्विति चेत्तर्हि उदाहरणमसङ्गतमित्यतोऽपि वाक्यमसमञ्जसं स्यादित्यर्थः ।

**॥ इति विकारप्रकारप्रदर्शनम् ॥**

* * *

**॥ ततः विकारप्रकाराणामुदाहरणानि ॥**

६८ **सु०— तत्रानिवर्त्यविशेषाप्तिर्यथा श्यामस्य फलस्य पीतत्वापत्तिः । तत्र हि धर्मिणस्तादवस्थ्यं पीतत्वेऽपि फलव्यवहारानिवृत्तेः । केवलं श्यामत्वापगमेन पीतत्वमुत्पन्नं सौरातपादिवशान्न निर्निमित्तम् । न च पुनर्निवर्तते ।**

**निवर्त्यविशेषाप्तिर्यथा कुण्डलाद्याकारस्य सुवर्णस्य कटकादित्वापत्तिः । अत्रापि हि धर्मिणस्तादवस्थ्यम् । कटक(ादि)त्वापन्नेऽपि सुवर्णव्यवहारदर्शनात् । परं कुण्डलत्वापायेन स्वर्णकाराद्यधीनकटकभावो जातः । निवर्त्यश्चासौ पुनः कुण्डलीकर्तुं शक्यत्वात् ।**





**अनिवर्त्यो विशेषिपरिवर्तो यथा क्षीरस्य दधिभावः । अत्र हि न धर्मिणस्तादवस्थ्यम्, दधित्वापत्तौ क्षीरव्यवहारानुपलम्भात् । किन्तु धर्मिभूतं क्षीरमेव आतञ्चनादि वशाद्दधिभूतम् । न च दधिभावनिवृत्त्या तत् क्षीरं भवति ।**

**निवर्त्यो धर्मिपरिवर्तो यथा शुल्बस्य तारत्वम् । अत्रापि न धर्मिणस्तादवस्थ्यम्, तारतायां शुल्बव्यवहारानुपलब्धेः । किं नामौषध्य(धा)धीनतया शुल्बमेव तारं संवृत्तम् । प्रबलौषधिबलात्तारतानिवृत्त्या शुल्बं च सम्पद्यते ।**

**न च पञ्चमी विधा दृष्टा, (सम्भाविता) श्रुता वेति ।**

**परि०—** आदिपदोपात्तोदाहरणत्रयमध्ये अनिवर्त्यनिवर्त्यविशेषाप्तिरूपयोर्विकारयोः क्रमेणोदाहरणे, उदाहरणद्वये पराधीनत्वे च दर्शयति **तत्रानिवर्त्येत्यादिना** । परमित्यव्ययम् । कटकभावः परं जात इत्यर्थः । पराधीनत्वं व्यक्तमाह **आतञ्चनेति** । तक्रस्थापनादीत्यर्थः । आदिपदोपात्ततृतीयोदाहरणमाह **शुल्बस्येति** । ताम्रस्य रजतभाव इत्यर्थः । तस्य पराधीनतां व्यनक्ति **किंनामेत्यादिना** ।

**गु०दी०— शुल्बस्य तारत्वम्** इत्यत्र शुल्बस्य ताम्रस्यौषधादिना तारत्वं रूप्यत्वं यथेत्यर्थः । 'न स्त्रियामथ ताम्रकम् । शुल्बं म्लेच्छमुखं द्वयष्टवरिष्ठोदुम्बराणि चे'त्यमरः । 'रूप्यं तारं च कथ्यत' इति हलः ।

**यादु०— शुल्बं** ताम्रम् । 'ताम्रं शुल्बमुदुम्बरम्' इति हलायुधोक्तेः । **तारं** रजतं 'रजतं कलधौतं च रूप्यं तारं च कथ्यते' इत्यभिधानात् ।

**आनन्दः— शुल्बं** ताम्रम् । तारशब्दोरसंवादग्रन्थेरजातिप्रसिद्धः ।

**श्रीनिधि०— श्यामफलस्यापि तत्त्वापत्तिरिति** । अत्र केचिद्धर्माः पूर्वखण्डिताः । केचिदुत्तरखण्डिताः । केचिदुभयखण्डिताः । तत्राद्ये यथा उक्ता निवर्त्य पीतत्वम् । द्वितीये यथा । तत्रैव पूर्वश्यामत्वम् । तृतीये यथा । पाकेन श्यामघटे नीले पुनः, पाकेन रक्तिमोत्पत्तौ नीलत्वम् । तत्र गुणेषु त्रिविधं बन्धितत्वम् । क्रियायामेकविधमेव । पूर्वोत्तरमवधिमत्त्वेन उभयबन्धितत्वम् । द्रव्ये तु द्वैविध्यम् । पूर्वबन्धितत्वं सर्वत्र तन्तुसंयोगनाशजन्ये पटे उभयत्वं बन्धितत्वम् । उत्तरबन्धितत्वमात्रं तु नास्तीति विभागः ।

**शे०वा०—** विधाचतुष्टयं निर्देशक्रमेणोपपादयति **तत्रेति** । कथं पीतत्वादिविशेषाप्तिः कथं चानिवर्त्येत्यतो विशेषाप्तिलक्षणसद्भावादिति भावेन तल्लक्षणान्तर्गतं धर्मिणस्तादवस्थ्यं तावद्दर्शयति **तत्र हीति** । कुतोऽत्र





धर्मिणस्तादवस्थ्यं क्षीरस्य दधित्वापत्ताविव स्वरूपप्रच्युतिरेव किं न स्यादित्यतो दधित्वापन्ने क्षीरव्यवहाराभावात् तत्र धर्मिणोऽतादवस्थेऽपीह पीतत्वापन्नेऽपि फलव्यवहारान्न धर्मिणोऽतादवस्थ्यं कल्पयितुं शक्यत इत्याह **पीतत्वेऽपीति** । पूर्वधर्मापगमेन धर्मान्तरोत्पाद एव धर्मपरिवर्त इत्याशयेन विशेषाप्तिलक्षणान्तर्गतं धर्मपरिवर्तं दर्शयति **केवलमिति** । धर्मपरिवर्तस्य पराधीनत्वं दर्शयति **सौरातपवशादिति** । अनिवर्त्यत्वमुपपादयति **न चेति** । पराधीनत्वमुपपादयितुं **स्वर्णकाराद्यधीनेति** । विशेषिपरिवर्तस्य पराधीनत्वं दर्शयति **आतश्चनादिवशादिति** । अनिवर्त्यत्वमुपपादयति **न चेति** । **शुल्बस्येति** । ताम्रस्य रजतत्वमित्यर्थः । 'ताम्रं शुल्बमुदुम्बरमि'ति हलायुधोक्तेः शुल्बशब्दस्य ताम्रवाचित्वात् । 'रजतं कलधौतं च रूप्यं तारं च कथ्यत' इत्यभिधानेन तारशब्दस्य रजतवाचित्वमिति द्रष्टव्यम् । पराधीनत्वं दर्शयितुं ओषध्यधीनतयेत्युक्तम् । निवर्त्यत्वमुपपादयति **प्रबलेति** ।

**वा०र०— हलायुधोक्तेरिति** । हलायुधापरनामकाभिधानरत्नमालायामुक्तेरित्यर्थः ।

**स०व्र०— शुल्बस्येति** । 'उच्यते गौरिकं धातु ताम्रं शुल्बमुदुम्बरमि'ति हलायुधोक्तेः शुल्बशब्दः ताम्रपरः । रजतं च 'रौप्यं तारं च कथ्यत' इत्यभिधानात् तारं रजतमिति द्रष्टव्यम् ।

**विट्ठल०—** पराधीनत्वमुपपादयति **सौरेति** । एवं स्वर्याकारोत्तञ्चनोपाध्यधीनत्वमपि कटकादिविकाराणां पराधीनताव्युत्पादनार्थमिति ज्ञेयम् । **परं** परन्तु **आतञ्चनं** तक्रादिस्थापनं **शुल्बं** ताम्रं 'ताम्रं शुल्बमुदुम्बर' इति हलायुधः । 'रूप्यं तारं च कथ्यत' इति च 'तारं तु रूप्यकमि'ति नानार्थरत्नमालायां च 'प्रबलौषधबलादि'ति रसनादग्रन्थे तथाभिधानादिति भावः ।

**चषकः— शुल्बस्य तारत्वमिति** । ताम्रस्य रजतत्वमित्यर्थः । 'ताम्रं शुल्बमुदुम्बरमि'ति हलायुधोक्तेः शुल्बशब्दस्य ताम्रवाचित्वात्, 'रजतं कलधौतं च रूप्यं तारं च कथ्यत' इत्यभिधानेन तारशब्दस्य रजतवाचित्वादित्यवसेयम् ।

**॥ इति विकारप्रकाराणामुदाहरणानि ॥**

* * *

**॥ ततश्च एतादृशविकारस्य हरौ क्वचिदप्यभावः ॥**

६९ **सु०— किमतो यद्येवम्भूतो विकार इत्यत आह नैवेति ।**

**अनु०— नैव स स्याद्धरेः क्वचित् ॥**





**क्वचित्** इति निमित्तसप्तमी ।

**अयमाशयः । सकलोऽपि खलु विकारः पराधीनो भवतीति निदर्शितम् । न चैवमेवासौ क्वापि दृष्टः । तथात्वे वा सर्वदा स्यात् । न च ब्रह्मणो विकारनिमित्तं किञ्चिदस्ति, 'सदेव सोम्य' इति प्राक् सृष्टेर्वस्त्वन्तरनिषेधात् । न च कालादिकमपि परेण प्रलयेऽभ्युपगतम्, अभ्युपगमेऽपि पराधीनताऽऽपत्तेश्च ।**

**अस्तु जडेषु पराधीनो विकारः । चेतनं ब्रह्म तु स्वेच्छयैव जगदाकारेण विक्रियते । 'तदात्मानं स्वयमकुरुत' इत्यादिश्रुतेरिति चेन्न प्रेक्षावतस्तस्य नानाविधानर्थरूपप्रपञ्चीभवनेच्छाया एवानुपपत्तेः । न ह्युन्मत्तोऽप्यात्मनोऽनर्थरूपतामिच्छति दूरे प्रेक्षावान् । न च प्रपञ्चस्यानर्थरूपतां न जानाति ब्रह्म, असर्वज्ञतापातात् । नायं प्रपञ्चो ब्रह्मणोऽनर्थरूप इति चेन्न दुःखादिरूपेण परिणतस्य न दुःखादिरूपता इत्यस्य व्याहतत्वात् । न हि विवर्तवादिनामिव कल्पितोऽयं प्रपञ्चो भवताम्, सत्यत्वाभ्युपगमात् । दुःखादिमत्त्वमनिष्टं न तु तद्रूपतेत्यभिप्राय इति चेन्न, तथा सति सुखरूपस्येष्टत्वमपि न स्यात्; ततश्च न मोक्षाय प्रवर्तेत ।**

**परि०**— 'नैव स स्यात् हरेः क्वचित्' इत्यत्र मूले युक्तेरनुक्तेः तामाह **अयमाशय इत्यदिना दिगित्यन्तेन । पराधीनतापत्तेश्चेति ।** ब्रह्मण इत्यनुषङ्गः । तथा च स्वयमेव ब्रह्म परिणमत इति भङ्ग इति भावः । **भवतामिति ।** ब्रह्मजगतोर्भेदाभेदेन परिणामवादिनां भास्करप्रभृतीनामित्यर्थः ।

**यादु०**— पराधीनताऽऽपत्तेश्चेत्यत्र ब्रह्मण इति वर्तते । तथा च ब्रह्मणः स्वेच्छयैव जगदाकारेण विकार इति मतभङ्गप्रसङ्ग इति भावः । गूढाभिसन्धिराशङ्कते **नायं प्रपञ्च इति । अनर्थरूपः** अनिष्टरूपः । अभिसन्धिमुद्घाटयति **दुःखादिमत्त्वमिति ।**

**वं०प०**— ननु कालादिकं प्रलये विद्यमानं विकारे भवतु निमित्तमित्यत आह **न चेति । परेति ।** भगवत्सृष्टेः कालाद्यधीनतापत्तेरित्यर्थः । नन्वनर्थरूपतां दुःखादिप्रपञ्चस्य ज्ञात्वा तदात्मना परिणतं चेत् तदा न ह्युन्मत्त इत्युक्तं युक्तम् । न ह्येवम् । किन्तु अज्ञात्वैवानर्थरूपतां परिणमति पश्चादनर्थतामनुभवतीत्यत आह **न चेति ।** ननु दुःखादीनां सत्यत्वे तद्रूपेण विकारोऽनर्थहेतुः स्यात् । न चैवम् । तेषां मिथ्यात्वात् । मिथ्याभूतदुःखाद्यात्मना विकारस्यानर्थताऽनापादकत्वादित्यत आह **न हीति । इष्टत्वमिति ।** दुःखादिमतोऽनिष्टत्ववत्सुखवत एवेष्टत्वादिति भावः ।





**आनन्दः**— ननु स्वाभाविकविकाराभावेऽपि आगन्तुकः स भविष्यतीत्यत आह **काचिदिति** । नन्वस्तु तर्हि स्वाभाविक एव विकार इत्यत आह **अयमाशय इति** ।

**श्रीनिधि०— अभ्युपगमे वा पराधीनतापत्तेश्चेति** । ब्रह्मणः प्रपञ्चीभवनस्य कालाय तत्त्वेन तत्र पारतन्त्र्यापातः । तथा च सर्वक्रियासु स्वातन्त्र्याभ्युपगमो विरुद्धश्चेतेति भावः ।

**शे०वा०— एवंभूत इति** । उक्तरीत्या चतुर्विध इत्यर्थः । **सकलोऽपीति** । चतुर्विधोऽपीत्यर्थः । कुतो विकारस्य पराधीनत्वनियम इत्यतो विकारत्वपराधीनत्वयोः सहचारदर्शनादिति भावेन निदर्शितमित्युक्तम् । ननु न सहचारदर्शनमात्रेण नियमसिद्धिः 'सहदर्शनमात्रेण न व्याप्तिरवसीयत' इत्यादिना तन्मात्रस्य व्याप्त्यनियामकताया वक्ष्यमाणत्वादित्यतः सहचारदर्शनमात्रस्य तदगमकत्वेऽपि व्यभिचारादर्शनसहकृतस्य तस्य व्याप्त्यवगमकत्वं भविष्यत्येवेत्यभिप्रेत्य व्यभिचारादर्शनमुपपादयति **न चैवमेवासाविति** । निमित्तं विना विकारो न दृष्ट इत्यर्थः । **सर्वदेति** । अपेक्षणीयान्तराभावादिति भावः । नन्वस्तु ब्रह्मणोऽपि सनिमित्तक एव विकार इत्यत आह **न चेति** । कुतो निमित्ताभाव इत्यतो निमित्तं भवद् ब्रह्म अन्यद्वा स्वयं ब्रह्मैव वेति विकल्पं मनसि निधायाद्यं दूषयति **सदेवेति** । ब्रह्मान्यद् ब्रह्मणो विकारनिमित्तं भवत्किं सृज्यं जगद्वा तदन्यद्वा । नाद्यः । सृष्टेः पूर्वमसतस्तस्य विकारनिमित्तत्वायोगात् । सृष्टस्य च विकारनिमित्ततताया अन्योन्याश्रयप्रसङ्गेनायोगात् । नान्त्यः । सदेवेत्यादिप्रमाणेन वस्त्वन्तराभावस्य प्रतिपादनेनासतो वस्त्वन्तरस्य विकारहेतुत्वायोगादित्यर्थः । नित्यस्य कालादेर्वस्त्वन्तरस्य तदा भावात् तस्यैव ब्रह्मविकारहेतुत्वं भविष्यतीत्यत आकल्पावस्थायित्वं नित्यत्वमिति वदता परेण कालाकाशादेर्बहुकालीनत्वस्यैव नित्यत्वरूपतयाऽङ्गीकारेण सृष्टेः पूर्वं तस्य सत्त्वानङ्गीकारान्न तस्यापि निमित्तत्वं सम्भवतीत्याह **न चेति** । **पराधीनतेति** । ब्रह्मण इति शेषः । ततश्च ब्रह्म स्वेच्छयैव जगदाकारेण विक्रियत इति सिद्धान्तभङ्ग इति भावः । ब्रह्मैव ब्रह्मणो विकारे निमित्तमिति द्वितीयं पक्षमाशङ्कते **अस्त्विति** । **अनुपपत्तेरिति** । अन्यथाऽप्रेक्षावत्त्वापातादिति भावः । **न चेति** । अतो नाप्रेक्षावत्त्वमिति भावः । माऽस्तु तर्ह्यपेक्षावत्त्वमसर्वज्ञत्वं तु स्यादेवेत्याह **असर्वज्ञतेति** । गूढाभिसन्धिः शङ्कते **नायमिति** । **अनर्थरूपः** अनिष्टरूप इत्यर्थः । गूढाभिसन्धिरेव परिहरति **न दुःखादिरूपेणेति** । पूर्ववादी स्वाभिसन्धिमुद्घाटयति **दुःखादिमत्त्वमिति** । धनवत्त्वे पारिवृढ्यवद्धनत्वे पारिवृढ्यभावादिति भावः । उत्तरवाद्यपि स्वाशयमुद्घाटयति **न तथा सतीति** । उदाहृतदृष्टान्तबलेन सुखादिमत्त्वस्यैवेष्टत्वनिश्चयादिति भावः । इष्टापत्तिं परिहरति **ततश्चेति** ।

**वा०र०— न च ब्रह्मणो विकारनिमित्तं किञ्चिदस्तीति** मूलम् । तट्टीका च अत्र ब्रह्मविकारशून्यं ...त्वात् इत्यभिप्रेते प्रयोगे यो विकारः स पराधीन इति व्याप्तिं वदता यद्विकारवत्तत्सनिमित्तक-...कप्राया । उक्तप्रयोगस्यैव मूलटीकयोरभिप्रेतत्वात् विकारत्वपराधीनत्वयोर्व्याप्तिः प्रदर्शनबलेन ...नुमानस्यान्वयिनो वा व्यतिरेकिणो वा घटादेर्वा विकारस्यैव वा पक्षत्वायोगेनायोगात् । उक्तप्रयोगे





विकारपुरस्कारेण व्याप्तिकथनमपि धर्मपुरस्काराद्युक्तमेव । एवं च ब्रह्मैव स्वविकारे निमित्तमिति विकल्पित-पक्षाशङ्कापरेऽस्त्विति ग्रन्थे अचेतनसम्बन्धिविकारस्य पराधीनत्वोक्त्या उक्तव्याप्तावचेतनत्वमुपाधिरित्युक्तं भवति । तत्र विकारस्य विशेषणत्वेन विशिष्टविधिनिषेधयोः प्रकृतिविशेषणपर्यवसायित्वस्यैव लाघवेनाङ्गी-कार्यत्वाभिप्रायेण विशेषणभूतविकारस्य पराधीनत्वकथनादिकं तदनुसारेणाचेतनसम्बन्धित्वस्योपाधितोक्तिरपि सम्भवति । अत एव मास्तु तर्ह्यचेतनसम्बन्धित्वं विकारस्य पराधीनतायां प्रयोजकम्, असर्वशक्तित्वं तु स्यादित्यत्र असर्वशक्तित्वमुपाधितयोक्तम् । धर्मिपुरस्कारेणैव सर्वशक्तित्वादिति चेदिति मूलेऽभिधानात् । एवं च पूर्वोत्तरग्रन्थेषु धर्मिपुरस्कारेणाभिप्रेते प्रयोगे व्याप्त्यादिकं धर्मपुरस्कारेण प्रदर्शितमिति अविरोधः । किञ्च विकारत्वपराधीनत्वयोर्व्याप्तिं प्रयोगानुसारिणीं स्वीकृत्य तादृशप्रयोगे सर्वशक्तित्वमुपाधितयोक्तम् असर्वशक्ति-सम्बन्धित्वपर्यवसायीति नानुपपत्तिरित्याहुः । तत्र किं पक्षीकृत्य कथं प्रयोग इति विचार्यम् । पुनः शोध्यम् । **सृज्यमिति** । सर्जनयोग्यमित्यर्थः । सृष्ट्यनन्तरं सृज्य जगतः सत्त्वाद्विकारहेतुत्वं किं न स्यादित्यत आह **सृष्टस्येति** । **नान्त्यः सदेवेत्यादीति** । अनेन मूलम् एतत्पक्षनिरासपरमिति सूचितम् । पक्षान्तरस्य स्फुटदोष-त्वात् न निराकरणमिति न न्यूनता च मूल इति सूचितं भवति ।

**स०व्र०**— पराधीनतापत्तेश्चेत्यत्र ब्रह्मण इति वर्तते । तथा च ब्रह्मणः स्वेच्छयैव जगदाकारेण विकार इति मतभङ्गप्रसङ्ग इति भावः । गूढाभिसन्धिराशङ्कते **नायं प्रपञ्च इति** । अभिसन्धिमुद्घाटयति **दुःखादिमत्व-मिति** ।

**विट्ठल०**— युक्तिविरुद्धं च ब्रह्मणो विकारित्वमिति वक्तुमित्युक्तम् । तामेव युक्तिं व्यक्तीकर्तुमाह **अयमाशय इति** । **न च ब्रह्मण इति** । येन निमित्तेन ब्रह्मणोऽपि पराधीनविकारः स्यादिति शेषः । कुतो नास्तीत्यत आह **सदेवेति** । **पराधीनतापत्तेश्चेति** । ब्रह्मण इति शेषः । ब्रह्मणो विकारे कालादेर्निमित्तत्वेव ब्रह्मणः स्वेच्छयैव जगदाकारेण परिणाम इति वादिनोऽपसिद्धान्त इति भावः । गूढाशयः शङ्कते **नायं प्रपञ्च इति** । दुःखादेर्मिथ्यात्वान्न दोष इत्याह **न हीति** । **भवतामिति** । ब्रह्मजगतोर्भेदाभेदेन परिणामवादिनां भास्करादीनामित्यर्थः । परः स्वादाय-मुद्घाटयति **दुःखादिमत्त्वमिति** ।

**७० सु०— किञ्च ब्रह्मणोऽनर्थाभावे कस्या(यम)नर्थ इति वक्तव्यम् । जीवस्य चेति चेत्, स किं ब्रह्मणो भिन्नोऽभिन्नो वा । नाद्यः अपसिद्धान्तात् । द्वितीये कथं ब्रह्मणो नानर्थः । भिन्नाभिन्न इति चेत् (न), अभेदेनानर्थप्रसङ्गात् । निराकरिष्यते चायं पक्षः 'अत एव चोपमा' इति । अपि च चेतनस्यापि विक्रिया दृष्टादृष्टकारणायत्ता दृष्टेति कथं ब्रह्मणः स्वेच्छामात्रेण स्यात् । सर्वशक्तित्वादिति चेत् (न) अनर्थीभवतः सर्वशक्तित्वानुपपत्तेः । न तर्कावसेयं ब्रह्म येन दृष्टान्तानुगुण्यवैगुण्यचिन्ताऽत्रोपयुज्यते, किं नाम श्रुतिमात्रसिद्धम् । श्रुतिश्चान्या-**





**नपेक्षमेव प्रपञ्च(त)ापत्तिमाचष्ट इति चेन्न, तथा सति विचारशास्त्रानवतारप्रसङ्गात् । युक्तश्चायं तर्कागोचरत्ववादो यत्र श्रुतीनामविगानं स्यात् । न चैवमत्रेत्युक्तम् । अतो न सामान्यतो विकारित्वं ब्रह्मणो युज्यते, नापि विशेषतः ।**

**परि०**— नन्वभेदेऽपि जीवगतदुःखाद्यनुसन्धानाभावान्नानर्थप्रसङ्ग इत्यत आह **निराकरिष्यते चेति** । भक्तिपादे 'अत एव चोपमा सूर्यकादिवत्' इत्यधिकरणे भेदाभेदवादिमतेऽनुसन्धानाभावेन ईश्वरस्यानर्थप्रसङ्गाभावपक्षः 'अनुसन्धानरहितमैक्यं चेदेकता न तत्' इत्यादिनेति भावः । **विक्रियेति** । उच्चत्वनीचत्वरूपा वा औदासीन्यप्रच्युतिरूपकर्तृत्वादिलक्षणक्रियावेशादिरूपा वेत्यर्थः । **स्यादिति** । विक्रियेत्यनुषङ्गः । **श्रुतिश्चेति** । 'बहु स्यामि'ति 'तदात्मानमेवाकुरुते'त्यादिः । ननु भवद्भिरपि 'श्रुतेस्तु शब्दमूलत्वात्' इत्यत्र ब्रह्मणः श्रुत्येकसमधिगम्यत्वेन तर्कायोग्यत्वात्, कृत्स्नप्रसक्त्यादितर्कबाध्यत्वं नेति वदद्भिरपि विचारशास्त्रावतारः स्वीक्रियत इत्यतो, निर्विवादप्रमाणप्रमितेऽर्थे तर्कबाधप्रसक्तौ तर्कागोचरत्वेन परिहारोऽस्माभिरभिधीयते । न चैवं त्वयेति वैषम्यमाह **युक्तश्चेति** । **उक्तमिति** । 'अविकारः सदा शुद्धः' इत्यादिना ब्रह्मणो विकारश्रुत्यादिप्रतिषेधस्य दर्शितत्वादिति भावः ।

**गु०दी०**— **अपि च चेतनस्यापि विक्रिया** इत्यत्र **चेतनस्य** जीवचैतन्यस्य **विक्रिया** औत्तरव्यापारानुकूलत्वरूपा नीचता । **दृष्टकारणं** शस्त्रघातादिनिमित्तदुःखं **अदृष्टकारणं** पूर्वजन्मकृतपापादिनिमित्तकव्याध्यादिनिमित्तदुःखं तदुभयजन्या विक्रिया दृष्टेत्यर्थः ।

**यादु०**— संसारदशायां भेदो मुक्तावभेद इति व्यवस्थयैव भेदाभेदावभिप्रेतावतो नोक्तदोष इत्यत आह **निराकरिष्यते चेति** । 'असदैक्यं भवेत् पश्चात् यदि स्यात् सप्तमो रसः' इत्यनेनेत्यर्थः । परीत्याह **अपि च चेतनस्येति** । ऊर्णनाभ्यादेरित्यर्थः । **श्रुतिश्चेति** । 'तदात्मानं स्वयमकुरुत' इत्याद्या श्रुतिरित्यर्थः । **न चैवमत्रेति** । निर्विकारत्वप्रतिपादकश्रुतिविगानस्योक्तत्वादित्यर्थः ।

**वं०प०**— **चेतनस्यापीति** । ऊर्णनाभिमात्रादेरित्यर्थः। पराधीनेत्यादिना युक्तिविरुद्धत्वमुक्तम्; तन्नास्तीति शङ्कते **नेति** । **दृष्टान्तेति** । क्षीरादीत्यर्थः । **अन्यानपेक्षेति** । पराधीनतानपेक्षमेवेत्यर्थः । **तथा सतीति** । श्रुतिमात्रसिद्धत्वमङ्गीकृत्य दृष्टान्तानुगुण्यादिरूपयुक्त्यनपेक्षत्व इत्यर्थः । **अविगानमिति** । तथा च तादृशस्थले विवादाभावेन तत्परिहाराय युक्तेरनपेक्षितत्वेन श्रुतिमात्रसिद्धत्वं ब्रह्मणः सम्भवतीत्यर्थः । अस्तु तर्हि प्रकृतेऽप्यविगानमित्यत आह **न चैवमिति** । ब्रह्मणः 'सच्च त्यच्चे'ति विकारस्य 'अविकारः सदा' इति अविकारस्य प्रतिपादनेन श्रुतिविगानस्यैव सत्त्वान्न युक्त्यनपेक्षश्रुतिमात्रेण विकारसिद्धिः । तदपेक्षायां चोक्तरीत्या अविकारस्यैव सिद्धेरिति भावः ।

**आनन्दः**— ननु सुखानुभवार्थमेव मोक्षाय प्रवृत्तिः स्यात् । तस्यैव पुरुषार्थत्वादित्यत आह **किञ्च ब्रह्मण इति** । **अनर्थीभवत इति** । तथा च सर्वशक्तिकं न अनर्थीभवनवत्त्वाज्जीववदित्युक्तं भवति । अत्र शङ्कते **न तर्कावसेयमिति** । तर्हि तर्कागोचरत्ववादः कथमित्यत आह **युक्तश्चेति** । **न चैवमिति** । प्रकृते तु विकारित्वादौ श्रुतिविरोधोऽस्त्येवेति भावः । ननु मास्तु ब्रह्मणः स्वरूपेण विकारित्वं धर्मद्वारा भवतीत्यत आह **नापीति** । **निराकरिष्यते चेति** । तथा च पौनरुक्त्यमिति भावः ।

**शे०वा०**— **अपसिद्धान्तादिति** । जीवेश्वराभेदस्य त्वत्सिद्धान्तत्वादिति भावः । अस्तु तर्हि जीवो ब्रह्मणोऽभिन्न इति ततो नापसिद्धान्त इत्यत आह **द्वितीय इति** । जीवब्रह्मणोरभेदाज्जीवं प्रत्यनिष्टस्य ब्रह्म प्रत्यनिष्टत्वेन ब्रह्मणो नानिष्टरूपः प्रपञ्च इत्येतद्भग्नमित्यर्थः । जीवब्रह्मणोरत्यन्ताभेदे तत्प्रसक्तावपि भेदाभेदपक्षे भेदस्यापि सत्त्वाज्जीवं प्रत्यनिष्टस्यापि प्रपञ्चस्य न ब्रह्म प्रत्यनिष्टत्वमिति भावेन शङ्कते **भिन्नाभिन्न इति** । भेदकार्यस्य भेदेनेवाभेदकार्यस्य ब्रह्म प्रत्यनिष्टत्वस्याभेदेनावश्यं सम्पादनीयत्वादतिप्रसङ्गानिस्तार एवेत्याह **अभेदेनेति** । ननु च भेदस्य प्रबलत्वात् तेन प्रतिबद्धोऽभेदो न स्वकार्यकारीति न अभेदेन प्रपञ्चस्य ब्रह्म प्रत्यनिष्टत्वप्रसङ्गः । यद्वा । संसारे केवलो भेदो मुक्तावत्यन्ताभेद इति व्यवस्थितावेव भेदाभेदौ भेदाभेदवादिनोऽभिमतौ तत्कथमभेदेनानर्थप्रसङ्ग इत्यत आह **निराकरिष्यते चेति** । **अपि च चेतनस्येति** । ऊर्णनाभ्यादेरित्यर्थः । ततश्च नाचेतनसम्बन्धित्वस्य विकारे पराधीनत्वप्रयोजकत्वं युक्तम् । चेतनविकारे पराधीनत्वे सत्यप्यचेतनसम्बन्धित्वाभावात् । तस्मिन्सत्यप्यभवतस्तेन विनाऽपि भवतस्तदप्रयोज्यत्वादिति भावः । माऽस्तु तर्ह्यचेतनसम्बन्धित्वं विकारस्य पराधीनतायां प्रयोजकमसर्वशक्तित्वं तु स्यादिति भावेन शङ्कते **सर्वेति** । साधनव्यापकत्वान्नायमुपाधिरित्याशयेनाह **अनर्थीभवत इति** । तर्कागोचरत्वे कथं तत्सिद्धिरिति शङ्कते **किं नामेति** । शब्दैकसमधिगम्यत्वान्नानुपपत्तिरित्याह **श्रुतीति** । 'औपनिषदः पुरुष' इत्यादिश्रुतेरिति भावः । **श्रुतिश्चेति** । 'तदात्मानं स्वयमकुरुत' इत्याद्येत्यर्थः । **तथा सतीति** । तर्कागोचरत्वे ब्रह्मण इत्यर्थः । विचारस्य युक्त्यनुसन्धानरूपत्वादिति भावः । तर्हि तर्कगोचरत्वे नैषा तर्केणेत्यादितर्कागोचरत्वप्रतिपादकश्रुतिविरोधः स्यादित्यत आह **युक्तश्चेति** । अस्तु तर्हि प्रकृतेऽपि श्रुतीनामविगानादेव तर्कागोचरतेत्यत आह **न चैवमिति** । तत्कथमित्यत आह **उक्तमिति** । 'अविकारः सदा शुद्धः' इत्यादिश्रुतिविगानस्य दर्शितत्वादिति भावः । **सामान्यत इति** । अविवक्षितानिवर्त्यविशेषाप्तित्वादिविशेषविकारं विकारित्वसामान्यमित्यर्थः । **नापि विशेषत इति** । विकारित्वं ब्रह्मणो युज्यत इति वर्तते । विवक्षितविशेषं विकारित्वमपि न ब्रह्मणो युक्तमित्यर्थः ।

**वा०र०**— **नानुपपत्तिरित्याहेति** । इत्युत्तरमाहेत्यर्थः । **अविगानादेवेति** । विगानाभावेऽन्यतरश्रुत्यनुकूलतर्कगोचरत्वस्यानावश्यकत्वादिति भावः । **अविवक्षितेति** । अविवक्षितः अनिवर्त्यविशेषाप्तित्वादिविकारविशेषो यस्मिन्निति विग्रहः ।





**स०व्र०**— संसारदशायां भेदो मुक्तावभेद इति व्यवस्थयैव भेदाभेदावभिप्रेतौ अतो नोक्तदोष इत्यत आह **निराकरिष्यते चायमिति** । 'असदैक्यं भवेत्पश्चाद्यदि स्यात्सप्तमो रसः' इत्यनेनेत्यर्थः । परीत्याह **अपि च चेतनस्यापीति** । ऊर्णनाभ्यादेरित्यर्थः । ननु तर्हि भवद्भिरपि तर्कागोचरत्वाद्ब्रह्मणः न युक्त्यवकाश इति तत्र तत्र कथमुच्यत इत्यत आह **युक्तश्चायं तर्कागोचरत्ववाद इति** ।

**विट्ठल०**— संसारदशायां भेदः मुक्तावभेद इति भेदाभेदौ अभिप्रेतौ अतो नोक्तदोष इत्यत आह **निराकरिष्यते चेति** । 'असदैक्यं भवेत्पश्चाद्यदि स्यात्सप्तमो रस' इत्यनेनेत्यर्थः । यद्वा अभेदेऽपि जीवगतदुःखाद्यनुसन्धानाभावान्नानर्थप्रसङ्ग इत्यत आह **निराकरिष्यते चेति** । अनुसन्धानरहितमैक्यं चेदेकता न हीत्यनेनेत्यर्थः । परीत्याह **अपि चेति** । **चेतनस्येति** । ऊर्णनाभ्यादेरित्यर्थः । अस्मद्रीत्या तु उच्चत्वनीचत्वरूपा कर्तृत्वादिलक्षणा क्रियावेशादिरूपा चेत्यर्थः । शङ्कते **न तर्केति** । **श्रुतिश्चेति** । 'बहु स्यामि'त्यादिः । कथं तर्हि ब्रह्मणस्तर्कागोचरत्वं भवद्भिरुच्यत इत्यत आह **युक्तश्चेति** । **इत्युक्तमिति** । 'अविकारः सदा शुद्ध' इत्यादिना ब्रह्मणो विकारिश्रुत्यादिप्रतिषेधस्य दर्शितत्वादिति भावः ।

**७१ सु०— तथा हि । न तावदप्रच्युतस्वरूपस्यैव ब्रह्मणोऽयमाकारपरिणामः प्रपञ्च इति युक्तम्, अस्थूलत्वादिश्रुतिविरोधात् । स्वरूपापेक्षया तदुपपत्तिरिति चेत् (न) स्वरूप एव स्थूलत्वादिजननात् । न हि कुण्डलत्वानपगमेन कटकत्वं सुवर्णस्य भवति । स्वभावापेक्षयाऽस्त्विति चेन्न, कालभेदेन स्थूलत्वादिभावाभाववतः 'अयं स्वभावः, अयं (न) त्वस्वभाव' इति विवेकायोगात् । न हि ब्रह्मणः कारणान्तरात्प्रपञ्चतापत्तिं मन्यसे येन सा न स्वभावः स्यात् । प्रपञ्चाकारतायाश्चानिवर्त्यत्वे प्रलयश्रुतिव्याकोपः स्यात्, निष्प्रपञ्चब्रह्मभावापत्तिलक्षणमोक्षाभावप्रसङ्गश्च । एकदेशपरिणामस्तु निराकरिष्यते । नापि स्वरूपप्रच्युत्या प्रपञ्चरूपताऽऽपत्तिः, स्थितिसमये ब्रह्माभावप्रसङ्गेन ब्रह्मज्ञानस्य निरालम्बनत्वापातात् । तस्याश्चानिवर्त्यत्वे न कदाऽपि ब्रह्मणोऽस्तित्वमित्येषा दिक् ।**

**परि०**— निवर्त्यविशेषाप्तिरूपं साक्षात् मूलोक्तं विकारविशेषं तावदपाकरोति **न तावदप्रच्युतेति** । स किं कृत्स्नस्य ब्रह्मणः, अथैकदेशस्यापरिणामेऽप्यंशान्तरस्य परिणामः । आद्ये आह **स्वरूपस्यैवेति** । **अयमाकारपरिणाम इति** । श्यामफलस्य पीताकारपरिणाम इवेति भावः । **अस्थूलत्वादिश्रुतीति** । अस्थूलमनण्वित्यादिश्रुतीत्यर्थः । प्रपञ्चताऽऽपत्तेरौपाधिकत्वाददोष इत्यत आह **न हीति** । एतेन पराधीनतांशोऽपि निरस्तः । अनिवर्त्यत्वांशं च निराह **प्रपञ्चाकारतायाश्चेति** । **प्रलयेति** । 'यत्प्रयन्ती'त्यादिश्रुतिरित्यर्थः । द्वितीयं प्रत्याह **एकदेशेति** । 'भागेन





प्रत्यासत्तेर्नेतरस्य प्रकृतिग्रहणात्सर्वस्य कारणस्य भवतीति 'पुत्रात्प्रमोदो जायत' इत्यादावनुपादानेऽप्युपादान-संज्ञार्थम् इत्युक्तमित्यवधेयम् ।

**वा०र०— उपादानस्यापादानेति** । उपादानस्य या अपादानसंज्ञा तद्विधायकत्वस्येति ज्ञेयम् । **विधायकत्वमेवेति** । तत्सूत्रार्थ इति वर्तते । **गोलोमाविलोमभ्य इति** । अनेन गोलोमाविलोमभ्यो दूर्वा जायन्तेऽपक्रामन्ति तेभ्य इत्यादिभाष्यग्रन्थमभिप्रैति । हरदत्तादिभिरित्यादिपदेन हरिटीकाकारादीनां ग्रहणम् । वृत्तिकाराद्युपलक्षणाया वक्ष्यमाणत्वात् । मञ्जर्यां भीत्रार्थानां भयहेतुरिति सूत्रे पूर्वस्यैवायं प्रपञ्च इत्युक्त्वा 'पराजेरसोढः, वारणार्थानामीप्सितः, अन्तर्धौ येनादर्शनमिच्छति, आख्यातोपयोगे, जनिकर्तुः प्रकृतिः, भुवः प्रभवः इति षट्सूत्रेषु अयमपि प्रपञ्च इत्येवंरूपेणैवोक्तम् । **तत्र पूर्वस्यैवेति** । प्रकृतमनुवर्तत इत्याशयेन तस्यैवेति मूले प्रतिसम्बन्धिप्रदर्शनं कृतं, तन्मूलमनूद्य व्याचष्टे **तस्यैवायं प्रपञ्च इति** । मूले अयमित्येवोक्तेऽपि मञ्जर्यामियमपीति अपिशब्दोपादानात् तदर्थानुक्तिपरिहाराय समुच्चेयं दृष्टान्तविधया दर्शयति **यथेति** । अत्र आदिपदेनोदाहृतसूत्रषट्कं ग्राह्यम् । मूलमर्थानुवाद इति भावः । **उदाहृतमिति** । यद्यपि काशिकायामेतदुदाहरणं न प्रतीयते तथापि अत एव वृत्तावप्युक्तं कारणमिति न पुनरुपादानकारणमिति तेन पुत्रात्प्रमोदो जायत इत्यादावपि भवतीति मञ्जर्यनुसारेणोदाहरणत्वमपि ज्ञातुं शक्यते । लेखकदोषात्क्वचिदुदाहरणपातोपपत्तेः । अत एवोक्तं रमाकृता इह सूत्रे प्रकृतिग्रहणं हेतुमात्रपरमिति वृत्तिकृन्मतं पुत्रात्प्रमोदो जायत इत्युदाहरणादिति । अपिपदेन कारणमात्रार्थाभिप्रायेणैव ब्रह्मणः प्रजाः प्रजायन्त इत्युदाहृतमित्यपि ज्ञेयम् । शेषीकृताकारणमात्र-परत्वाश्रयणफलतया पुत्रात्प्रमोदो जायत इत्यादिसिद्धमित्युक्तम् । यत्तु रमायां ब्रह्मण इति मूलोक्तमुदाहरण-मुपादाय ब्रह्मशब्देन मायाशबलं गृहीत्वोपादानपरत्वेऽप्युदाहरणत्वमुपपन्नमित्युक्तं तदसत् । भाष्यकैय्यटयो-रप्युक्तरीत्योपादानसंसृष्टावधिभागस्यैवापादानत्वोक्त्योपादानस्यापादानसंज्ञाविधायकत्वेन ताभ्यामप्यनुवर्णनात् । या तूपादानमित्युक्तिः सोपादानसंसृष्टावधिभागस्य वाऽपादानत्वमात्रपरेति सिद्धमेव । अन्यथा सूत्रप्रत्या-ख्यानायोग इत्यलम् । अनुपादानेऽप्यपादानसंज्ञार्थमिति पाठः । अयं न्यासाशयः । जनिकर्तुरिति सूत्रे ध्रुवमपायेऽपादानमित्यतो अवध्यर्थकध्रुवग्रहणानुवृत्तिमाश्रित्य जनिकर्तुर्ध्रुवं कारणमेव भवतीति जनिकर्तुः कारणमपादानमित्येतावतैव पूर्णत्वादुपादानानुपादानसाधारणकारणमात्रवाचिप्रकृतिग्रहणं व्यर्थमित्याशङ्क्य जनि-कर्तुरवधिरित्युक्ते कारणस्यैव प्राप्तावपि कार्येणोपादानकारणस्यातिप्रत्यासन्नतया तस्यैव प्राप्तिः स्यात् ततश्च मृत्पिण्डात् घटो जायत इत्यादेरुपपत्तावपि पुत्रात्प्रमोदो जायत इत्यादौ पुत्रादेः प्रमोदानुपादानतया उपादानत्वाप्राप्तिः स्यात् । अतः सहकारिकारणोपादानकारणमात्रपरप्रकृतिग्रहणं कार्यम् । तेन पुत्रादेरपादानसंज्ञा सिद्ध्यतीति ।

**स०व्र०— शब्दार्थविरोधादिति** । उपादानापादानशब्दार्थविरोधादुपादानस्यापादानविशेषत्वं न कल्प-नीयमिति भावः । उक्तं हि कैयटे । ध्रुवमेकरूपमुच्यते । तच्चाध्रौव्यमपायं विषयमाश्रीयते न त्वनवच्छिन्नम् ।





ततोपाये यदवशिष्टं तदपाये ध्रुवमुच्यत इति । **ध्रुवत्वमस्तीति** । अवधित्वमस्तीत्यर्थः । **अयमपि योगः शक्य इति** । यथा 'भीत्रार्थानां भयहेतुः' इत्यादिसूत्राणि न कर्तव्यानि तथेदमपि सूत्रमवक्तुं अकर्तुं शक्यं व्यर्थमित्यर्थः ।

**विट्ठल०**— प्रकृतिरित्यस्य उपादानमित्यर्थं परित्यज्योपादानसंसृष्टमपायावधिभूतं द्रव्यमिति शृङ्गादित्यस्य बहुतरशृङ्गावयवादित्यर्थान्तरकल्पना किमर्थं क्रियत इति शङ्कते **नन्विति** । **शब्दार्थविरोधादिति** । उपादानं अपादानसंज्ञं स्यादिति व्याख्याने उपादानापादानशब्दार्थयोर्विरोधादित्यर्थः । एतदेव दर्शयति **उपादीयत इति** । महाभाष्यसम्मत्याप्युक्तमर्थं साधयति **किञ्चेति** । तत्राद्यस्य चतुर्थपादे ध्रुवमपायेऽपादानमित्यपादानप्रकरणे 'भीत्रार्थानां भयहेतुः. पराजेरसोढः, वारणार्थानामीप्सितः, अन्तर्धौ येनादर्शनमिच्छति, आख्यातोपयोगे, जनिकर्तुः प्रकृतिः, भुवः प्रभवः इत्येतानि सूत्राणि । ध्रुवमिति सूत्रेण गतार्थानीति नारभ्याणीति निराकृतानि । तत्र जनिकर्तुरिति सूत्रविषयमिदं वाक्यम् । अयमपि योगः इदं सूत्रमवक्तुं शक्यं व्यर्थमिति यावत् इति निराकुर्वाणेनास्मदुक्त एवार्थ इति सूचित इत्यर्थः । एतदेव व्यनक्ति **यदि तर्हीति** । ध्रुवत्वमित्यवधित्वमित्यर्थः । तथा च जनिकर्तुरिति सूत्रस्य ध्रुवमिति सूत्रेणागतार्थत्वाद्भाष्यकारीयवचनमनुपपन्नं स्यादिति भावः । **तस्मादिति** । भाष्यकारस्यानुपपन्नभाषित्वाभावादित्यर्थः । **समादधानैः** मञ्जरीकारादिभिः ।

**चषकः— अयमपि योग इति** । 'भीत्रार्थानां भयहेतुः' इत्यादयो यथा न कर्तव्याः तथा जनिकर्तुः प्रकृतिरित्येतदानुपूर्वीकोऽपीत्यर्थः । **तथा समादधानैरिति** । समाहितिं कुर्वाणैर्हरदत्तादिभिरितीत्यर्थः । **प्राक्** ध्रुवमपायेऽपादानमित्यत्र । **अत्र** जनिकर्तुरिति योगे ।

**९४ सु०— अस्तु वोपादानेऽपि पञ्चमी । तथाऽपि (यत इति) पञ्चमीबलादुपादानत्वनिश्चयो नोपपद्यते, अनेकार्थत्वात् ।**

**विशेषस्मरणादित्युक्तमिति चेत् । किमिदं विशेषस्मरणम् । जनिधातुग्रहणेनेति चेत्, तर्ह्यात्मन आकाशः सम्भूत इत्यादीनामनुदाहरणीयत्वं स्यात् । कुतश्च यत इति पञ्चमीत्यवधृतम्, तसेः सार्वविभक्तिकत्वात् । आत्मन आकाश इत्यनेन एकार्थत्वादिति चेन्न, तस्याः पञ्चम्यां 'भुवः प्रभव' इति विशेषावि(वक्षि)हिताभिव्यक्त्यवधितार्थत्वात् । तया चैवोदाहृतम् 'हिमवतो गङ्गा प्रभवति प्रथममुपलभ्यत इत्यर्थ' इत्यास्तां विस्तरः ।**

**परि०— कुत इति** । कस्मात्कार(का)णादियं पञ्चमीत्यर्थः । ननु 'पञ्चम्यास्तसिल्' इति पञ्चम्यन्तात्तसिलो विधानेन पञ्चम्यन्तकारकस्यापादानवत्त्वात् उपादानस्य चापादानविशेषत्वात् उपादान एव 'यतो वा इमानि' इत्यादि पञ्चमीति निश्चीयत इति चेत् । स्यादेव यद्येवमादिशब्द-





स्तसिलन्त इति निश्चीयते । न चैवम् । निश्चायकलकाराश्रवणात् । स्वरस्यात्रोपनिषदादावनिर्णयात् । 'प्रतियोगे पञ्चम्यास्तसिः' इत्यत्र 'आद्यादिभ्य उपसङ्ख्यानम् इति वार्तिके आद्यादिशब्देभ्यः सर्वविभक्त्यर्थे तसिप्रत्ययस्य विधानेन 'यतो वा' इत्यादेस्तसिप्रत्ययान्तत्वेनापि सम्भवेन कर्त्रादिकारकान्तत्वोपपत्त्या, यतो येन कर्त्रा इमानि भूतानि जायन्त इत्यादिसम्भवादिति भावेनाह **तसेः सार्वविभक्तिकत्वादिति** । एकार्थत्वादित्यनन्तरमपादानकारकादियं पञ्चमीति निश्चीयत इति योज्यम् । **भुव इति** । भवनं भूः, भुवः भवनस्य कर्तुरिति वर्तते । यस्मिन्व्यापारे सति प्रथमं जनदृष्टिविषयो भवति तादृशव्यापारोऽत्र भवनमुच्यते । तस्य कर्तुरवधिभूतं अपादानसंज्ञं भवतीति सूत्रार्थं हृदि कृत्वाह **इति विशेषेत्यादिना** । भुव इत्युक्तेर्विशेषविधानं ध्येयम् । **प्रथममुपलभ्यत इत्यर्थ इति** । प्रथमोपलम्भानुकूलव्यापारवान् भवतीत्यर्थ इत्यर्थः । तथैव पदमञ्जर्यामुक्तेः । तथा च न पञ्चमीबलात् ब्रह्मणः परिणामित्वरूपोपादानत्वसिद्धिरिति भावः । ननु आत्मन आकाशस्सम्भूत इत्यत्र सम्भूतोऽभिव्यक्त इति व्याख्यानमयुक्तम् । तथात्वे आकाशाद्वायुरित्यादावुत्तरत्रापि तदर्थत्वापत्तेः । तत्र विकारविकारिभावो भवतामपि सम्मत इति चेत् (न) । तत्र जननार्थत्वेऽपीह निर्विकाररूपबाधकवशेनाभिव्यक्तत्वोपपत्तेरित्याद्यभिप्रेत्याह **आस्तां विस्तर इति** ।

**गु०दी०— आस्तां विस्तर** इति वदता प्रकृतिपदस्योपादानार्थतामङ्गीकुर्वतामपि जनिकर्तुः या वस्तुस्थित्या प्रकृतिरुपादानं साऽपादानसंज्ञा स्यादित्येव सूत्रार्थः स्यात् । एवं च प्रधानाज्जगज्जायत इत्यत्रैव पञ्चमीविधायकमिदं सूत्रं स्यान्न त्वनुपादानभूते उपादानमपि विदध्यात् । ततश्चानुपादानभूते ब्रह्मण्यनवसरदुःस्थमेवेदं सूत्रम् । अत्र तु पञ्चमीनिमित्तेऽप्युक्तविधया 'ध्रुवमपायेऽपादानमि'ति सूत्रादेव भविष्यति । तस्मादबोधविजृम्भितैवेयं शङ्केत्यपि सूचितम् ।

**यादु०— भुवः प्रभव इतीति** । भवनं भूः भूकर्तुः प्रभवोऽपादानं स्यादिति सूत्रार्थः । **विशेषविवक्षितेति** । विशेषस्मरणतया विवक्षितेत्यर्थः । विशेषस्मरणं च भूधातुग्रहणेनेति मन्तव्यम् । न चाकाशाद्वायुरित्याद्युपादानपञ्चमीसाहचर्यात् 'आत्मनः' इत्युपादानपञ्चमीति वाच्यम् । आकाशादित्यादावपि निमित्तांशस्यैव पञ्चमीनिर्देशात् । किञ्च जनिकर्तुः प्रकृतिरित्यनेनापि कथमुपादान एवापादानसंज्ञा । वृत्तौ पुत्रात्प्रमोदो जायत इत्यस्याप्युदाहृतत्वात् । न्यासेऽपि प्रकृतिपदं हेतुमात्रपरमित्याश्रित्य 'असति प्रकृतिग्रहणे उपादानस्यैव स्यात् । प्रत्यासत्तेः । नेतरस्य । प्रकृतिग्रहणात् सर्वस्य कारणस्य भवति' इति प्रकृतिपदं पुत्रात् प्रमोदो जायत इत्यादावनुपादानेऽप्यपादानसंज्ञार्थमित्युक्तत्वादित्याद्यभिप्रेत्याह **इत्यास्तां विस्तर इति** ।

**वं०प०—** पञ्चमी यतो वेति श्रौता । तर्हि जितं मयेत्यत आह **तथाऽपीति** । **अनेकेति** । पञ्चम्या इति शेषः । ततश्चापादाने पञ्चमीत्यपादानतायामेव पञ्चम्यस्त्वित्यर्थः । **विशेषेति** । अपादाने पञ्चमीत्यस्य





सामान्यसूत्रत्वाज्जनिकर्तुरिति सूत्रस्य तु विशेषसूत्रत्वादत्र चोपादानस्यैवापादानताविधानादुपादान एवेयं यतो वेति निश्चयो युक्त इत्यर्थः । **स्यादिति** । सम्भूत इति भूधातोरेव सत्त्वेन जनिधातोरभावात् कालात्ययापदिष्टताकथनसमये यतो वेति वाक्यानन्तरमिदं नोदाहरणीयमिति भावः । कुतश्चेत्यनन्तरं 'यतो वा इमानि भूतानि जायन्त' इति श्रुताविति शेषः । पञ्चम्यास्तसिलिति विधिरिति चेत्तत्राह **तसेरिति** । तथा च यत इति पञ्चम्या येनेति तृतीयार्थत्वसम्भवेन विकारिकारणभावाभावसाधकानुमानानामुपादानार्थकपञ्चमीत्युक्त-'यतो वे'त्यादिश्रुतिबाधो न युक्तः । यत इति विभक्तेस्तृतीयार्थकत्वेन निमित्तत्वस्यैव तदर्थतासम्भवादिति भावः । **एकार्थत्वादिति** । तथा च तत्रात्मन इति पञ्चम्याः सत्त्वाच्छ्रुत्यैकार्थतालाभाय यत इत्यत्रापि पञ्चम्येव व्याख्येया । तथा च युक्तोऽनया श्रुत्याऽनुमानबाध इत्यर्थः । **तस्याः** आत्मन इति श्रुत्युक्तायाः । **विशेषेति** । भूधातुग्रहणेनेत्यर्थः । अभिव्यक्तिं प्रत्यवधिताऽभिव्यक्त्यवधिता, विशेषसूत्रविहिता याऽभिव्यक्त्यवधिता तदर्थत्वादित्यर्थः । तथा च त्वन्मते यतो वेत्यत्र पञ्चम्या जनिकर्तुरिति सूत्रेणोपादानार्थकत्वादात्मन इति पञ्चम्याश्च भुवः प्रभव इति विशेषसूत्रविहिताभिव्यक्त्यवधित्वार्थकत्वान्न 'यतो वा' 'आत्मन' इत्यनयोरैकार्थ्यमिति भावः । अत्रास्तु वेत्यादिग्रन्थः प्रौढिवादेन प्रवृत्तो, नायमपि सैद्धान्तिकोऽर्थ इति ज्ञेयम् । अस्मन्मते त्वात्मन इति यतो वा इति श्रुत्योरैकार्थ्यमेव । सम्भूत इतिवत् 'जनी प्रादुर्भाव' इति जनिधातोरप्यभिव्यक्त्यवधितार्थत्वमेवेति ज्ञेयम् । तथा च जनिकर्तुरिति सूत्रमवधेरेवापादानसंज्ञाविधायकमिति न 'यतो वा' इत्यादिपञ्चमीत्युक्तश्रुतिविरोधोऽस्मदनुमानानामिति सिद्धम् ।

**आनन्दः— विशेषस्मरणात्** । विशेषविधानात् । **तर्हीति** । अत्र जनिधातोरभावेनोपादानरूपापादाने पञ्चमीपरिग्रहो न स्यादिति भावः । **यत इति** । यतो वा इमानीत्यत्रेत्यर्थः ।

**श्रीनिधि०— भुवः प्रभव इति विशेषाविहितेति** । भूधातुना प्रतीयमानाया अभिव्यक्तिः तस्याः प्रथमावधिरपादानसंज्ञ इत्यर्थः ।

**शे०वा०—** एवं जनिकर्तुरित्यस्यावधेरेव अपादानसंज्ञाविधायकत्वेन उपादानस्य तत्संज्ञाविधायकत्वाभावात् उपादाने पञ्चम्येव नेति न पञ्चम्या उपादानत्वसिद्धिरित्युपपादितम् । इदानीं जनिकर्तुरित्यस्य परपरिकल्पितार्थमङ्गीकृत्योपादानस्यानेनापादानसंज्ञाप्रात्योपादाने पञ्चमीसिद्धावपि न ब्रह्मण उपादानत्वसिद्धिरिति परीत्यैवोपपादयति **अस्तु वेति** । ननु यद्युपादाने पञ्चमी स्वीकृता तर्हि तया ब्रह्मण उपादानत्वसिद्धिः स्यादेव, इत्यतः स्यादेतदेवं यद्युपादान एव पञ्चमीविधानं स्यात् । न चैतदस्तीत्याह **तथाऽपीति** । **अनेकार्थत्वादिति** । जाड्याद्बद्धः पुण्यात्सुखमित्यादाविव यत इत्यादि पञ्चम्या निमित्तार्थकत्वस्यापादानार्थकत्वेऽपि वृक्षात्पततीत्यादाविव विश्लेषावधिमात्रार्थत्वस्य सम्भवेनोपादानमात्रार्थत्वाभावान्न तयोपादानत्वनिश्चय इति भावः । **विशेषेति** । अयमर्थः । न तावदियं निमित्तपञ्चमी भवितुमर्हति । 'हेतुमनुष्येभ्योऽन्यतरस्यां रूप्य' इति हेतोर्मनुष्याच्च रूप्यप्रत्ययविधौ तत आगत इति प्रकृतस्य पञ्चम्यर्थस्य हेतोरिति विशेषणेन हेतावपि





पञ्चमीज्ञापनात् । ज्ञापनेन विध्युन्नयनादेव निमित्ते पञ्चम्याः कल्पनीयतया तदपेक्षया 'जनिकर्तुः प्रकृतिः' इति प्रत्यक्षविधिप्राप्तोपादानपञ्चम्या वरत्वेनोपादानपञ्चमीत्वमेवेति निर्णयात् । ध्रुवमपायेऽपादानमित्यवधेरप्यपादानत्वस्मरणात् जनिकर्तुः प्रकृतिरित्युपादानस्यापि तत्स्मरणेन अपादानत्वस्योपादानानुपादानसाधारणतया सामान्यत्वात् । उपादानत्वस्य च विशेषत्वादुपादानपञ्चमीत्वमेवेति निर्णयो युज्यत इति ।

तत्र विशेषस्मरणत्वं न तावत्प्रत्यक्षविधिप्राप्तत्वम् । पाणिनीये ज्ञापकयोगविभागलभ्यस्य व्याकरणान्तरे प्रत्यक्षविधानावश्यम्भावेन निमित्तपञ्चमीत्वस्यापि प्रत्यक्षविधिप्राप्तत्वात् । नाप्यपादानविशेषत्वादुपादानत्वस्य तदर्थत्वमिति युक्तम् । तथा सति ध्रुवमपायेऽपादानमित्युक्तावधेरपि तद्विशेषतया तदर्थत्वस्यापि प्रसङ्गादुपादानापादानशब्दार्थविप्रतिषेधस्योपपादितत्वेन सामान्यविशेषभावस्याशक्यशङ्कत्वाच्चेति भावेनाह **किमिदमिति** । अत एवोक्तदोषप्रसक्तिशून्यं प्रकारान्तरमाशङ्कते **जनिधातुग्रहणेनेति** । यद्यप्यत्र न धातुनिर्देशे इक्, तथा सति 'गमहन' इत्युपधालोपप्रसङ्गात् । तथापि 'इन्धिभवतिभ्यां च' इतिवद्धातुनिर्देशे आगन्तुकोऽयमिकार इति द्रष्टव्यम् । अवधिपञ्चम्या धातुविशेषग्रहणवत्त्वाभावादुपादानपञ्चम्याश्च तद्वत्त्वादपादानार्थत्वेऽप्युपादानपञ्चम्येव ग्राह्या नावधिपञ्चमीत्याशयः । **तर्हीति** । जनिकर्तुः प्रकृतिरित्यस्य जनिधातुग्रहणेन ध्रुवमपायेऽपादानमित्यस्माद्विशेषस्मरणत्व इत्यर्थः । **अनुदाहरणीयत्वमिति** । 'यतो वेत्यत्र जायन्त' इति जनिधातुश्रवणेन तस्योदाहरणत्वसम्भवेऽपि 'आत्मन आकाशः सम्भूत' इत्यत्र जनिधात्वश्रवणेनोदाहरणत्वासम्भवादित्यर्थः । अस्तु तस्यानुदाहरणीयत्वं तथाऽपि यतो वेत्यादि पञ्चम्या उपादानत्वसिद्धिरविकलैव । किञ्च जननं जनिरुत्पत्तिः । 'इञ् वपादिभ्यः' इति जनेर्भावे 'इञजनिघसिभ्यामिणि'त्युणादिसूत्रेण 'इणवजनिवध्योश्चे'ति वृद्धिप्रतिषेधः । एवं चोत्पत्त्यर्थकधातुग्रहणेन विशेषस्मरणत्वस्य विवक्षितत्वात् 'आत्मन आकाशः सम्भूत' इत्यत्राप्यङ्गादङ्गात्सम्भवसीत्यादाविवोत्पत्त्यर्थकधातुयोगस्य सत्त्वाद्युक्तमेव तस्याप्युदाहरणमित्यत उक्तरीत्या पञ्चम्या कथञ्चिदुपादानत्वसिद्धिसम्भवेऽपि प्रकृते ज्ञापकाभावेन यत इत्यस्य पञ्चमीत्वासिद्धेः न तयोपादानत्वसिद्धिः सम्भवतीत्याह **कुतश्चेति** । येन तद्बलादुपादानत्वसिद्धिरिति वाक्यशेषः । पञ्चम्यास्तसिलिति पञ्चम्या एव तसिल्विधानेन पञ्चमीं विना तसेरनुपपत्तेस्तसिनैव यत इत्यस्य पञ्चमीत्वसिद्धिरित्यतः स्यादेतदेवं यदि पञ्चम्या एव तसिविधानमिति स्यान्न चैतदस्ति । आद्यादिभ्य उपसङ्ख्यानेन तसेः सार्वविभक्तिकत्वावगमेन सर्वविभक्तिसाधारणस्य तसेः पञ्चमीत्वावधारकत्वायोगादित्याह **तसेरिति** । ननु 'यतो वा इमानि भूतानि जायन्ते', 'आत्मन आकाशः सम्भूत' इति सृष्टिवाक्ययोरेकार्थतया तत्स्थयोः यत आत्मन इत्येतयोरेकार्थत्वात् आत्मन इत्यस्य पञ्चमीत्वात् यत इत्यस्यापि पञ्चमीत्वनिश्चय इति शङ्कते **आत्मन इति** । तर्ह्यात्मन इति पञ्चम्या उपादानत्वसिद्धिरिति सिद्धान्तभङ्गप्रसङ्गादित्याह **न तस्या इति** । कुत आत्मन इति पञ्चम्या अभिव्यक्त्यवधितार्थत्वमित्यतो विशेषस्मरणविहितत्वादित्यभिप्रेत्योक्तं **विशेषविहितेति** । जनिधातुग्रहणेन जनिकर्तुरित्यस्येव भूधातुग्रहणेन 'भुवः प्रभव' इत्यस्य विशेषस्मरणत्वादिति भावः ।





ननु सूत्रे प्रभव इत्येवोक्तत्वात् कथमनेनाभिव्यक्त्यवधितार्थत्वसिद्धिरित्यतः अभिव्यक्त्यवधितार्थनिष्ठोदाहरणवाक्यात् तत्सिद्धिरित्याशयेन तदुदाहरति **तथा चैवेति** । ननूदाहरणेऽपि प्रभवतीत्येवोक्तत्वान्नाभिव्यक्त्यवधितार्थत्वमुदाहरणस्येत्यतो वृत्तिकारीयं तद्व्याख्यानमुदाहरति **प्रथममिति** । ननु च 'आकाशाद्वायुरि'त्युपादानपञ्चमीसाहचर्यादात्मन इति पञ्चम्युपादानपञ्चम्येवेति नास्याभिव्यक्त्यवधितार्थत्वमिति यतो वेति पञ्चम्या अप्युपादानपञ्चमीत्वमित्यतः स्यादेतदेवं यद्याकाशाद्वायुरित्यस्या उपादानपञ्चमीत्वं स्यात् । न चैवम् । तत्रापि वाय्वात्मना परिणताकाशसंसृष्टावधिभूताकाशस्यैवोक्तरीत्या अपादानत्वपञ्चमीवाच्यत्वयोः सिद्धतयोपादानस्य पञ्चम्यर्थत्वाभावेन तत्साहचर्येणाप्यात्मन इत्यस्योपादानपञ्चमीत्वनिश्चयायोगादित्याह **इत्यास्तां विस्तर इति** ।

**वा०र०— परपरिकल्पितार्थमिति** । भास्करादिः परपदार्थः । अनेन यत इत्याद्युपादानपञ्चमीसिद्ध्यर्थं यावान्प्रयासो भास्करादीनां तावन्तं सर्वमभिप्रैति । अत एवाह **उपादानस्येत्यादि** । अनेनास्तु वोपादान इति मूले परोक्तरीत्या सूत्रार्थे सत्युपादानस्यापादानसंज्ञाप्राप्त्येऽप्येतावता पूरणमभिप्रेतमिति सूचयति **जाड्यादिति** । जाड्यसुखयोः बन्धपुण्ये प्रतिनिमित्तस्यैव सत्त्वादित्याशयः । **निमित्तार्थकत्वस्येति** । सम्भवेनेति वक्ष्यमाणेनान्वयः । ननु निमित्तार्थकत्वेनोपादानत्वासिद्धिवर्णनायोगः । अस्या अपादानपञ्चमीत्वेन निमित्तपञ्चमीत्वाभावेनोपादानत्वसिद्धिसम्भवादित्यत आह **अपादानार्थकत्वेऽपीति** । **विश्लेषेति** । विभागेत्यर्थः । **उपादानमात्रार्थत्वेति** । तन्निश्चयाभावादित्यर्थः । यत इति च पञ्चमी न कारणमात्रे स्मर्यते अपि तु प्रकृतौ जनिकर्तुः प्रकृतिरिति इत्येतद्वामतीव्याख्यानरूपं यत्तु ज्ञापकाद्धेतौ पञ्चमीति तत्राह **न कारणमात्र इति** । ज्ञापनेन विध्युन्नयनात् वरमिह प्रत्यक्षविधिप्राप्तप्रकृतित्वोपादानमिति भावः इत्येतत्कल्पतरुं मनसि निधाय निमित्तपञ्चमीत्वपक्षं निराकरोति **न तावदियं निमित्तेति** । ध्रुवमपाय इत्यादिनोत्तरत्रोपादानानुपादानसाधारणापादानमात्रे पञ्चम्या अपि निराकरणात् तावदित्युक्तम् । तत्र विशेषस्मरणं नाम प्रत्यक्षविधिप्राप्तत्वमित्याश्रित्य निमित्तपञ्चमीनिराकरणं तदर्थतयोक्तम् । सामान्यप्रतिद्वन्द्वविशेषस्य विशेषपदेन ग्रहणे विशेषस्मरणं यथाश्रुतमेवाश्रित्यापादानपञ्चमीनिराकरणादर्थतयोक्तमिति परिहारटीकाग्रन्थमर्यादया स्पष्टमिति बोध्यम् ।

**हेतावपीति** । तेन समादागत(?)मित्यादि पञ्चम्युपपन्नेति प्रदर्शयितुमिति शेषः । **ज्ञापनेन विध्युन्नयनादेवेति** । पाणिनिना ज्ञापनयोगविभागादिना प्रतिपादितस्य व्याकरणान्तरस्थविधायकमूलत्वमिति वैय्याकरणैरङ्गीकारेण ज्ञापनादिना कार्याङ्गीकारस्थले विधायकशास्त्रापेक्षायां ज्ञापनादि मूलभूतव्याकरणान्तरस्थविधायकशास्त्रस्यैव तत्तत्प्रकृतकार्यविधायकतयोपतिष्ठमानत्वादित्येव ज्ञापनेन तन्मूलविध्युन्नयनद्वारैवार्थसिद्धेरिति भावः । हेतुमनुष्येभ्योऽन्यतरस्यां रूप्यः विभाषागुणेऽस्त्रियामिति सूत्रयोरधिको विचारः परकृतोऽवधेयः । ज्ञापनस्य विध्युन्नायकतयाऽर्थगमत्वं च इत्यादिसूत्रीयहरदत्तादिग्रन्थेषु स्पष्टम् । किं च यदि पाणिनिः स्वज्ञापनमेव विधायकतयाभिप्रेत्य तन्मूलतया व्याकरणान्तरं नाभिप्रेयात् तर्हि नित्यं वृद्धशरादिभ्य इत्यत्र नित्यग्रहणं व्याकरणान्तरस्थ एकाचोनित्यमिति सूत्रगतैकदेशनित्यशब्दस्मारणाद्वा सम्पूर्णतद्विधिस्मारकमित्यपि





नाभिप्रेयात् तदभिप्रायाभावे च नित्यग्रहणप्रयोजनाभावेन तद्वद्यर्थमेव कुर्यात् । उक्तं च नित्यं नित्यं वृद्धेति सूत्रे काशिकायां 'नित्यग्रहणं किम् । यावता आरम्भसामर्थ्यान्नित्यं भविष्यति । एकाचो नित्यं मयटमिच्छन्ति । तदनेन क्रियते । त्वङ्मयमि'त्यादि । नित्यं शब्दोऽप्युच्यमानः पूर्वाचार्यपठितस्य नित्यशब्दस्य स्मारक इति भाववर्णनपूर्वकमेव च मृच्छब्दस्य शरादिषु पाठोऽस्यैव प्रपञ्चार्थो द्रष्टव्य इति हरदत्तेन तत्तात्पर्यनिरूपणाच्च । एवमन्यत्रापि पाणिनिसूत्रगतनित्यग्रहणस्य व्याकरणान्तरस्थसूत्रस्मारकत्वं व्याकरणान्तरस्थनित्यग्रहणप्रपञ्चार्थत्वं शरादिगणस्थमृच्छब्दस्येति प्रतिपादनाच्च व्याकरणान्तरस्थमूलविधेरुन्नयं वैय्याकरणसम्मतमिति स्पष्टत्वात् । अन्यथा नित्यग्रहणस्यैव स्वातन्त्र्येण एकाचो नित्यं मयडित्येतावदर्थकतया पूर्वाचार्यवचनमार्गणप्रयासवैय्यर्थ्यं ग्रन्थकाराणां स्यात् । एतेनैतदप्यपास्तम् । ज्ञानेनैव कार्यसिद्धौ सूत्रं वार्तिकं वा व्यर्थमेवेति हि व्याकरण-प्रक्रिया । ततो न विध्यन्तरोन्नयनावकाशः । तथा विध्यन्तरं न तावत्पाणिनेः, बाधात् । नाप्यण्यन्तरस्य । पाणिनेराप्तत्वे तद्वाक्येनैवार्थप्रतिपत्तिसम्भवे विध्यन्तरकल्पनावैय्यर्थ्यापत्तेः । अनाप्तत्वे तु न तज्ज्ञापकत्वेन उन्नयनमपि सम्भवति । अनाप्तज्ञानस्य मूलत्वनियमाभावादिति उक्तव्याकरणप्रक्रिया तावन्नास्त्येव । सूत्रान्तर-प्रापितार्थानामपि सूत्रान्तराणां प्रपञ्चत्वाद्याश्रयणेन सार्थकस्य वैय्याकरणैरेवाश्रयणीयात् डप्रकरणस्थान्येष्वपि दृश्यत इत्यादिसूत्रीय डोऽन्यत्रापि दृश्यत इत्यादि वार्तिकारम्भस्यापि दृष्टत्वात् । न च तत्र भाष्यकारेण प्रत्याख्यानात् तदनारम्भो नाम अनारब्धव्यत्वमभिप्रेतमिति वाच्यम् । तर्हि ध्रुवमपायेऽपादानमित्येतत्सूत्र-प्रपञ्चरूपभीत्रार्थानां भयहेतुरित्यादि सूत्रसप्तकस्येवान्यत्रापि व्यत्ययो बहुलमित्यादि सूत्रप्रपञ्चतत्तत्सूत्राणामिव भाष्यप्रत्याख्याततत्तद्वार्तिकानामिव चोन्नीतविधेरपि सुखेन प्रत्याख्यानं कार्यम् । तत्र प्रपञ्चत्वाद्याश्रयणेन समादधानानां परिहारवत् कश्चित्परिहारो वा कर्तव्यः । न नः क्षतिः । भवदुक्ता प्रक्रिया तु गौणी जातैव पाणिनीयसूत्रादिवैय्यर्थ्यापादकत्वात् ।

किं चोक्तरीत्या नित्यं वृद्धेति सूत्रे नित्यग्रहणं व्याकरणान्तरस्थविधिस्मारकमिति निश्चयादुक्तप्रक्रिया तद्विरुद्धा पाणिनीयज्ञापकयोगविभागलभ्यस्य व्याकरणान्तरे प्रत्यक्षेति उत्तरग्रन्थानुसारेण व्याकरणान्तरस्थ-विधेरुन्नयनस्य सिद्धतया पाणिन्यृष्यन्तरविकल्पानवकाशः । न च तथापि पाणिनेराप्तत्वेन तज्ज्ञापनेनैवार्थ-सिद्धेरुभयं व्यर्थमित्याद्युक्तमिति वाच्यम् । अस्य पर्यनुयोगस्य नित्यं वृद्धेत्यादि प्रागुदाहृतेऽपि साम्येन अनुद्भाव्यत्वात् वस्तुतत्वस्योभयनिर्णयत्वात् । अपि चाहिसाधकत्वेन व्याकरणान्तरस्थमेवाभिप्रेतं, तत्राश्वास-जननाय पाणिनिज्ञापनमाश्रीयते । न तु पाणिनिज्ञापकमपि साधकतयाश्रित्य पुनर्विधिरुन्नीयते येनोक्तदोषः स्यात् । तथा च साक्षाद्विधिलाभे तत्परित्यागेन ज्ञापनमात्रस्य साधकतया व्यक्तत्वस्याग्रहमात्रमेव । कथ-मन्यथाष्टकादिस्मृत्या मूलश्रुत्यनुमानं सर्वसम्मतम् । कथं चानुमितश्रुतिप्रत्यक्षश्रुत्योर्विरोधे विचारपरं विरोधे त्वनपेक्षं स्यादसति ह्यनुमानमिति विरोधाधिकरणम् । एवमन्यत्रापि कथं चाचारेण श्रुत्यनुमानं मङ्गलादिस्थले । तत्रापि स्मृत्याचारकर्त्रोराप्तत्वादिविकल्पदूषणस्यानिवार्यत्वात् आचारस्यानुमानतया प्रामाण्योपपत्त्या प्रमाण-सिद्ध्यर्थमाचारेण श्रुत्यनुमानमाश्रित्य तस्याप्ययोगाच्च । प्रतितिष्ठन्ति ह वा एता इत्याद्यर्थवादेन





विध्युन्नयनस्याप्युक्तरीत्या प्रत्याख्यानापाताच्च । यत्र केवलपाणिनिज्ञापनमात्रमेव साधकीक्रियते तत्र विध्यन्तराभाव एवेत्यवधारणं न कार्यम् । अन्यत्रोत्पत्त्या तन्न्यायेन विधिपर्यवसानकल्पनोपपत्तेः । यदि च क्वचित्सर्वथा ज्ञापक उन्नेयो विधिर्नास्तीति तपसाऽवधृतं तर्हि तत्र तदभावेनान्यत्र सद्भावेऽपि ग्रन्थकारैरुक्तो न त्याज्यः । मीमांसकैः शिष्टाचाररूपस्यापि शिष्याणां गुर्वनुगमनादेर्मूलश्रुत्यभावमाश्रित्यापि आचारान्तरेण श्रुत्यनुमानस्य प्राय आश्रयणात् । यथा चैतत्तथा स्मृतिपादीयस्मृत्यधिकरणीयवार्तिकराणकारादिषु स्पष्टम् । एवमेव भाष्यकारादीनां तत्र तत्र सूत्रकारनिर्देशादि ज्ञापकोक्तिः मुनित्रयनिर्देशस्य ज्ञापकतया तद्व्याख्यातॄणामुक्तिश्च समाधेया । एवमनुव्याख्यानकारैः बहुव्रीहौ प्रकृतेत्यादिसूत्रे पूर्वपदप्रकृतिस्वरविधायके प्रसिद्धव्याकरणे विद्यमानेऽपि तत्परित्यागेन तन्मूलमहाव्याकरणस्थमेव सूत्रं पूर्वान्तःस्वरित इत्यादिकमुदाहृतम् । मूलकृता च प्रसिद्धव्याकरणेऽप्ययमर्थोऽस्तीति सूचनाय । यथाह पाणिनिः बहुव्रीहौ प्रकृत्या पूर्वपदमितीति सम्मतिः कथिता । सर्वं चैतच्छिष्यबुद्धिवैशद्यायैव साधुत्वव्युत्पादनमस्माभिः कृतम् । वस्तुतो मूलकृता दूषणान्तरप्रवृत्तये परोक्तरीत्योपादानपञ्चमीविधानादिकमङ्गीकृत्यैव दूषणमारब्धम् । अस्तु वोपादाने पञ्चमीत्यादिना तदवसरे ज्ञापनेन विध्युन्नयनादित्यादिकल्पतर्वाद्युक्तरीत्या प्रापणादिकमङ्गीकृत्यैवाधिकदूषणप्रवृत्तिर्वर्णनीया । न तु पञ्चमीविध्यादिप्रक्रिया पराङ्गीकृता निरासार्हा अनवसरग्रस्तत्वात् । अत एवोक्तं टीकाकृता अस्तु वेत्येतदवतारावसरे **एवं जनिकर्तुरित्यस्येत्यादि** । इदानीं जनिकर्तुरित्यस्य परपरिकल्पितार्थमङ्गीकृत्येत्यादि च । तस्माज्ज्ञापनेन विध्युन्नयनोक्तौ न कश्चिद्दोष इत्यलम् ।

**कल्पनीयतयेति** । निर्णयकान्तराभावेन अस्यैव तन्निर्णयहेतुतया अस्मादेव तन्निर्णयस्याङ्गीकर्तव्यतयेत्यर्थः । न केवलं पूर्वपदान्तस्वरितत्वबहुव्रीहित्वमुदाहरणबलात् उदाहरणेऽप्युत्तरश्रुतिबलात् कल्प्यत इत्यादि मूले तज्जातीयकटीकादौ च कल्पनापदमपूर्वनिर्णयपरतया व्याख्येयम् । तेन यत् बलात्कल्प्यते तस्यैव साधकतया कल्पनोक्तिरयुक्तेति शङ्कानवकाशः । सांव्यावहारिकश्चायं सर्वशास्त्रेषु प्रयोगो विवादविषये सिद्धेऽर्थे किं प्रमाणबलादेवं कल्प्यते उत एवमेवेत्यादिरूपेण ..........तत्रोक्तेः । प्रमाणाभावेन कल्पनामात्रत्वादि च अप्रामाणिककल्पनमनिष्टं विभागतयोक्तं च प्रामाणिककल्पनात्वात् इत्यादि च तत्रतत्रोक्तं पञ्चम्या विहितत्वेऽपीयं पञ्चमी तेनैव प्रापितेत्यस्य निर्णयाभावेनेदानीं तथा कल्पना कार्येत्यस्य स्पष्टप्रतिभासतया कल्पनापदेनात्रत्याङ्गीकारस्यैवाभिधानाच्चेति ज्ञेयम् । **तदपेक्षयेति** । अनुमितविधिप्रापितपञ्चम्यपेक्षयेत्यर्थः । **प्रत्यक्षविधिप्राप्तेति** । जनिकर्तुः प्रकृतिरिति प्रकृतावुपादानलक्षणायां हि पञ्चमी विधीयत इत्यादेर्मूले प्रतिपादनं परोक्तरीत्येति तदनुसारेण अत्रापि पञ्चम्या परम्पराभिप्रायेण तत्प्राप्तत्वोक्तेर्युक्तत्वम् । एतेन पञ्चमीबलात् किलेति मूलानुसारेणास्य पञ्चमीविधायकत्वाभावेन तेन तत्प्राप्तिवर्णनायोगादिति शङ्कानवकाशः । उपादाने पञ्चमीदूषणपरपूर्वमूलानुसारेण प्रकृतेरस्तु वेति मूलेऽयोगात् । एतेन किमिदं विशेषेत्युत्तरमूलानुसारेणोपादानपञ्चम्या इत्यादेरप्ययोग इति शङ्काप्यपास्ता । तथा सति शङ्कासमाधानग्रन्थस्थले शङ्काग्रन्थस्य दूषणं तत्समाधानानुसारेण स्वयं कृत्वा शङ्काया अनुत्थानमिति वर्णयितुवदशास्त्रीयकथात्वापत्तेः । अस्तु वा पूर्वदूषणानुसरणमपि ।





तथाऽप्यत्र नानुपपत्तिः । जनिकर्तुः प्रकृतिरिति प्रत्यक्षविधिप्राप्तं यदुपादानमपादानविशेषतया विहितं तत्र या पञ्चमी प्रत्यक्षविधिनैवापादानत्वप्रयुक्ता प्राप्तेत्यर्थोपपत्तेरित्यलम् । **पञ्चम्या इति** । नन्वत्र विधायकशास्त्रयोरेव प्राबल्यदौर्बल्ययोर्वक्तव्यतया निमित्तपञ्चम्यपेक्षयोपादानपञ्चम्या कथं वरत्वोक्तिः । कार्ययोः प्राबल्यदौर्बल्य-चिन्तानुपपत्तेरिति चेन्न । पूर्वपरावरदक्षिणोत्तरापरेत्यादौ पूर्वेण नित्यायां सर्वनामसंज्ञायां प्राप्तायां जसि विभाषा आरभ्यत इति, गुणापवादो योग इति, बुद्ध्या गुणनिषेध इति, पररूपगुणापवाद इति च शतसहस्रशः स्थलेषु कार्यशास्त्रयोरुभयोरपि पुरस्कारेण प्रयोगाणां सत्त्वेनेह कार्यपुरस्कारसम्भवात् । मयडादिप्रत्ययविधानस्थलेऽणो-ऽपवाद इत्याद्या उक्तयश्चासमस्यमानेष्वेकत्वेत्यादि युष्मदस्मच्छब्दीयादेशव्यवस्थापरश्लोकेष्वेते परत्वाद्बाधन्ते । त्वमाप्तिं (?) प्रबाधन्ते पूर्वविप्रतिषेधतया इत्यादेः स्पष्टमभिधानाच्च । विप्रतिषेधे परं कार्यमित्येतन्मञ्जर्यां परं कार्यमित्यस्य विहितकार्यपरत्वाश्रयणेनापि योजनाच्च । पूर्वत्रासिद्धमित्यत्रापि कार्यस्यैवासिद्धत्वोक्तेश्च । उक्तं चान्तरान्तरेण युक्त इत्येतत्सूत्रीयभाष्ये । कमण्डलोर्द्वितीया कस्मान्न भवति । उपपदविभक्तेः कारकविभक्तिः बलीयसीति प्रथमा भविष्यतीति । एवं ऋलृगित्येतत्सूत्रीयप्रदीपविवरणे कार्यस्यैव सिद्धत्वं प्रतिपादितम् । एवमन्यत्रापि तथा शास्त्रपुरस्कारेणापि तत्र तत्र तथा व्यवहारः स्पष्ट एवेति ज्ञेयम् ।

ननु तथापि प्रत्यक्षविधिप्राप्तपञ्चम्यावरत्वेन प्रकृते उपादानपञ्चमीत्यङ्गीकारे समादागतं विषमादागतं इत्यादावपि उपादानपञ्चम्या एव प्रसङ्गेन निमित्तपञ्चम्यभावापत्त्या तज्ज्ञापनस्य वैय्यर्थ्यं स्यादिति चेन्मैवम् । न हि उन्नीतविधिप्राप्तस्य विशेषविधिना विशेषविषये अपवादमात्रेण निरपवादस्थलेऽप्युन्नीतविधिप्राप्तिः नेत्यागतम् । येन तद्वैय्यर्थ्यं शङ्कनीयं स्यात् । किन्तु बाधकीभूतविधिप्रवृत्तिस्थलं विहाय तदप्रवृत्तिस्थले उन्नीता सामान्यविधिः प्रवर्तत इत्येव । न चैवं सति वैय्यर्थ्यमायाति । अन्यथा कारकविभक्तिवृद्ध्यादिनोपपद-विभक्तिगुणादेरपवादविषये बाधे सर्वत्र कारकविभक्तिवृद्ध्यादेरेव प्रसङ्गेन उपपदविभक्तिगुणादिविधानस्य वैय्यर्थ्यं स्यात् इति पर्यनुयोगस्य को निवारयिता । यदि च तत्र अपवादविषयं विहाय अपवाद्यस्य अन्यत्र प्रवृत्तिसम्भवेन न वैय्यर्थ्यमिति मन्यसे हन्त तर्हि प्रकृतेऽपि तथैवाङ्गीकारोऽभिमत इति तुल्यम् । एतेनैत-दप्यपास्तम् । उपादाननिमित्तत्वयोरनिर्णयेन उभयोपाधिकपञ्चमीविध्योः एकत्राप्रसक्त्या प्राबल्यदौर्बल्यचिन्ता-नवकाश इति । अभिन्ननिमित्तोपादानकं जगदिति वादिना परे, जगत्प्रति ब्रह्मणः उपादानत्वनिमित्तत्वयो-रुभयोरप्यङ्गीकारेण तदुभयं निश्चित्यैव उपादानत्वानङ्गीकारिणं निमित्तपञ्चम्यादिनिषेधेन उपादानपञ्चमीव्युत्पादनेन उपादानत्वसमर्थनस्य क्रियमाणतया तं प्रति शास्त्रद्वयप्रसक्तित्वेन प्राबल्यदौर्बल्यचिन्तोपपत्तेः प्राङ् न तावदिति तावत्पदेनोपादानानुपादानमात्र एव पञ्चमीति पक्षोऽपि निराकर्तव्यतयोक्तः तन्निराकरोति **ध्रुवमपाय इत्यादिना** । अत्र ध्रुवमपाय इत्यतः प्राक् नाप्यपादानसामान्ये पञ्चमीति प्रतिभागः पाठः स्वरसः । अयमर्थः । यत इति पञ्चमी हि उपादानानुपादानसाधारणापादानमात्रे पञ्चमीति न तयोपादानत्वसिद्धिरिति वाच्यम् । अस्याः अपादाने पञ्चमीति सामान्यविहिताया अपि उपादानलक्षणविशेषमादाय पर्यवसाने उपादानपञ्चमीति निर्णयो-पपत्तेः । उक्तं च शृङ्गादीत्येतदवतारमूले । उपादानं चापादानविशेषः । जनिकर्तुः प्रकृतिरिति स्मरणात् ।





ततोऽपादाने विहितपञ्चम्युपपादनेऽपि भविष्यतीत्यादि । तत्रत्यविशेषत्वप्रतिपादनार्थमपादानत्वस्य सामान्यरूपताप्रदर्शनं ध्रुवमपाय इत्यादिना टीकायां कृतम् । अत्र निर्णयो युज्यत इति इत्यत्रत्येतिशब्दस्य आवृत्तिमभिप्रेत्य प्रयोगादाद्यहेत्वर्थतायां निर्णयस्य उक्तत्वादित्यर्थकत्वं द्वितीयस्य चायमर्थ इति पूर्वेणान्वितत्वं विवक्षितम् । तेनापादानपञ्चमीत्वाभावप्रतिज्ञायां हेत्वकथनमिति शङ्कानकाश इति ध्येयम् । एतेनैतदपि परास्तम् । यदेतद्वाक्यार्थे दूषणं प्रतिभाति । उपादानत्वमुपाधीकृत्य पञ्चमीविधिना भावेनापादानत्वमुपाधीकृत्य पञ्चमीविधायकस्य सामान्यत्वमुक्तोपादानत्वस्य विशेषत्वाभिधानं व्यर्थम् । अवधिपञ्चमीनिरासाय तस्यैव सामान्यतया वचनस्यौचित्यं चेति । तथा हि । आद्यं तावन्न दूषणतया प्रतिभासार्हम् । प्रकृतावुपादानलक्षणायां हि पञ्चमी विधीयत इति प्राचीनमूलपर्यालोचनया अस्तु वेत्यत्रत्यसिद्धान्तदूषणस्यायोगादपादानत्वमुपाधीकृत्य पञ्चमीविधायकस्य सामान्यतया उपादानत्वमुपाधीकृत्य पञ्चमीविधायकविशेषणबाधार्थमेव तस्य विशेषतायाश्च अवश्यवक्तव्यत्वसम्भवेन वैय्यर्थ्यानवकाशात् । नापि द्वितीयम् । अपादानस्य सामान्यतयोपादानस्य च विशेषत्वेन तद्रूपेण तयोः सामान्यविशेषभावोक्त्युपपत्तावपि अवधेः सामान्यताया उपादानस्य तद्विशेषतायाश्च अभावेन तयोः तथाभाववक्तव्यत्वापादानस्य निर्मूलत्वात् ।

न हि अवधित्वं त्याज्यतया विवक्षितमित्येतावतापादनत्वसामान्यमपि त्याज्यतया सचेतनः शङ्कितुमर्हति । अपादानविशेषनिर्णये तेन विशेषान्तरबाधस्यैव पूर्वोत्तरमर्यादया स्पष्टत्वात् तथापि मूलोक्तमुपादानपञ्चमीविधायकत्वाभावमाश्रित्येदं दूषणद्वयं प्रतीयेतैवेति चेन्न । तत्रापि भावावबोधे दोषप्रतिभासाभावोपपत्तेः । अत्र ग्रन्थे हि अपादाने पञ्चमीति अपादानसामान्ये विहितापि पञ्चमी स्वोपाधिभूतमपादानत्वं यत्प्रापितं यद्रूपं यत्रास्ति तद्रूपमादायैव पर्यवस्यति । तथा च प्रकृते जनिकर्तुरिति विशेषप्रापितोपादानत्वमादायैवापादानपञ्चमी पर्यवस्येत् । वृक्षात् पर्णं पततीत्यादाववधित्वरूपापादानत्वविशेषमादायैव पर्यवसानदर्शनात् । न त्वपादानत्वमात्रमेव । एवं तदर्थं चापादानपञ्चमीविधायकस्य सामान्यताया उपादानत्वस्य तद्विशेषतायाश्च कथनं सङ्गततरमिति कथं वैय्यर्थ्यप्रतिभासावकाशः । अवधेः सामान्यतया वक्तव्यत्वोक्त्यवकाशश्च । यदि परमपादानत्वमुपाधीकृत्य पञ्चमीविधायकं सामान्यम् । जनिकर्तुरित्यापादानत्वमुपाधीकृत्य पञ्चमीविधायकं तु विशेष इत्यतोऽपि प्रतीयेत तदोक्तदूषणमपि प्रतिभासेत । किञ्चायं हि ग्रन्थः । अथ मतम् । अपादाने तावत्पञ्चमीति उपादानं चापादानविशेषः । जनिकर्तुः प्रकृतिरिति स्मरणात् । ततोऽपादाने विहिता पञ्चम्युपादानेऽपि भविष्यतीति । न चैवं सति पञ्चम्या नियमेनोपादानत्वासिद्धिः । विशेषस्मरणस्य ग्राह्यत्वादिति शृङ्गादित्येतदवतारग्रन्थोक्तदूषणाय प्रवृत्ता **अस्तु वेति** मूले । एकदेशानुवादपरिहाराय सम्पूर्णप्राचीनमूलार्थानुवादरूपः । तथा च तद्वाक्यार्थ एवास्याप्यर्थ इति पूर्वोत्तरपरामर्शेन दूषणप्रतिभासावकाशः । अत एव विशेषस्मरणनिराकरणावसरे वक्ष्यति । अवधेरपि तद्विशेषतया तदर्थत्वस्यापि प्रसङ्गेन विशेषे सामान्यपर्यवसानेऽप्युपादानत्वाप्रास्या तत्प्रास्त्यर्थं विशेषप्रापितापादानत्वमात्राश्रयणेन अपादानसामान्यबाधाश्रयणं व्यर्थमिति । तस्मात्पूर्वोत्तरमूलटीकाग्रन्थमर्यादया वाक्यार्थकरणेऽर्थान्तरप्रतिभासानवकाशे तत्र दूषणस्य सुतरां





नावकाश इति सुधीभिः सन्तोष्टव्यम् । उक्तरीत्या निमित्तापादानसामान्यपञ्चमीनिराकरणस्य दूषणं किमिदमिति मूलान्न प्रतीयत इत्यतः प्रागुदाहृतप्रत्यक्षविधित इति भामतीग्रन्थादागतं विशेषत्वम् अथ मतमित्यादिमूलोक्त-सामान्यप्रतिद्वन्द्वविशेषत्वं चेत्युभयविधविशेषस्मरणत्वप्रसक्तिसद्भावात् तदुभयनिरासः स्पष्टतया आक्षेपेणैव मूलकृता सूचित इत्याशयेन स्वयं तदभिप्रेतं दूषणं दर्शयति **तत्र विशेषेति** । अत्र च स्मर्यत इति स्मरणमिति कर्मणि ल्युट् कृत्यल्युटो बहुलमिति वचनात् । तथा च विशेषस्मरणस्य ग्राह्यत्वादित्येतदनुवादरूपविशेष-स्मरणादित्युक्तमिति चेदित्यनेनोपादानपञ्चम्या विशेषस्मरणप्राप्तत्वस्यैवोक्तत्वेन तस्यैवायमाक्षेप इति लब्धम् । **किमिदं विशेषस्मरणमिति** मूलानुसारि विशेषस्मरणमित्येव पाठेऽपि पञ्चम्याः विशेषेण स्मरणं पराभिप्रेतम् । किमित्येव स्पष्टतया पञ्चमीति स्मर्यमाणत्वमेव लब्धमिति तस्य प्रत्यक्षविधिप्राप्तत्वरूपधर्मसामानाधिकरण्यो-पपत्तिः । एतेन स्मरणत्वप्राप्तत्वयोः स्मरणपञ्चमीगतयोः समानाधिकरणतया निर्देशायोग इति परास्तम् ।

**प्रत्यक्षविधानावश्यंभावेनेति** । व्याख्यातृभिः व्याकरणान्तरस्थविधिं दृष्ट्वैव ज्ञापनादिव्याख्यानादिति भावः । **प्रत्यक्षविधीति** । व्याकरणान्तरस्थव्याख्यातृप्रत्यक्षविधीत्यर्थः । एतेन पुरुषान्तरीयकालान्तरीय-प्रत्यक्षविधित्वस्य अप्रयोजकतया इदानींतनपुरुषप्रत्यक्षत्वमेव वाच्यम् । तच्च बाधितमिति शङ्का निरस्ता भवति । परेण हि प्रत्यक्षविधिप्राप्तत्वप्रयुक्तमाधिक्यमुपादानपञ्चम्या उक्तम् । तन्निरासस्य निमित्तपञ्चम्या अपि यत्किञ्चित्प्रत्यक्षविधिप्राप्तत्वमात्रेणैव सिद्धेदानींतनप्रत्यक्षत्वस्याप्रयोजकतया तद्विधौ तदभावेऽपि दोषाभावात् । पाणिनिसूत्रादिष्वपि अस्मदादिप्रत्यक्षप्रवृत्तिव्याख्यातृपरिग्रहानुसारेणैव । तथा च व्याख्यातृभिः प्रत्यक्षतो-ऽगतविधिं मूलीकृत्य ज्ञापनाद्याश्रयणे सति कुतस्तत्पक्षे अनाश्वासः । न हि लोके प्रत्यक्षत्वाप्रत्यक्षत्वाभ्यां वैषम्यप्रतिपादनस्थलेषु पुरुषान्तरप्रत्यक्षं नाद्रीयते । तथा सति स्वप्रत्यक्षाविषयीकृतार्थानां स्वापेक्षया अभावप्रसङ्गात् । किन्तु पुरुषेषु विप्रलम्भादिसम्भावनया विवादविषये तदादरेण निर्णयो न क्रियते । न च व्याख्यातृषु तदत्रास्तीति परस्यापि सम्मतम् । इदानींतनपुरुषप्रत्यक्षाभावमाश्रित्यैव विध्योः प्रत्यक्षत्वा-प्रत्यक्षत्ववैषम्यस्य परेणोक्ततया तं प्रतीदानींतनपुरुषप्रत्यक्षत्ववचनस्यायोगाच्च । एतेनैतदपि परिहृतम् । ज्ञापनमूलभूतश्रुतेः कस्यचित्प्रत्यक्षाङ्गीकारेण सामान्य(म्य?)प्रतिपादने सर्ववेष्टनस्मृतिमूलभूताया श्रुतेरपि कस्यचित्प्रत्यक्षत्वसम्भवेनौदुम्बरीं स्पृष्ट्वोद्गायेदिति श्रुतिसाम्यं स्यादिति । तथा हि साम्यापादनं हि भाष्यरीत्या वा वार्तिकरीत्या वा । नाद्यः, भाष्यकारेण सर्ववेष्टनस्मृतेः अशक्यानुष्ठानार्थत्वादिना भ्रान्त्यादिमूलकत्वमेव आश्रित्य सर्वथा अप्रामाण्यस्यैवाङ्गीकारेण मूलवेदानुमानप्रसङ्गाभावेन अनुमितवेदस्य कस्यचित्प्रत्यक्षत्वा-ङ्गीकारेण स्पर्शनश्रुतिसाम्यापादनायोगात् । नान्त्यः, विरोधे त्वनपेक्ष्यं स्यादसति ह्यनुमानम् । हेतुदर्शना-च्चेत्येतदधिकरणद्वयभाष्यप्रत्याचक्षाणेन तन्त्रवार्तिककृता तु शाखान्तरगतानां पुरुषान्तरप्रत्यक्षाणां वेदवाक्यानां स्मृतिमूलतया सर्ववेष्टनस्मृतेरपि शाखान्तरे पुरुषान्तरेण प्रत्यक्षस्यैवाङ्गीकारात् पुरुषान्तरप्रत्यक्षस्वप्रत्यक्षयो-रविशेषस्याप्युक्तत्वेन साम्यापादने इष्टोपपत्तेः । तेन हि भाष्योक्तमधिकरणद्वयशरीरमिदं च भाष्यकारेण प्रदर्शयता तुल्यकारणत्वात् पूर्वत्रापि प्रदर्शितमेवेति योजयितव्यमित्यन्तग्रन्थेन प्रदर्श्योपपाद्य तद्दूषणाय प्रवृत्तेन एता (?)त्विहाधिकरणद्वयेऽपि वक्तव्यम् ।





स्मृतीनां श्रुतिमूलत्वे दृढे पूर्वनिरूपिते ।
विरोधे सत्यपि ज्ञातुं शक्यं मूलान्तरं कथम् ॥

शाखान्तरविप्रकीर्णानि हि पुरुषान्तरप्रत्यक्षाण्येव वेदवाक्यानि पुरुषधर्मानुष्ठानक्रमेण अपठितानीत्यादीनां स्मृतीनां शाखान्तरे पुरुषान्तरप्रत्यक्षश्रुतिमूलकत्वादि व्युत्पाद्य सर्वेष्टनस्मृतिमूलभूतश्रुतेरपि पुरुषान्तरप्रत्यक्षत्वादिकमभिधाय औदुम्बरीप्रकरणे च शाट्यायनिनां तामूर्ध्वदशेनेत्यादि जैमिनिवाक्यमुदाहृत्य तत्प्रसङ्गेनौदुम्बरीवेष्टनवाक्यस्यापि प्रकाशश्रुतिमूलत्वमेव व्याख्यातमिति प्रकृतोपयोगश्चोपपादितः । तथा श्रुतिस्मृत्योर्विरोधपरिहारश्च 'विकल्प एव हि न्यायस्तुल्यकक्ष्यप्रमाणकः । विरुद्धत्वेन बाधः स्यान्न चेहास्ति विरुद्धता । न हि वेष्टनमात्रं नः स्पर्शश्रुत्या विरुध्यते । यदि द्वित्राङ्गुलं मध्ये विमुच्योत्तरभागतः । वेष्टयेतोदुम्बरी तत्र किन्नाम न कृतं भवेदि'त्यादिना कृतः । राणकेऽपि एतच्छान्दोग्यानुपदे जैमिनिकृते सूत्रग्रन्थे जैमिनिनैवोदुम्बरीप्रकरणे चेत्यादिना दर्शयतीत्यन्तेन स्वग्रन्थेन शाट्यायनिब्राह्मणगतश्रुतिमूलत्वेनान्वाख्यातमित्यर्थः इत्यादिना वार्तिकव्याख्यानकरणेनैष एवार्थ उक्तः । तथा वार्तिकार्थपरशास्त्रदीपिकायामपि भवेदयं स्मृतेर्बाध इत्यादिनोक्तार्थ एवोक्तः । तस्मात्प्रदर्शनश्रुतिवत्सर्ववेष्टनश्रुतिमूलश्रुतेरपि तामूर्ध्वदशेन वाससा वेष्टयन्तीत्येवंरूपायाः कस्यचित्प्रत्यक्षत्वस्य तत एव स्पर्शश्रुतिसाम्यस्यापि वार्तिकोक्तरीत्या सिद्धत्वात् तदापादानायोग इत्यलम् । एवं विशेषणस्मरणं नाम प्रत्यक्षविधिप्राप्तत्वमित्याश्रयणेन परोक्तं निमित्तपञ्चमीत्वासम्भवं निराकृत्य सामान्यप्रतिद्वन्द्वविशेषविधिप्राप्तत्वं पञ्चम्या विशेषस्मरणमित्याश्रित्य अपादानसामान्यपञ्चमीत्वासम्भवमपि परोक्तं निराकरोति **नापीति** । अयमर्थः । यदि उपादानमपादानविशेष इति विशेषमाश्रित्य अपादानसामान्यविहितापि पञ्चमी नापादानसामान्य एव पर्यवस्यति किन्तु विशेष एवेत्यङ्गीक्रियते तर्हि अपादानसामान्ये विहिता पञ्चमी सामान्ये पर्यवस्यतु उपादानाख्यविशेष एवेत्येतत्कुतः । अवधेरपि तद्विशेषत्वेन तमादायापि पर्यवसानोपपत्तेः । नियामकान्तरस्य चाभावादिति अङ्गीकृत्य सामान्यविशेषभावमुपादानपञ्चमीनिर्णयायोग उक्तः । वस्तुतस्तु सामान्यविशेषभाव एव नास्तीति नोपादानपञ्चम्या विशेषे पर्यवसानमित्याह **उपादानापादानेति** । **उक्तदोषेति** । अयमर्थः । विशेषस्मरणत्वं न प्रत्यक्षविधिप्राप्तत्वं न वापादानविशेषत्वं येनोक्तदोषः स्यादपि तु धातुविशेषग्रहणत्वमेव । न चैवं सति कश्चिद्दोषोऽस्ति । ध्रुवमपाय इत्यस्यापादानविशेषपरत्वेऽपि धातुविशेषग्रहणवत्वाभावेन धातुविशेषग्रहणवज्जनिकर्तुरिति प्राप्तापादाने पर्यवसितपञ्चम्या विशेषस्मरणोपपत्तावपि अवधौ पर्यवस्यत् पञ्चम्या न विशेषस्मरणमिति नात्रापादनपञ्चम्या अवधौ पर्यवसनमिति ।

**इगिति** । इक् श्तिपौ धातुनिर्देश इत्यनेनेत्यर्थः । **उपधालोपेति** । गम्यादीनां किति परतः उपधालोपविधायकेनात्रापि कितः परतया लोपप्रसङ्गादित्यर्थः । एतच्च दूषणं मीमांसावार्तिकोक्तम् । तत्परिहारायागन्तुकेकारमात्राश्रयणेन सामञ्जस्यमिति वैय्याकरणहृदयं कल्पयित्वा धातुग्रहणमेवाश्रित्य समाधिमाह **तथापीति** । यद्यपि वैय्याकरणैर्जन्यर्थपर्यन्तं व्याख्यानं कृतमस्ति तथापि जनिधात्विति विशेषग्रहणेन तदनुसारेण तावदेव





व्याख्यातमिति ज्ञेयम् । इन्धिभवतीभ्यां चेत्यत्र हीन्धीत्यागन्तुकेकारेण निर्देश इत्यादिकं जयेर्जयाभिभवयो-रित्येतन्मायावादखण्डनटीकोदाहृतवाक्यव्याख्यानावसरे प्रतिपादितं गुरुपादैः । पञ्चम्या इत्युभयत्रापि पञ्चमीप्रापकापादानसंज्ञाविधायकसूत्रद्वयं विवक्षितम् । तत्सूत्रद्वारा पञ्चम्योर्धातुविशेषग्रहणतदभावाभिप्रायात् । पञ्चम्या विशेषत्वाद्युक्तिवदस्यापि तात्पर्येणैव व्याख्येयत्वाच्च । एतेन पञ्चमीविधायकसूत्रयोर्धातुविशेषग्रहण-तदभावत्वेऽपि न पञ्चम्योः क्रमेण तत्सम्भव इति परास्तम् । न च धातुविशेषग्रहणवत्त्वेनोपादानपञ्चम्याः प्रबलत्वे सर्वत्रोपादानपञ्चम्या एवापत्त्या अवधिपञ्चमी नाम न स्यादिति वाच्यम् । न स्मरति भवानुक्तार्थस्य । उक्तं हि अपवादविषयातिरिक्तस्थलेऽपवाद्यस्य निरङ्कुशप्रवृत्तिः अन्यथा गुणवृद्ध्यादिस्थलेऽप्युक्तातिप्रसङ्ग इति । वक्ष्यति च जायन्त इति जनिधातुश्रवणेनेति । तथा च यत्र बाधकत्वाभिमतविषयतया तत्रैव बाध्यस्याप्रवृत्तिः तदितरत्र तु बाध्यस्यैवेति जनिधातुयोगाभावस्थले वृक्षात्पर्णमित्यादौ अवधिपञ्चमीं निरपवादां को निवारयितेति ज्ञेयम् । **जनिधातुश्रवणेनेति** । तच्छ्रवणेन भूताख्यजायमानकार्यकर्तृसमर्पकयच्छब्दे धातुविशेषग्रहणं तज्जनिकर्तुरिति सूत्रेणापादानसंज्ञोत्तरमपादानपञ्चमीप्राप्तौ तत्पञ्चम्याश्चोपादानपर्यवसानेनोपादानपञ्चम्योपादानत्व-सिद्ध्यर्थं यतो वा इमानीत्यस्योदाहरणत्वसम्भवेऽपीत्यर्थः । **जनिधात्वश्रवणेनेति** । अश्रवणेनाकाशस्य जायमानकार्यरूपत्वाप्रतीत्या जायमानकार्यकर्तृसमर्पकता आत्मपदस्य नास्तीति उक्तविशेषवज्जनिकर्तुरिति सूत्रेणात्मशब्दोपादानसंज्ञाया अप्रवृत्त्या अपादानपञ्चम्यां उक्तविशेषवत्सूत्रप्रापितोपादाने पर्यवसानायोगेनोपा-दानपञ्चमीत्वाभावात् तयोपादानत्वनिश्चयायोग इति पञ्चम्योपादानत्वनिश्चयस्थलत्वेनात्मन आकाश इत्य-स्यानुदाहरणीयत्वं स्यादित्यर्थः । यद्यपि जन्यर्थग्रहणे तस्याप्युदाहरणीयत्वं युक्तमेवेत्याभाति तथापि जन्यर्थ-ग्रहणपक्षमाशङ्क्य तदस्वरसादेवोत्तरग्रन्थावतारस्य टीकाकृतैव क्रियमाणत्वान्नास्माभिस्तत्र प्रयत्नः कर्तव्यः । करणेऽपि टीकोच्छिष्टत्वमेव स्यादिति ज्ञेयम् । मञ्जर्यां जनिशब्दोऽयमित्यादिनोक्तं प्रतिपाद्य रमाकृतोणादि-सूत्रमप्यधिकमुक्तं, तदनुसारेणार्थपरतामुपपादयति **किञ्च जननमिति** ।

**विशेषस्मरणत्वस्येति** । धातुग्रहणेन विशेषवज्जनिकर्तुरिति सूत्रप्रापितापादानत्वनिमित्तकापादानपञ्चम्या उपादानपञ्चमीत्वमिति उपादानपञ्चम्या विशेषसूत्रद्वारा विशेषस्मर्यमाणत्वस्येत्यर्थः । जनिकर्तुरिति सूत्रस्य विशेषस्मरणत्वार्थतया यथाश्रुतं व्याख्यानं तु प्राचीनबहुस्थलीयपञ्चम्या विशेषस्मरणत्वस्योक्तिविरुद्धमिति ज्ञेयम् । **पञ्चम्यास्तसिलितीति** । एतच्च पञ्चम्यास्तसिलिति सूत्रस्य प्रतियोगे पञ्चम्यास्तसिरिति सूत्रस्य च सङ्ग्रहरूपम् । तसिलो लित्वस्य स्वरार्थत्वेन तसावेव पर्यवसानात् प्रतियोग इत्यादि सूत्रविहिततसेरपि तसेश्चेति सूत्रेण लित्वार्थतसिलादेशविधानाच्च । ततश्च पञ्चम्यन्तात् तसिविधायकेनोक्तसूत्रद्वयेनेत्यर्थः पर्यवसितः । **पञ्चम्या एवेति** । पञ्चम्यन्तादेवेत्यर्थः । एवमुत्तरत्रापि । **आद्यादिभ्य इति** । तस्यादित उदात्तधर्महस्वमित्येतत्सूत्रीयादित इत्यत्रादौ इत्यादित इति सप्तम्यन्तात्तसेर्दृष्टतया तज्ज्ञापकबलप्रवृत्ताद्यादिभ्य उपसङ्ख्यानमिति प्रतियोगे पञ्चम्या-स्तसिरित्येतत्सूत्रीयवार्तिकोक्तोपसङ्ख्यानेनेत्यर्थः । अत एवापादाने चाहीयरुहोरिति सूत्रकाशिकायां मन्त्रो हीनः स्वरत इत्यत्र पञ्चम्यन्तात्तसेरयोग इत्याशङ्क्य नैषा पञ्चमी किन्तु स्वरेणेति तृतीयेत्युक्तस्योपादानमाद्यादिभ्य





उपसङ्ख्यानाश्रयणेन मञ्जर्यां कृतम् । एवमन्यत्रापीति ज्ञेयम् । एतच्च तसिप्रत्यये आदिमध्यपार्श्वपृष्ठादिभ्य उपसङ्ख्यानमित्येतद्वार्तिकस्य सङ्ग्रहरूपमित्यानन्दमयनयादौ तत्रतत्रोक्तं वक्ष्यते च । भवनं भूः तस्य भुवः पूर्वसूत्रात्कर्तुरित्यनुवर्तते । भूकर्तुः यः प्रभवः प्रभवत्यस्मादिति प्रभवः सोपादानसंज्ञ इति भूकर्तुरुत्पत्त्यवधितार्थत्वस्यैव प्राप्त्याभिव्यक्त्यवधितार्थत्वस्य ज्ञापकाभावादिति भावेनाह **प्रभव इत्येवोक्तत्वादिति** । **वृत्तिकारीयमिति** । काशिकायामुपलक्ष्यत इति व्याख्यानात् मूलं तदर्थानुवाद इति भावः । प्रक्रियायां तु दृश्यत इत्येवोक्तमिति ज्ञेयम् । अत एवाकाशाद्वायुरित्याद्युपादानपञ्चमीसाहचर्यादात्मन इत्याद्युपादानपञ्चमीति निरस्तन्यायामृतानुसारेण शङ्कानिरासार्थत्वेनास्तां विस्तर इत्येतद्योजयति **ननु चाकाशादित्यादिना** । वायुरितीत्यत्रोपलक्षणया वाक्यान्तरमपि ग्राह्यम् । इत्यादीति न्यायामृतानुसारात् । अपादानत्वपञ्चमीवाच्यत्वयोरिति अपादानत्वस्यावधिरूपत्वमुक्तं स्मारयितुम् **उक्तरीत्येति** । यद्वापादानत्वमवधित्वरूपमेव विवक्षितम् । **उक्तरीत्येति** शृङ्गादित्यादावुपपादितप्रकारसूचनम् । पञ्चमीवाच्यत्वं चावध्यर्थकापादानपञ्चम्यन्तवाच्यत्वमित्यर्थः । अपादानार्थकपञ्चम्या अपादानत्वविशिष्टार्थप्रतिपादनादिति भावः । **सिद्धतयेति** । सम्पूर्णपरिणामिक्षीरादिस्थले क्षीराद्दधि सम्भूतमित्यादि व्यवहाराभावः । किन्तु क्षीरमेव दधि जातमित्येव । प्रकृते च सम्भूत इत्युक्तेर्निमित्तांश एव पञ्चमीवाच्यत्वमित्यर्थः ।

**स०व्र०— भुवः प्रभव इतीति** । भवनं भूः । भूकर्तुः प्रभवोऽपादानं स्यादिति सूत्रार्थः । **विशेषविहितेति** । सम्भूत इति भूधातुग्रहणादिति भावः ।

**स०ना०— न ह्युपादानतैवात्र बाह्यावयवगौरवादिति** मूलसुधायां **किमिदं विशेषस्मरणमिति** । 'यतो वा इमानि भूतानि जायन्त' इत्यत्र इदं विशेषस्मरणम् । जनिकर्तुः प्रकृतिरिति सूत्रं पञ्चमीविधायकमिति किं कुत इत्यर्थः । ध्रुवमपाये अपादानमित्यनेनापि पञ्चमीविधानसम्भवादनिर्णय इति भावः । नियामकं शङ्कते **जनिधातुग्रहणेनेति** । 'यतो वा इमानि भूतानि जायन्त' इत्यत्र जायन्त इति जनिधातुग्रहणात् जनिकर्तुः प्रकृतिरित्यनेनैवात्र पञ्चमीविधानमिति निश्चीयत इति भावः । **आत्मन आकाशः सम्भूत इत्यादीनामिति** । एवं तर्हि परेण ब्रह्मण उपादानत्वे यतो वेति वाक्यमेवोदाहर्तव्यम् । अत्रत्यपञ्चम्याः उपादानपञ्चमीत्वे निर्णायकसद्भावात्, न त्वात्मन आकाश इति वाक्यमुदाहर्तव्यम् । आत्मन इति पञ्चम्याः उपादानपञ्चमीत्वनिर्णायकस्य जनिधातुग्रहणस्याभावात् इति भावः ।

**विट्ठल०— पञ्चमीबलादिति** । यतो वेत्यादि पञ्चमीबलात् ब्रह्मण उपादानत्वनिश्चय इति यदुक्तं तथेत्यर्थः । **अनेकार्थत्वादिति** । अपादानेऽपि पञ्चम्याः सम्भवादिति भावः । **तर्ह्यात्मन इति** । तत्र भूधातोरेव विद्यमानत्वेन जनिधातोरभावादिति भावः । किञ्च यतो वेत्यत्र यत इत्यस्य पञ्चम्यन्तत्तानिश्चयोऽपि नोपपद्यत इत्याह **कुतश्चेति** । 'पञ्चम्यां तसिरि'ति तसेः पञ्चम्यां विधानाद्यत इत्यस्यापि तसिल्प्रत्ययान्तत्वात्पञ्चमीति निश्चीयत इत्यत आह **तसेरिति** । 'आद्यादिभ्य उपसङ्ख्यानमि'ति वार्तिके आद्यादिशब्देभ्यः सर्वविभक्त्यर्थे





तसिप्रत्ययस्य विधानेन यत इत्यादेस्तसिल्प्रत्ययान्तत्वेन कर्तादिकारकान्तरत्वोपपत्त्या यतः येन कर्ता इमानीत्याद्यर्थसम्भवेन पञ्चमीनिश्चयासम्भवादिति भावः । नन्वात्मन आकाशस्सम्भूत इत्यत्राकाशाद्वायुरित्यादि प्रकरणबलादात्मन इत्यस्य पञ्चमीत्वात् तत्समाख्याया यतो वेत्यत्रापि पञ्चमीति निश्चीयत इति शङ्कते **आत्मन इति** । आत्मन इति पञ्चम्याः भुवः प्रभव इति विशेषसूत्रविहिताभिव्यक्त्यवधित्वरूपापादानार्थत्वाद्यत इति पञ्चम्याश्चापादानार्थत्वापत्त्या नोपादानार्थत्वनिश्चय इति भावेन समाधत्ते **तस्याः पञ्चम्या इति** । **भुव इति** । भवनं भूः यस्मिन्व्यापारे प्रथमं जनदृष्टिविषयो भवति तादृशव्यापारोऽत्र भवनशब्देनोच्यते । कर्तुरित्यनुवर्तते । तथा च भुवः भवनस्य कर्तुः प्रभवः अवधिभूतमपादानसंज्ञं भवतीति सूत्रार्थः । भूधातुग्रहणाद्विशेषविवक्षितत्वं ध्येयम् । नन्वात्मन आकाशस्सम्भूत इत्यत्र सम्भूतोऽभिव्यक्त इति व्याख्यानं युक्तम् । तथात्वे आकाशाद्वायुरित्यत्रापि तदर्थत्वोपपत्तेरिति चेन्न । तत्र जननस्योभयसम्मतत्वेन जननार्थत्वेऽप्याकाशस्य नित्यत्वप्रतिपादकप्रमाणेनाभिव्यक्त्यर्थत्वोपपत्तेः । अपि च यत इति पञ्चम्या उपादानार्थत्वे ब्रह्मजगतोरभेदापत्त्या भेदप्रतिपादकागमाप्रामाण्यादि स्यादित्याद्यभिप्रेत्याह **आस्तां विस्तर इति** ।

**चषकः**— वृत्तिकारादिदिशमनुरुन्धानोऽपि समाधत्ते **अस्तु वेति** । **अनेकार्थत्वादिति** । विभाषा-गुणोऽस्त्रियामित्यादिभिर्निमित्ताद्यर्थान्तरेष्वपि जाड्याद् बद्धः धूमाद्वह्निमानित्यादौ तस्या अनुशिष्टत्वादिति भावः । **विशेषस्मरणादिति** । अवधित्वार्थकपञ्चमविधायके 'ध्रुवमपाय' इत्यादौ धातुविशेषग्रहणाभावेनोपादानत्वार्थक-तद्विधायके तद्विशेषोपादानादुपादानत्वार्थिकैवाध्यवस्यते नावधित्वार्थिकेति भावः । **तर्हीति** । जनिकर्तुः प्रकृतिरित्यस्य ध्रुवमपाय इत्यस्माद्विशेषस्मरणत्वे इत्यर्थः । **अनुदाहरणीयत्वमिति** । 'यतो वा' इति वाक्ये जनेः समभिव्याहारेण तादृशवाक्यस्योदाहार्यतायामपि आत्मन इति वाक्ये भवतेरेव समभिव्याहारेण जनेस्तद-भावात् तस्यानुदाहार्यता स्यादित्यर्थः । **कुतश्चेति** । येन तद्बलादुपादानसिद्धिरिति पूरणीयम् । उत्सृष्टानुबन्धयो-स्तसितसिलोः सारूप्यादिति भावः । **तसेरिति** । आद्यादिभ्य उपसङ्ख्या तस्य तसेः सर्वविभक्तिस्थानिकतया पञ्चमीत्वानवधारकत्वादिति भावः । आत्मनः 'यतो वे'ति सृष्टिप्रतिपादकवाक्ययोरर्थैक्यात् तद्घटकयोः यत आत्मन इति खण्डयोस्तदवश्यम्भावेन यत इत्यत्र पञ्चमीतरविभक्तिस्थानिकतसेः कल्पनाऽयोगादित्यर्थः । उदाहृतवाक्ययोरैकार्थ्योपगमे आत्मपदसमभिव्याहृतपञ्चम्याः भूधातुसमभिव्याहृततया अभिव्यक्त्यवधित्वार्थकत्वेन यत इत्यत्रापि तादृशार्थकत्वापत्त्या वोपादानत्वसिद्धिरिति भावः । आकाशाद्वायुरित्युपादानपञ्चमीसाहचर्यादात्मन इति पञ्चम्यप्युपादानपञ्चम्येवेति नास्या अभिव्यक्त्यवधित्वार्थकत्वमिति शङ्का आकाशाद्वायुरित्यत्रापि निमित्त-त्वार्थकत्वोपगत्या निरसनीया । पुत्रात्प्रमोदो जायत इत्यादीन्यपि वामनः काशिकायामुदाजहारेति तद्व्याख्या-रूपन्यासे प्रकृतिपदं हेतुमात्रपरमित्याशिश्रिये न्यासकार इति जनिकर्तुरित्यनेनापि नोपादान एवापादानसंज्ञा सेत्स्यतीत्याशयेनाह **आस्तां विस्तर इति** ।

**॥ इति पञ्चम्याः उपादानत्वार्थकत्वाभावः ॥**

* * *





॥ तत्रान्ते प्रकारान्तरेण व्याख्यानम् ॥

९५ **सु०**— अथवा यदुक्तं न ब्रह्मविकारो विश्वं ततो भेदेनोपलम्भादिति, तदसत्, शरादिषु व्यभिचारात्, शरादयो हि शृङ्गाद्युपादानाः ततो भेदेनोपलभ्यन्त; इत्यतो गूढाभिसन्धिराह **शृङ्गादिति ।**

एवमाद्येषु स्थलेषु शरादीन्प्रति शृङ्गादीनाम(प्य)पायावधित्वलक्षणमपादानत्वमेवेष्यते, न पुनरुपादानत्वम्, अतो विपक्षत्वाभावाद्भेदेनोपलम्भो न तत्र साध्यं व्यभिचरतीति ।

ननु कथमुच्यते शृङ्गादीनां शरादीन्प्रति नोपादानत्वमिति, तथा सत्युपादानान्तरानुपलम्भाच्छरादीनां निरुपादानोत्पत्तिः प्रसज्येतेत्यतोऽभिसन्धिमुद्घाटयति **उपादानेति ।**

शृङ्गादेरुक्तरूपापादानत्वेऽपि । न च शरादीनां निरुपादानत्वोक्तिप्रसङ्गः, कतिपयानां शृङ्गाद्यवयवानां शराद्युपादानत्वाभ्युपगमात् । न चैवमनैकान्त्यतादवस्थ्यम् । यद्यप्यत्र शृङ्गादौ शराद्युपादानैकदेशत्वं प्र(ती)दृश्यते, तथाऽप्यत्र शृङ्गादौ यस्यैकदेशस्योक्तस्य रूपापादानता स एव ब्रह्मणो दृष्टान्तो भवेत्, तत एव शरादीनां भेदोपलम्भात् । न तूपादानभागः, ततस्तदभावात् ।

एतदुक्तं भवति । शृङ्गादेरवयवा हि केचिच्छरादीनामुपादानभूताः, केचिन्निमित्तभूताः । तत्र ये निमित्तभूतास्तेषु हेतुवृत्तावपि नानैकान्त्यम्, तेषां सपक्षप्रविष्टत्वात् । ये तूपादानभूतास्तेषां विपक्षप्रवेशोऽपि न तत्र हेतुवृत्तिरिति कुतोऽनैकान्त्यमिति ॥

यस्तु वैयात्यान्मन्यते, 'नात्रापादानताऽस्ति । किन्तूपादानत्वमेव केवलम्, तथा चानैकान्तिकत्वमि'ति, स प्रष्टव्यः, किमत्राविनष्ट एव शृङ्गावयव्युपादानमित्यभिप्रायः, किंवा शृङ्गेऽविनष्टे तदवयवाः सर्वेऽपीति, उत नष्टे शृङ्गे तदवयवाः सर्वेऽपीति ।

नाद्य इत्याह **न हीति । अत्र** शृङ्गे । तथात्वे सुवर्णवच्छरे शृङ्गस्यापि प्रतीतिप्रसङ्गादिति **हि**शब्दार्थः ।

न द्वितीय इत्याह **न हीति ।** अविनष्टशृङ्गेषु तदवयवेषु सर्वेषु शराद्युपादानतैवेति न युक्तम्, तथा सति शृङ्गशरयोः समानदेशताप्रसङ्गादिति **हि**शब्देन सूचयति ।





**न तृतीय इत्याह न हीति । अत्र सर्वेष्वपि शृङ्गावयवेषु शृङ्गनाशोत्तरं शराद्युपादानतैवेति न युज्यते, अतो नानैकान्त्यमिति हिशब्दः । कुतो न युज्यत इत्यत आह बाह्येति । कार्याद्बाह्यानामपरिणतानामवयवानामुपलम्भात्, अपरिणतस्याप्युपादानत्वेऽतिप्रसङ्गात् ।**

**ननु शृङ्गं चेन्नष्टं कथं तर्हि शरोत्पत्त्यनन्तरमपि शृङ्गप्रत्ययप्रयोगावित्यतो गौरवादित्युक्तम् । समाधानं पूर्ववत् ।**

**परि०**— पूर्वं जगतो ब्रह्मोपादानकत्वनिरासकानुमानानां बाधनिरासपरत्वेन व्याख्यातमेव सार्धश्लोकद्वयं 'न चान्यस्यान्यरूपत्वं' इत्येतन्मूलोक्तानुमानस्य व्यभिचारनिरासकतयाऽपि व्याचष्टे **अथवेति** । **गूढाभिसन्धिरिति** । यस्य भेदेनोपलम्भः न तस्योपादानत्वं किन्त्वन्यस्येत्यभिप्रायमप्रकाश्येत्यर्थः । **इत्यभिसन्धिमिति** । इत्याशङ्कायामभिसन्धिमित्यर्थः । क्वचिदित्यतोऽभिसन्धिमिति पाठः । मूलं योजयितुं परिष्करोति **शृङ्गादेरिति** । योजयति **यद्यप्यत्रेत्यादिना** । किंवा शृङ्गे विनष्ट इत्यत्र अविनष्ट इति पदच्छेदः । अविनष्टशृङ्गेष्विति बहुव्रीहिः । **समानदेशतेति** । यावद्देशस्थता शृङ्गस्य तावद्देशस्थता शरस्य अपि स्यादित्यर्थः । **समाधानं पूर्ववदिति** । शृङ्गान्तरोत्पत्त्या शृङ्गबुद्धिमात्रोत्पत्त्या वा शृङ्गपदप्रयोग इति ध्येयमित्यर्थः ।

**वं०प०**— अविनष्टशृङ्गेष्विति बहुव्रीहिः । **समानदेशता** एकावयवनिष्ठत्वमित्यर्थः । तथा चैकस्मिन्नुपादाने उपादेयद्वयासमावेशादिति भावः । **अत्रेति** । तृतीयपक्षे । सर्वशब्दोपरि भारो द्रष्टव्यः । **अतिप्रसङ्गः** कुलालस्याप्युपादानत्वरूपः । **पूर्ववत्** शृङ्गान्तरोत्पत्त्या वा शृङ्गबुद्धिमात्रोत्पत्त्या वेत्यर्थः ।

**आनन्दः**— तसिलन्तत्वात्पञ्चमीत्यवधिविशेषेति । विशेषविहिताया अभिव्यक्त्यवधिता तदर्थत्वादित्यर्थः । एवं पञ्चमी श्रुतिबलादुपादानत्वं वक्तुं न शक्यत इत्यस्योपपादकत्वेन शृङ्गादिति ग्रन्थं व्याख्याय अधुना अनुमानोपपादकतया व्याख्यातुमाह **अथवेति** । अत्र यदुपादानं तद्भेदेन दृश्यते यच्च भेदेन न दृश्यते न तदुपादानमिति वक्तव्ये अपादानत्वमिष्यत इति वचनमयुक्तमित्यतो गूढाभिसन्धिरित्युक्तं **ततस्तदभावादिति** । उपादानभागाच्छरीरादीनां भेदाभावादित्यर्थः । नन्वेवमपि कथमनैकान्त्यपरिहार इत्यत आह **एतदुक्तमिति** । **समाधानं पूर्ववदिति** । शृङ्गान्तरोत्पत्त्या शृङ्गबुद्धिमात्रोत्पत्त्या वा पूर्ववत्प्रयोगप्रत्ययावित्यर्थः । अन्यथेति चेत् । तस्यानादित्वाभाव इत्यर्थः । मध्वकारणान्तरवशादवान्तरजन्मसम्भवेऽपीत्यर्थः ।

**श्रीनिधि०**— **विपक्षत्वाभावादिति** । विकारविकारिभाववत्वाभावादिति भावः । **ततस्तदभावादिति** । तत उपादानभागतः तदभावात् । भेदेनोपलम्भाभावात् । **सुवर्णवच्छर इति** । सुवर्णत्वस्य





कुण्डलादिदशायामपि अनागतादिति भावः । **समानदेशतेति** । तदवयवारब्धत्वाविशेषादिति भावः । **समाधानं पूर्ववदिति** । शृङ्गान्तरोत्पत्त्या शृङ्गबुद्धिमात्रोत्पत्त्या वेति पूर्वोक्तरीत्येत्यर्थः ।

**शे०वा०**— परोदीरितायाः पञ्चमीश्रुत्या ब्रह्मण उपादानत्वसिद्धेर्भाष्ये पृथगनिरासप्रयुक्ततन्न्यूनताशङ्कापरिहारायैव पञ्चम्यर्थतयेति शेषाद्याश्रयणेनेदं भाष्यव्याख्यानं न तु प्रकारान्तरेण प्रकृतोपयोगोऽस्य भाष्यस्य न सम्भवतीत्यभिप्रायेणेत्याशयवानध्याहारादिनैरपेक्ष्येणैवेमं ग्रन्थं व्याचक्षाणस्तर्हि शृङ्गादीनां शरादीन्प्रत्यपादानत्ववर्णनं किमर्थमित्यतो ब्रह्मणो जगदुपादानत्वाभावे प्रागुपन्यस्तानुमानस्य व्यभिचारनिवृत्त्यर्थं तदिति दर्शयन् प्रागुपन्यस्तानुमानानुवादपूर्वकं तत्र व्यभिचारशङ्कामुत्थाप्य तन्निवर्तकतयोत्तरभाष्यं योजयति **अथवेति** । ननु निरुपादानभावोत्पत्त्ययोगादुपादानान्तरस्य चाभावाच्छृङ्गादीनामेव शरादीन्प्रत्युपादानत्वस्यावश्यमङ्गीकार्यत्वान्नानुपादानत्वाङ्गीकारेण व्यभिचारपरिहारो युक्त इत्यत उक्तं **गूढाभिसन्धिरिति** । शराद्यात्मना परिणतशृङ्गैकदेशस्य शराद्युपादानत्वेऽपि तत्संसृष्टापरिणतशृङ्गभागस्योपादानत्वाभावाभिप्रायेणापादानत्वोक्तिः परिणतशृङ्गभागाच्च न शरादीनां भेदोपलम्भ इति न व्यभिचार इत्यभिसन्धेरत्र गूढत्वं द्रष्टव्यम् । ननु च शङ्कितव्यभिचारस्य शृङ्गाच्छर इति वाक्येनैव परिहृतत्वात् उत्तरवाक्यवैयर्थ्यमित्यतो योऽत्राभिसन्धिर्गूढस्तदुद्घाटनार्थत्वान्न वैयर्थ्यमिति भावेन किमभिसन्ध्युद्घाटनस्य प्रयोजनमित्यतस्तदभावे पूर्ववाक्येन शङ्कितदोषस्यानिवर्तनमेवेत्याह **नन्विति** । अत्र ततः शृङ्गस्यैवोपादानत्वे व्यभिचारस्तदवस्थ इति शङ्कावाक्यशेषः । कथमेतावताऽपि व्यभिचारपरिहार इत्यतो हेतुमति शृङ्गाद्येकदेशे साध्यसद्भावेन साध्याभाववति तदेकदेशे च हेत्वभावेनेति भावेन वाक्यतात्पर्यमाह **एतदुक्तं भवतीति** ।

ननु न हीत्यादिना सर्वस्योपादानत्वाभाववर्णनमनर्थकम् । न चानैकान्त्यपरिहारार्थं तदिति वाच्यम् । हेतुमति तदेकदेशे साध्यसद्भावव्युत्पादनेन साध्याभाववति तदेकदेशे च हेत्वभावव्युत्पादनेन तच्छङ्काया निरस्तत्वात् । न च सर्वस्योपादानत्वेन ततो भेदोपलम्भाद्व्यभिचार इति शङ्कापरिहारार्थं तदिति वाच्यम् । अपरिणतभागस्याप्युपादानतायामतिप्रसङ्गेन सर्वस्योपादानत्वमेवेति शङ्काया एवाप्रसरादित्यतः कारणोक्त्या शङ्कामुत्थाप्य तत्परिहारतया वाक्यं योजयति **यस्त्विति** । नन्वत्र कथमुत्तरवाक्येनोक्तशङ्कापरिहारः । न च अपरिणतभागानामप्युपलम्भेन न सर्वेषामप्युपादानत्वमित्यर्थप्रतिपादनात् तन्निरास इति वाच्यम् । शृङ्गनाशोत्तरकालं तदवयवानां सर्वेषां शराकारेण परिणामस्य तेन निरासस्य सिद्धावपि पूर्वपक्ष्यभिमतस्याप्रच्युतस्वरूपस्वभावस्यैव शृङ्गस्य शरोपादानत्वमित्यस्याविनष्टशृङ्गाणां सर्वेषां तदवयवानां वा तदुपादानत्वमित्यस्य तेन निरासासिद्धेरित्यतः सम्भावितपक्षविकल्पप्रदर्शनपूर्वकं तत्परिहारकतया मूलं योजयति **स प्रष्टव्य इति** । नन्वेवं योजनायां भाष्ये पक्षद्वयनिरासप्रतिज्ञामात्रस्यैव प्राप्त्या न विवक्षितार्थसिद्धिः । बाह्यावयवगौरवादित्यस्योक्तप्रतिज्ञाद्वये हेतुत्वायोगात् । हेत्वन्तरस्य च भाष्येऽसमर्पणादित्यतोऽपेक्षितहेतोः हिशब्देनैव समर्पणान्न हेत्वनुक्तिरिति भावेनाद्यप्रतिज्ञायामपेक्षितहेतुसमर्पकतया हिशब्दं व्याचष्टे **तथात्व इत्यादिना** । अप्रच्युतस्वरूपस्यैव शृङ्गस्य शरात्मना परिणामादिति भावः । अप्रच्युतस्वरूपस्यैव शृङ्गस्य शरात्मना परिणामेऽपि कुतः शरे





प्रादेर्गत्युपसर्गसंज्ञे इत्यादिकमुक्तम् । कुसुमविकासे त्वत एव भाष्ये वार्तिकमारब्धम् । गत्युपसर्गसंज्ञाः क्रियायोगे यत्क्रियायुक्ताः तं प्रति गत्युपसर्गसंज्ञे इति वचनमितीत्युपष्टम्भकतयोक्तं शेष्यामप्युपसर्गात्सुनोतीति सूत्रे यत्क्रियायुक्ताः प्रादयः तं प्रति गत्युपसर्गसंज्ञे इति वचनादित्युक्तम् । एवमन्यत्रापि । तथापि तत्सर्वमेवं-विधमुपसर्गत्वं प्रायोऽस्तीत्यभिप्रायेणैव । न तूपसर्गसङ्ग्रहणं यत्र तत्र सर्वत्रैवंरूपमेव विवक्षितमिति नियमः । व्यभिचारदर्शनात् ।

तथा हि । य उद्वतो निवतो यासि बप्सत् इत्यत्रोपसर्गाच्छन्दसि धात्वर्थे इति पञ्चमप्रथमसूत्रेण सत्साधनधात्वर्थे वर्तमानादुपसर्गाद्वतिप्रत्ययः सर्वसम्मतः । न चोदादेः क्रियायोगोऽस्ति येनोक्तरीत्या उपसर्गत्वं स्यात् । ततश्च यत्क्रिया युक्ता इत्यादेस्तत्र व्यभिचारः । तथा प्रागतोऽध्वानं प्राध्वो रथ इत्यत्रोपसर्गादध्वन इति पञ्चमगतसूत्रेण समासान्तोऽच्प्रत्यय इति स्थितिसूत्राप्युक्तानुपपत्तिरेव । तथा प्राणसम्मुखमित्यत्र उपसर्गाच्चेति सूत्रेण प्रगता नासिका अस्येति नासिकाशब्दान्तबहुव्रीहेरच्प्रत्यये नासिकाया नसादेशे उपसर्गाद्बहुलमिति सूत्रेण उपसर्गस्थान्निमित्तात्परस्य नसो नकारस्य णत्वमिति स्थितिः तत्रापि क्रियायोगाभावेन यत्क्रियायुक्ता इत्यादेः व्यभिचारः तथा प्रगता आपो अस्मिन्निति प्रापमित्यत्र ऋक्पूरब्धू इति सूत्रेण समासान्ते अकारे अप्शब्दगताकारस्य द्व्यन्तरूपसर्गेभ्योप ईदिति सूत्रेण उपसर्गात्परप्शब्दगताकारस्य ईकारे प्रेयमिति भवति । तत्रापि प्रशब्दस्य क्रियायोगाभावेन उपसर्गत्वाभावायत्तोक्तलक्षणस्य व्यभिचारः । तथा प्रकृष्टानामस्माकं इति प्रणः शूद्रः प्रणो राजा इत्यादौ काशिकोदाहृते बहुवचनस्य वस्नसाविति सूत्रेण षष्ठीबहुवचनान्तरस्यास्मच्छब्दस्य नस्भावे उपसर्गादनोत्पर इत्येवं सूत्रपाठे सत्यपीति तदर्थस्तूपसर्गात्परस्य नसो नकारस्य णत्वं भवति । अनोत्परे ओकारे परतो न भवतीति । अत एव प्रण आयुं षीत्यादौ णत्वप्राप्तावपि प्रनो मुञ्चतमित्यत्रौकारस्य परत्वा-न्नकारस्य णत्वं न जातमिति । **अयमीयेति** । एवं सति प्रणो न यवस्ये (?) अच्छेत्यादौ परत ओकार-सत्वादव्याप्तिः प्र नः पूषे इत्यादौ परत ओकाराभावादतिव्याप्तिरिति दूषणमायातीत्यतः अनोत्पर इत्येतत्पदमिति भावः । भाष्यकारोऽनोत्पर इत्येतदपनीय बहुलग्रहणं च कृत्वा उपसर्गाद्बहुलमिति सूत्रं कृतवान् । एतच्च मञ्जरीमादौ स्पष्टम् । उपसर्गस्थान्निमित्तात्परस्य नसो नकारस्य णः स्याद्बहुलमिति सूत्रार्थः । अत्रापि प्रेत्यस्य क्रियायोगाभावेन उपसर्गत्वाभावापत्त्या उक्तलक्षणस्य व्यभिचारः । एवमन्यत्रापि द्रष्टव्यम् । अत एव द्व्यन्त-रुपसर्गेभ्य इति उपसर्गाच्चेति उपसर्गादध्वन इति सूत्रे उपसर्गग्रहणप्राद्युपलक्षणं प्रशब्दस्य नासिकां प्रति उपसर्गत्वाभावादित्यादिकं काशिकायां मञ्जर्यादौ च समाहितम् । तथा यैः प्रादिभिः क्रियाशब्दयोगे सति क्रियाशब्दं प्रत्युपसर्गसंज्ञा लब्धा ते सम्प्रत्यनु उपसर्गसंज्ञा अपि गृह्यन्ते इत्युपसर्गात् सुनोतीत्यादिसूत्रे मञ्जरीकृतोक्तम् । भाष्यकारेण तु अनवकाश एवैते विधयो वचनप्रामाण्याद्भविष्यन्तीति उक्तस्थले प्राप्त-व्यभिचारस्य समाधानं कृतम् । एवं च सति प्रसज्यमानक्रियायोगानिमित्तकमेवोपसर्गत्वमिति नियमाभावा-दुपसर्गात्सुनोतीत्यादिसूत्रेषु निःसेचक इत्यादि प्रत्युदाहरणप्रदर्शनेनोपसर्गत्वावधारणवदुपसर्गस्यायताविति सूत्रीय-वृत्त्यादिग्रन्थेषु ............धिकरणटीकायां यदुपतीये चातोऽनुपसर्गे क इत्येतत्सूत्रविषये एवं समाहितम् ।





क्रियायोगनिमित्तकोपसर्गत्वविवक्षाऽत्रेत्यवधारणाभावाच्च कथञ्चिदपि उपसर्गत्वमभिप्रेतमित्येव वक्तुं शक्यतया निरश्विनोत्यर्थक्रियायोगेऽपि अयतिं प्रति उपसर्गत्वोपपत्त्या निलयनमित्यत्रोपसर्गस्यायताविति सूत्रेण लत्व-प्राप्तिशङ्काया उपपन्नत्वम् ।

किञ्चोपसर्गात्सुनोतीत्येतत्सूत्रकाशिकामञ्जर्यादौ अभिषावयतीति तत्प्रयोजको हेतुश्चेति प्रयोजकण्यन्ते ण्यर्थभूतप्रयुक्तिविशेषकत्वेऽभेः सुनोतिं प्रत्युपसर्गत्वाभावान्न षत्वं अभिसावयतीति भवति । यदा तु ण्यन्ते अभिषवविषया प्रयुक्तिः न तु प्रयुक्तेः प्रकृत्यर्थविशेषकाभिनायोग इति पक्षस्तदोपसर्गत्वादुपसर्गादिति सूत्रेण भवितव्यमेव षत्वेन अभिषावकीयतीत्यत्र तु यदा अभिषावकमिच्छतीत्यभेः सुनोतिना सम्बन्धो विवक्ष्यते तदा सुनोतिं प्रत्युपसर्गत्वादस्त्येव षत्वम् । यदा तु सावकमभीच्छतीति क्यजर्थेनेच्छयाऽभेर्योगः तदा सुनोतिं प्रत्युपसर्गत्वाभावेन षत्वाप्राप्तेरभिसावकीयतीति भवतीति विवेकप्रतिपादनादुपसर्गत्वस्य विवक्षाधीनत्वसिद्ध्या यत्क्रियायुक्ता इत्येतन्न सार्वत्रिकमिति सिद्ध्यति । अत एव मञ्जर्यामुक्तोदाहरणद्वयोपपादनानन्तरं किन्तु प्रकृत्यर्थेन संसृष्टस्य प्रयुक्तिमात्रस्याभिना योगः कीदृश इति चिन्त्यमिति वृत्तिग्रन्थेऽस्वारस्यं प्रतिपादितम् । भूधातुवृत्तौ काशिकायां च भाव इत्यत्र श्रिणीभुवोऽनुपसर्ग इत्याकारके भावे च घञ् । उपसृष्टा तु ऋदोरबित्यप प्रभव इतीत्याद्युक्त्वा राज्ञां प्रभाव इत्यत्र प्रकृष्टो भावः प्रभाव इति प्रादिसमासः । प्रत्ययार्थ एव प्रशब्देन विशेष्यते । न प्रकृत्यर्थ इति क्रियायोगाभावादनुपसर्गत्वाद्घञः सिद्धिरित्युक्ततया प्रतीत धात्वर्थविशेषकत्वं परित्यज्य अप्रतीतप्रत्ययार्थविशेषणत्वविवक्षेति प्राप्तिश्च । तुंजे तुंजे य उत्तर इत्येतदृक्स्थसृष्टुतिशब्द-व्युत्पादनपरवेदभाष्येऽपि सुशब्दस्य स्तुधात्वर्थेन प्रत्ययार्थकरणेन च सम्बन्ध इत्यङ्गीकारे सकृद्वा सम्बन्धः । क्रमेण वेत्यादि विकल्पनिराकरणेऽप्युक्तसम्बन्धविवक्षाया एवानुपपन्नत्वप्रतिपादनाभावाच्च निश्चितमित्यस्य क्रिया-विशेषः । तया निरश्विनोति सहितस्यायतिसम्बन्धप्राप्तेश्च । किञ्चोपसर्गाः क्रियायोग इत्येतदुदाहरणे प्रणयती-त्यत्रान्यत्रापि प्रणमतीत्यादौ प्रकर्षेण नयतीत्यादिरूपेण प्रेत्यस्य कर्षतिना योगान्नयत्यादिकं प्रत्युपसर्गत्वा-भावान्नकारस्योपसर्गादसमासेऽपीत्यनेन णत्वं न स्यात् । एवं णदधातोः प्रणदतीत्यादावपि । यदि च प्रेत्यस्यैव प्रकर्षार्थः स एव तत्र व्यवह्रीयते न तु कर्षतिना प्रस्य योगः । नयत्यादिक्रियासन्निधाने सति ससाधनक्रिया-वाचित्वस्य प्रभाव इत्यत्रेवानाश्रयणीयत्वात् इति मन्यसे तर्हि निर्वियोगात्ययादेशातिक्रमे लाभ निश्चित इति प्रसादोदाहृतश्लोकोक्तनिश्चितार्थमादाय निरित्यस्य निश्चितमिति व्याख्यानमिति प्राप्तेः न चिनोति सम्बन्धप्राप्तिरिति समम् । एवमातोऽनुपसर्गे क इत्येतत्सूत्रीयानुपसर्ग इत्येतद्व्यावर्त्य गोसन्दाय इत्यत्र समः सम्यगिति अञ्चति-योगोऽपि नास्तीति ददातिं प्रत्यनुपसर्गत्वाप्राप्तेः कप्रत्ययाप्राप्तिरपि सम्भवति । प्रगतो नायकोऽस्माद्देशादिति प्रनायको देशः निर्गताः । सेचका अस्माद्देशादिति निःसेचक इत्यादौ तु क्रियासन्निधानरहिते अस्वपद-विग्रहप्रादिसमासभूतप्राचार्य इत्यादाविव प्रादीनां गतार्थे वृत्त्या ससाधनगमिक्रियासम्बन्धः । न तु नरो निश्चितमितिवत् प्रेत्यस्य प्रगत इति व्याख्यानमित्यदोषः । अपि च प्रणिभवति प्रणिनदतीत्यादौ णिना व्यवधानात् प्रस्योपसर्गत्वप्राप्तेर्धातुयोगेऽङ्गीकार्ये उपसर्गपरत्वाभावे नणोर्णत्वाप्राप्तिः । नदेति नकारस्योक्तसूत्रेण





णत्वप्राप्तिश्च तथा चोक्तरूपानुपपत्तिः । कथञ्चिदुपपत्तिस्तु प्रकृतेऽपि तुल्या । उपसर्गात्सुनोतीत्यादि सूत्रस्थोपसर्गपदस्येवोपसर्गस्येति सूत्रगततत्पदस्थोऽपि निलयनमित्येतच्छ्रौतप्रयोगान्यथानुपपत्त्या कथञ्चिन्नेयत्वं मत्वैव तत्सूत्रेण लत्वप्राप्तिशङ्काप्रवृत्तेरिति सिद्धत्वाच्चेत्यलम् । तस्मादुपसर्गाद्धात्वर्थ इत्यादि सूत्रेष्विवोपसर्गस्येति सूत्रेऽप्युपसर्गपदस्य भाष्यादुक्तरीत्या कथञ्चिदुपसर्गपरत्वाद्वा निरुपसर्गव्याख्यानभूतनिश्चितमित्यस्य क्रियाविशेषणत्वादिति प्रकाराश्रयणाद्वा निर उपसर्गत्वसम्भवान्निलयनमित्यत्र कथमुपसर्गस्येत्यादिना परेणोक्तं दूषणमनुपपन्नतरम् । **उपसर्गस्याप्ययताविति** । अत्र सूत्रे हि द्वौ पक्षावभिमतौ । अयतावित्येतदनुवृत्तरेफविशेषणमित्येकः । तदायत्तौ परतो रेफः उपसर्गसम्बन्धी तस्येत्यर्थः । उपसर्गविशेषणमित्यपरः । तदा त्वयतौ परतो य उपसर्गस्तस्य सम्बन्धी यो रेफस्तस्येत्यर्थः । आद्ये पक्षे प्लायते पलायत इत्यत्र सवर्णदीर्घलक्षणेकादेशस्याचः परस्मिन्पूर्वविधावित्यनेन स्थानिवद्भावादयतेः उपसर्गस्य च विभागे सत्यकारेण व्यवधानप्राप्तावपि येन नाव्यवधानं तेन व्यवहितेऽपीति वचनप्रामाण्यादेकेन वर्णेन व्यवधानेऽपि लत्वं भवति । प्लायत इत्यत्र तु श्रूयमाणेनैव यकाराख्यवर्णेन व्यवधानेऽप्युक्तन्यायेन लत्वं भवति । उपसर्गविशेषणत्वपक्षे तु प्रपरोपसर्गगतरेफयोः परिगतरेफस्य च स्थानिवद्भावद्वारा शास्त्रीयं वा श्रूयमाणवर्णेन लौकिकं वा व्यवधानं न बाधमित्येषा कल्पना नाश्रयणीया । प्राद्युपसर्गस्यायतिना व्यवधानाभावात् । परं त्वेतत्पक्षे प्रत्ययते इत्यत्राप्ययति । परोपसर्गसम्बन्धिरेफसत्त्वाल्लत्वप्राप्तिः । रेफविशेषणत्वे तु सङ्घातेन व्यवधानान्न तत्प्राप्तिरिति शङ्का प्राप्नोति । तत्परिहारस्त्वेतत्पक्षावलम्बिभिः प्लत्यव्यय इति लत्वं भवत्येवेति कृतः । आद्यपक्षावलम्बिनस्तु न भवत्येव लत्वमिति मन्यते इति स्थितिः । अधिकं मञ्जर्यादौ । तत्राद्यपक्षानुसारेण णोपसर्गस्येत्यस्य तत्स्थरेफस्येत्यर्थः । द्वितीयपक्षानुसारेण तु उपसर्गस्य अयतौ पर इति यथाश्रुतमेव । लत्वाविधानादित्यत्र तु उपसर्गसम्बन्धिरेफस्येति योज्यम् । आद्ये पक्षे प्रपराद्युपसर्गस्थलवत् निरुपसर्गे वर्णान्तरेण धातुव्यवधानं शास्त्रीयं वा लौकिकं वा नास्त्येव । निरित्यस्यैव निश्चितमित्येतद्व्याख्यानमिति प्रागुपपादितत्वाच्च चिनोति नीव्यवधानादव्यवहितपरत्वं नास्तीति वदन् उमर्जीकबौद्धोऽपि परास्तः । अधिकं तद्बौद्धधिक्कारे द्रष्टव्यम् । उपसर्गस्यापीत्यपिशब्दस्य तु न केवलकृतेः कृपो रो ल इत्यनेन लत्वविधानम्, अपि तु उपसर्गस्याप्युपसर्गस्यायताविति सूत्रेण लत्वविधानमस्तीति समुच्चयोऽर्थः ।

योगविभागाश्रयणेन लत्वमिति समाधानस्य मूले प्रतिपादयिष्यमाणत्वेन रेफान्तत्वे च वक्ष्यमाणरीत्या योगविभागानर्थक्यप्रसङ्गात् तद्वारणाय रेफान्तत्वपक्षमनाश्रित्य सान्तत्वमादायैवोपसर्गस्येति सूत्रप्रवृत्त्यभावं वर्णयति **निस्दुस् इत्येतयोरिति** । वृत्ता उक्तत्वेनेत्यनन्तरं निलयनमित्यत्र च विद्यमाननिसो ऋत्वस्यैव असिद्धत्वेनेति पूरणीयम् । एवमत्र निस्दुस् इत्येतयोरिति वृत्तिवाक्योदाहरणे सविवृत्तावुक्तत्वेनेति स्पष्टमुक्तमप्यवगणश्च निस एवात्र प्रकृतत्वेन दुसो ग्रहणस्य व्यर्थत्वादिति यद्दूषणमुमर्जीकबौद्धैरुक्तं तत्किंमूलकमिति त एव जानन्तु । अधिकं तद्बौद्धधिक्कारे ज्ञेयम् । **पूर्वत्रासिद्धमिति** । त्रिपाद्यामपि पूर्वं प्रति परं शास्त्रमसिद्धमित्यपि सूत्रार्थसत्त्वात्परं रुत्वं प्रति पूर्वस्य लत्वस्यासिद्धत्वादित्यर्थः । **इष्टसिद्ध्यर्थत्वेनेति** ।





यावदिष्टसिद्ध्यर्थत्वेनेत्यर्थः । ततश्च लत्वस्येव रुत्वासिद्धत्वाभावस्यापि योगविभागादेव सिद्धिरित्याशयः । **अन्यथेति** । तत्कार्यलत्वस्य कुत्राप्यप्रवृत्तेरिति भावः । योगविभागस्येष्टसिद्ध्यर्थत्वमिति तु सहसुपेति-सूत्रीयसहेति योगो विभज्यते । योगविभागस्येष्टसिद्ध्यर्थत्वमिति तु सहसुपेति सूत्रीयसहेति योगो विभज्यते । योगविभागस्येष्टसिद्ध्यर्थत्वमिति तु सहसुपेतिसूत्रीयसहेति योगो विभज्यते । योगविभागस्येष्टसिद्ध्यर्थत्वात् कतिपयेत्यादि (?) स च छन्दस्येवेत्येतत्सिद्धान्तकौमुदीरमायां योगविभागस्येष्टसिद्ध्यर्थत्वादेवेति प्रतिपादनात् इदितो नुम्धातोरिति सूत्रीयकैय्यटादौ धातोरिति योगविभागस्योक्तरीत्यैवोपपादनाच्च सिद्धमिति ज्ञेयम् । योगविभागाश्रयणेन समाधिमाक्षिपति **नन्वित्यादिना** । निरित्ययमुपसर्गः रेफान्त एव । स्वत एव रेफान्तः । नत्वन्त्यसकारस्य रुत्वप्रयुक्तरेफान्त इत्यर्थः । अयमित्यनेन रेफान्तत्वसान्तत्वविवादविषयनिश्चयार्थकोपसर्ग-त्वाकारेण निर्देशस्य विवक्षिततत्वात् सान्ते रेफान्तत्वप्रतिज्ञाभावः रेफान्ते वा रेफान्तत्वप्रतिज्ञाभावः इति सिद्ध्या सान्त एवायमुपसर्ग इत्युत्तरग्रन्थेऽपि उक्ताकारेणैव निरित्युपसर्गस्य निर्देशप्राप्तेः रेफान्तः सान्त एवेति वा रेफान्तो रेफान्तो नेति वा उत्तरग्रन्थादप्राप्त्या तत्प्राप्त्याश्रयणेन व्याघातचोदनं उमर्जीकबौद्धस्य भ्रान्तिमूलक-मिति सुज्ञानां स्पष्टमेवेति ज्ञेयम् । अत एवैतदोशिति सूत्रस्य शान्ततया वृत्तौ पाठः । एतदोन्निति नान्ततया भाष्योपात्तः पाठः । एवं पाठभेदे सति नान्तो वाऽयं प्रत्ययः शान्तो वेति विचारावसरे नान्तत्वशान्तत्व-लक्षणरूपद्वयमपि विहाय 'एतद' इत्येतत्सूत्रविहितप्रत्ययत्वेनैतदनुवादं कृत्वा तस्य नान्तत्वादिकं ग्रन्थभेदेन विधीयत इत्यादेः सर्वसम्मतत्वात् । अनो नुडिति सूत्ररमायां नुडिति टिद्वानुगतिकिद्वाऽयं प्रत्यय इत्यादि विचारस्य अक्षण्वन्त इत्युदाहरणमाश्रित्य कृतत्वाच्च अन्यथोक्तस्थलद्वयेऽपि नान्तोऽयं शान्तो न । नान्त एव शान्तो नेत्यादिरूपेणोक्तौ विधानवैय्यर्थ्यस्य व्याघातस्य च दुष्परिहारत्वं स्यात् । अधिकमुक्तं बौद्धधिक्कारे । **तस्य चेति** । उपसर्गस्थरेफस्येत्यर्थः । **उपसर्गेति** । सूत्रप्रवृत्तिविचारः प्रागेव कृतः । **नास्तीति** । ज्ञापका-भावादिति भावः । काशिकाकृत्सम्मतिमाह **यथोक्तमिति** । अत्र यथोक्तमित्यनन्तरं वृत्तिकृतेठ्प्रकरणस्था-निरःकुष इति पाठः । **इति वक्तव्य इति** । प्रादिषु निसिति पाठात् 'निसस्तपतावनासेवन' इत्यष्टमतृतीयस्थसूत्रे निर्देशादन्तात्यन्ताध्वदूरपारसर्वानन्त्येषु ड इति तृतीयद्वितीयगतसूत्रीय निसादेश इति वार्तिकनिर्देशाच्चेति भावः ।

ज्ञापनप्रयोजनमाह **तस्य हीति** । प्रयोजनमिति सम्बन्धः । भवतीत्यतःपरमितिशब्दोऽध्याहार्यः । तेन प्रयोजनमित्यस्य सम्बन्धः । नसोऽपि कृते कृत्वे लत्वं स्यादित्यत आह **निसोहीति** । **उक्तं चेति** । निसदुस् इत्येतयोरिति प्रागुदाहृतवृत्तिव्याख्यावसर इति स्पष्टम् । रमाकृत्सम्मतिमाह **उक्तं च नव्येनापीति** । **निर्देशात्** सूत्रवार्तिकनिर्देशादित्यर्थः । तत्र निरःकुष इति सप्तमस्थं सूत्रम् । सुदुरोरधिकरण इति तु अन्तात्यन्ताध्वदूरेति सूत्रवार्तिकमुदाहृतमिति ज्ञेयम् । उपलक्षणं चैतत् । सुषामादिषु चेत्येतदष्टमतृतीयसूत्रीयकाशिकायां निरदुर्-शब्दयोश्च क्रियान्तरविषयत्वादनुपसर्गत्वे सति पाठोऽयमिति निःषेधः दुःषेध इत्युदाहरणोपपादनात् तन्मञ्जर्यामपि निरदुर इत्येतयोरित्यादेः गमिक्रियाविषयौ हि तौ । निर्गतः सेधो, निःषेध इत्यादेश्चोक्तेरित्यपि ज्ञेयम् । सान्तयोरेवेत्यादौ दुरोऽपि ग्रहणमुभयोपपादनेन स्पष्टत्वार्थम् । अत एव सान्त एवायमुपसर्ग इत्यादि वक्ष्यति





**सान्तयोरेवेति** । गणपाठे वृत्तौ च प्रादिगणोदाहरणावसरे तयोरेवोदाहरणात् । ऊह्यन्ते प्रयोगेषु श्रूयन्ते ते वाहाः न युज्यते प्रत्याहारलक्षणेन सम्बध्यन्ते ते योगाः तादृशा वाहाः योगवाहाः इत्ययोगवाहशब्दार्थो यस्मादयुक्ता इत्यादिभाष्येण सूचित इति ज्ञेयम् । साम्प्रतमेव नवीनैः रेफान्तयोरपि तत्समकक्ष्यतया पाठः क्रियत इति भावः । अत एव निरःकुष इति सूत्रीयकाशिकायां निस इति वक्तव्ये निर इति निर्देशेनेत्युक्त्या निस एव सर्वसिद्धमुपसर्गत्वं निरस्तु निर्देशज्ञापितमिति निस्निरोः साम्याभाव इति सूचनं चोपपन्नम् । इति वक्तव्य इत्येतन्मञ्जर्यां प्रादिषु निसिति पठ्यते तथा निरस्तपताविति निर्देश इति भाव इत्युक्तमेव च साधकमिह टीकायामुक्तम् । रेफान्तत्वाश्रयणेन प्रवृत्त हरदत्ताद्युक्तिस्तु भाष्यविरोधादयुक्तेति टीकाकृदेव वक्ष्यतीति ज्ञेयम् । **सौत्रनिर्देशादिति** । अभिनिसः स्तनः शब्दसंज्ञामित्यष्टमतृतीयेऽभिनिस् इत्यस्मादुत्तरस्य स्तनतेः सकारस्य मूर्धन्यादेशविधायकसूत्रनिर्देशादिति अन्तात्यन्तेतिसूत्रीयनिसोदेश इति वार्तिकनिर्देशादिति छन्दसि निष्टर्क्य देवहूयेति तृतीयप्रथमसूत्रकाशिकायां निस्पूर्वादिति निः सः सत्त्वमिति श्लोकवार्तिके चोक्तेरिति च ज्ञेयम् । **अयोगवाहानामिति** । ऊह्यन्ते प्रयोगेषु श्रूयन्ते ते वाहाः न युज्यन्ते प्रत्याहारलक्षणेन सम्बध्यन्ते अयोगाः तादृशा वाहा अयोगवाहा इत्ययोगवाहशब्दार्थो यस्मादयुक्त इत्यादिभाष्येण सूचित इति ज्ञेयम् । यद्यपि भाष्ये अथवा अविशेषेण उपदेशः कर्तव्य इत्येव प्रकरणमारब्धम् । तथापि इमे अयोगवाहा इत्यादौ प्राक् क्व पुनरेषामुपदेश इति अयोगवाहानामभूत् उपदेश इति च षष्ठ्यन्ततया प्रकृतत्वात् तदनुवृत्त्यभिप्रायेणोक्तमयोग-वाहानामविशेषेणेति प्रकरण इति । यस्मादयुक्ता अनुपदिष्टा एव वहन्ति श्रूयन्ते अतो विसर्जनीयजिह्वा-मूलीयोपध्मानीयानुसारानुनासिक्ययमा अयोगवाहा इत्यादिहयवरडिति सूत्रीयभाष्ये स्पष्टम् । निष्कृतमित्युप-लक्षणम् । निष्पीतमित्यपि ज्ञेयम् । उपसर्गाः क्रियेति सूत्रे रमायामुक्त्यनुसारेणेदम् ।

अयोगवाहानामविशेषेणोपदेशकरणप्रयोजनत्वेन उपधासंज्ञामभिधाय तत्प्रयोजनत्वेन निष्कृतमित्यादौ इदुदुपधस्य चाप्रत्ययस्येति सूत्रेण षत्वसिद्धमभिधाय नैतदस्तीत्यादिना तत्प्रयोजनप्रत्याख्यानं च कृतम् । इदुदुपधस्येति सूत्रे तावत् विसर्जनीयस्येति अनुवर्तते । तत्र इदुदुपधस्य विसर्जनीयस्य प्रत्ययभिन्नस्य षत्वमित्यर्थे किल उपधासंज्ञोपपत्त्यर्थमुपदेशो विसर्जनीयस्य सार्थकः स्यात् । न चैवं किं तर्हि सकारो विशिष्यते इकारोकारौ उपधाभूतौ यस्येति । ततश्च निसदुसिति सान्तोपसर्गाभावे तदुपधस्य सकारस्येति भाष्योक्तिरयुक्ता यस्मादिति भाष्यकारस्य सान्तौ इमौ उपसर्गौ सम्मताविति भावः । अधिकं भाष्याकारानभि-मतेश्चेत्येतट्टीकोपपादनावसरे वक्ष्यामः । **वामनोक्तेश्चेति** । निस्दुस् इत्येतयोरिति पूर्वोदाहृतवाक्यस्थ-ऌत्वाप्राप्तिरित्यस्य निरयणं दुरयणमित्यत्र ऌत्वं न भवतीति व्याकृतिपूर्वकोऽयं तदर्थानुवाद इति न दोष इति बोध्यम् । वामनो हि जयादित्यकृतकाशिकोत्तरकाशिकाकृदिति प्रसिद्धमेव । निलयनमित्यादिप्रामाणिक-प्रयोगास्तु कथञ्चिदुपपाद्या इति तस्याशय इत्यप्यनेन सूचितं भवति । उपलक्षणं चैतत् । छन्दसि निष्टर्क्यदेवहूयप्रणीयोन्नीयोच्छिष्येत्यादिसूत्रे निष्टर्क्यशब्दे सकारान्तनिसव एवाभिप्रेतत्वादित्यपि ज्ञेयम् । उक्तं च श्लोकवार्तिके 'निष्टर्क्ये व्यत्ययं विद्यान्निसः षत्वं निपातनादि'ति कृती छेदन इत्यस्मात् निस्पूर्वात् ऋदुपधाच्चेति





क्यपि प्राप्ते ण्यत् आद्यन्तविपर्ययश्च निसः षत्वं निपात्यते निष्टर्क्य चिन्वीत पशुकाम इति काशिकायां व्याख्यानाच्च अयमिति रेफान्तत्वसान्तत्वविवादविषयो निश्चयार्थ उपसर्ग इत्यर्थः । नव्योक्तं सूत्रवार्तिकनिर्देशमप्रयोजकत्वेन निराह **निर इत्यादि** । अत्र सूत्रवार्तिकनिर्देशेऽपीति पाठः । क्वचित्सौत्रादिनिर्देशेऽपीति पाठः । तत्रापिपदं वार्तिकसङ्ग्रहाय । सौत्रेत्येवपाठस्तु तदुत्तरवाक्यस्थसौत्रपदं दृष्ट्वा लेखकागतः । तद्वाक्ये निरः एकस्यैव ग्रहणात् । केचित्तु सौत्रपदं तन्त्रेणोपात्तम् । सूत्रविवक्षायां सूत्रकारीयेत्यर्थः । वार्तिकविवक्षायां, सूत्रसम्बन्धि सौत्रं वार्तिकम्, इति वार्तिकेत्यर्थः । तथा च निर्देशविशेषणद्वयानुसारेण सूत्रकारीयनिर्देशोऽपि वार्तिकनिर्देशो 'अपि चे'ति फलतीति न दोष इत्याहुः । **प्रादिष्वपाठादिति** । आधुनिकपाठस्त्वप्रयोजक इति प्रागेवोक्तम् । **भाष्यकारानभिमतेश्चेति** । भाष्ये हि प्रागुद्देश्यतया प्रकृतानयोगवाहान् सम्बन्धितयाभिप्रेत्य 'अथवा विशेषणोपदेशः कर्तव्यः । प्रयोजनविशेषमनपेक्ष्य सकलप्रयोजनोद्देशेन यत्र यत्प्रदेशे प्रयोजनसिद्धिः तत्र तत्रोपदेशः कार्य इत्यर्थ इति कैय्यटे किं प्रयोजनम् । अविशेषेण संयोगोपधासंज्ञात्वोक्त्या द्विर्वचनस्थानिवद्भावप्रतिषेधा' इत्ययोगवाहानामविशेषेणोपदेशस्य प्रयोजनानि प्रतिज्ञाय तदुपपादनावसरे 'उपधासंज्ञा च प्रयोजनम् । **निष्कृतं** दुष्कृतम् । **निष्पीतम्** दुष्पीतम् । इदुदुपधस्य चाप्रत्ययस्येति षत्वं सिद्धं भविष्यती'त्युक्त्वा 'नैतदस्ती'त्यादिना तत्प्रयोजनप्रत्याख्यानं च कृतम् ।

यदीदुदुपधग्रहणेन विसर्जनीयो विशेष्येत । इदुदुपधस्य विसर्जनीयस्य प्रत्यभिन्नस्य षत्वं भवतीति । तदा विसर्जनीयस्याल्युपदेशाभावादल्त्वाभावेनान्त्यादलः पूर्ववर्णस्योपधासंज्ञाया अप्राप्त्येदुदुपधस्येति सूत्रेण दुदुपधस्य निष्कृतमित्यादिगतविसर्जनीयस्य षत्वं न भवतीति तत्सिद्ध्यर्थमुपधासंज्ञार्थकाविशेषेणोपदेशः सार्थकः स्यान्न चैवम् । किन्तु इदुदुपधस्येति सकार एव विशेष्यते । इदुदुपधस्य सकारस्य यो विसर्जनीयः तस्येति । तथा च सकारस्यालमध्ये उपदेशात्तत्पूर्वस्येकारादेरुपधासंज्ञा सम्भवतीति षत्वसिद्धिरिति । तेन च निष्कृतं निष्पीतमित्यादौ षत्वाश्रयो विसर्जनीयः स्वप्रकृतिभूतरेफं प्रति प्रकृतिभूतसकारमाश्रित्याङ्गीकृत इति प्राप्तं भवति । तथा चातिरेफस्योपदेशेन विसर्जनीयप्रकृतितया रेफमात्रोपादानसम्भवेऽपि तत्परित्यागेन रेफं प्रति प्रकृतिभूतसकारस्यैवोपादानकरणेन निसिति सान्त एवोपसर्ग इति भाष्याभिप्रेतमिति सिद्ध्या तद्बलादेवार्थतो रेफान्तोऽयमुपसर्गो नेत्यपि प्राप्त्या भाष्याभिमतत्वसिद्धेरिति भावः । अत एव गूढार्थचन्द्रिका(दीपिका)यां भाष्ये इदुदुपधस्य सकारस्येति सकारान्तावेतावित्याशयेनोक्तमिति भाष्यवाक्यस्थसकारप्रयोगबलेनेमौ सकारान्तौ न रेफान्तावित्याशयो भाष्यकारस्येत्युक्तम् । अन्यथेति पक्षाश्रयणे नेति वचनोपपत्तिः । रमाकृता तूपसर्गाः क्रियायोग इति सूत्रे निसदुस् इति सान्ताविति भाष्यानुसारेण प्रतिज्ञां कृत्वा निसस्तयताविति निर्देशात् । अयोगवाहानामविशेषेणेति प्रकरण इत्यादेः टीकोक्तस्यैव हेतुत्वेनाभिधानाच्च । उपसर्गस्यायताविति सूत्रे वामनोऽप्येवमिति चोक्तेः । रेफान्तत्वपक्षस्तु भाष्यासम्मत इति सूचनाय निरःकुषः सुदुरोरधिकरणे इति निर्देशाद्रेफान्तावपीति अत्रैव सूत्रे हरदत्त इति हरदत्वमतत्वेनोक्तः । तावतापि भाष्यसम्मतत्वसिद्धिः । अन्यथा विसर्जनीयस्येदुदुपधस्येति न विशेषणं, किन्तु रेफ एवेदुदुपधस्येति विशिष्यत इति भाष्यकारो वदेत् सकारो





विशिष्यत इति वदंश्चाकुशलः स्यात् । न हि हरदत्ताद्युक्तिमाश्रित्य भाष्यकाराकुशलतां कोऽपि मन्यते । एतेनैव भाष्यकारीयनिषेधकवचनस्य केनाप्यदृष्टत्वात् तद्बलेन भाष्यानभिमतिसिद्धिः न वक्तुं शक्येति वदन् उमर्जीकबौद्धोऽपि प्रत्युक्तः । तत्र तत्र भाष्योक्तिमात्रं मूलकृत्य विपरीतोत्त्यभावेऽपि पक्षान्तरानादरणस्य स्वयमभिधानेन स्वव्याघाती च । इह तु विशेषविधानपरत्वाभावे भाष्यकाराकौशल्यरमोत्त्या रूपबाधकेन शेषनिषेधप्रतीतिसम्भव इत्युक्तमेव । यदपि व्याकरणे क्वचिदपि रेफान्तत्वेन व्यवहाराभावात् तदनभिमतत्वमिति पक्षान्तरमाशङ्क्य न ह्यस्माभिर्महाभाष्ये रेफान्तोपसर्गः कुत्रापि न व्यवहृत इति निश्चेतुं शक्यत इत्युक्तम् । तत्स्वयं महाभाष्याभिज्ञ इति पामरजनान् वञ्चयितुः कथं न लज्जाकरमिति स एव जानीयात् । प्रत्युतानेनाद्यापि भाष्यग्रन्थः सम्पूर्ण एभिर्नावलोकित इति बुद्ध्युत्पादेन प्रतारका एत इत्येव सर्वेषां दृढनिश्चयापत्तिः । तत्र तत्र भवता शरणीकृतभट्टोजीग्रन्थस्य निरवकाशस्य सत्त्वेन रेफान्तोपसर्गो भाष्ये न कुत्रापि व्यवहृत इत्यपि निश्चेतुं शक्यत्वाच्च । अन्यथा सान्ततया निर्देशसाधकभाष्यकारोक्तिमिव रेफान्तत्वसाधकतया भाष्यकारोक्तिमेवो-दाहरेत् । इति हरदत्त इत्यन्यमतत्वं च न वदेत् । अधिकं तद्बौद्धधिक्कारे ज्ञेयम् ।

**मुनिद्वयेति** । प्रागुपदर्शितान्तात्यन्तेतिसूत्रीय निसो देश इति वार्तिककारीयनिर्देशस्याप्युपलक्षणमेतत् । तथा च मुनित्रयेति लभ्यत इति ज्ञेयम् । **भाष्यविरोधादिति** । उक्तरीत्या भाष्यकाराकौशल्यादिवारणाय रेफान्तत्वं नास्तीति निषेधे भाष्यपर्यवसानसिद्ध्या हरदत्तादीनां रेफान्तोपसर्गत्वोक्तिस्तद्विरुद्धेति सर्वसुज्ञेयमेतत् । सति चैवं भाष्ये रेफान्तो नेति निषेधाभावात् कथं विरोध इति वदन् बौद्धोऽपि निरस्तः । भाष्यविरोधा-दित्युपलक्षणम् । उदाहृतसौत्रादिनिर्देशविरोधात् निस इति वक्तव्य इत्येतदुपपादनपरत्वोक्तिविरोधाच्चेत्यपि द्रष्टव्यम् । निलयन इति प्रयोगस्तु रुत्वासिद्धिपक्षे निलयनमित्यादिप्रामाणिकप्रयोगवदुपपाद्य इति तूक्तमेव । षेवृधातुः सोपदेशोऽपीति न्यासकारादयस्तद्भाष्यविरुद्धमिति सिद्धान्तकौमुद्यां निराकरणं कृतम्, तद्भ्रमायां भाष्यविरुद्धत्वमुपपादयितुं यदि हि द्वौ धातुसम्मतौ स्याताम् । तर्हि षोपदेशलक्षणस्त्यायतिरिवायमपि पर्युदस्येतेति भाव इत्युक्तम् । तत्रापि भवदुक्तरीत्या भाष्यकृता षेवृधातुः सोपदेशोऽपि न भवतीत्यनुक्तेर्विरोधो नेत्यापाताच्च । **अदोषत्वादिति** । रेफान्तत्वाश्रयणेनैव लत्वोपपत्तौ किमर्थं योगविभागाश्रयणमित्येतद्दोष-शून्यत्वादित्यर्थः । एवमेव गुणगणनिलयमिति गीताभाष्यटीकाप्रयोगस्य नित्यैकनिलयेत्युपाधिखण्डनटीका-प्रयोगस्य च यदुपपादनं तट्टीकायां गुरुपादकृतं तद्व्याख्यानमपि कार्यमित्यशेषमिति मङ्गलम् ।

रो ल इत्यादिमूलीयटीकैवं विवृता यतः ।
विबुधास्तुष्टिमायान्तु बौद्धधिक्कारपूर्वकम् ॥

तत्र तत्र टीकोपरितना व्याख्येयास्ति । दुर्विदत्वत इत्येतद्व्याख्यानमविज्ञानपदारूढं करोति **न विद्यते विज्ञानमिति** मूलम् । अयस्मयादीनीत्येतत्सूत्रविचारादिकमानन्दमयाधिकरणे द्रष्टव्यमित्याशयेन प्रतीकमात्रो-पादानमिति केचित् । व्याख्यातमेतदधस्तादिति वाक्योपेतपाठस्तु स्वरस एव । तत्रत्यमुपपादनं च





तदधिकरणीयास्मदीयोपपादनानुसारेण ज्ञेयम् । उपरमार्थकयमधात्वर्थाननुगतिमाशङ्क्य परिहरति **धातूनामिति** । **प्रकृतेति** । यन्तृत्वरूपार्थ इत्यर्थः ।

**स०व्र०**— ननूक्तिः यद्यपि प्रत्यक्षानुमानयोः न सम्भवति तथापि स्मृतीनां शब्दरूपत्वात् तत्र सम्भविष्यति । ततश्च वेदेतरप्रमाणेन स्मृत्या नोक्तमिति कुतो न व्याख्यातमित्यत आह **स्मृतीनामिति** । 'इतिहासपुराणः पञ्चमो वेदानां वेदः' इत्युक्तत्वादिति भावः । **विरोधतादवस्थ्यमिति** । वेदेन निरुक्तं वेदेनानिरुक्तमित्युक्तं विरोधतादवस्थ्यमित्यर्थः । नन्वेवं 'निरयनम्' इति स्यादित्यत आह **रो ल इतीति** । कृपे रो ल इति सूत्रे रो ल इति विभागेन न रस्य लत्वमित्यर्थः । न च उपसर्गस्यायतावितिं लत्वं भविष्यति । न भविष्यति । निस् दुस् इत्यनयो रेफस्यासिद्धत्वात् । न च निरुपसर्ग एव भवत्विति वाच्यम् । तस्य कैश्चिदेवाङ्गीकृतत्वादिति भावः । ल्युटि कृत इत्यनन्तरं सार्वधातुके गुणे युवोरनाकावित्यनादेशे च सतीति शेषः । **तनोतेर्ड्विप्रत्यय इति** । डित्वाट्टिलोपः । डिप्रत्ययस्य च क्विप्प्रत्ययवत् सर्वस्यापि लोप इति भावः । **यती प्रयत्न इत्यस्येति** । अत्रेकारोऽनुबन्धार्थः डित्वाट्टिलोपश्चेति ज्ञातव्यम् । **जश्त्वाभाव इति** । पदसंज्ञायां 'झलां जशोऽन्त' इति जश्त्वे सद्यमिति स्यादिति भावः । **वक्ष्यमाणत्वादिति** । 'सदातनं सत्यमिति नित्यमेवोच्यते बुधैः' इति वाक्य इत्यर्थः ।

**स०ना०**— **आश्रयत्वात्स्वाश्रयत्वात् ज्ञानत्वात् दुर्विदत्वतः** इति मूलसुधायां **रो ल इति योगविभागाल्लत्वमिति** । कृपो रोल इति सूत्रस्य विभागेन रोल इत्यंशेन लत्वमित्यर्थः । यद्यप्युपसर्गस्यायताविति लत्वमिति वक्तव्यम् । तथापि न तत्सूत्रं लत्वविधायकम् । किं तु पूर्वसूत्रानुवृत्तं रोल इति पदमेव विधायकं उपसर्गस्येत्यादिकं तु स्थानिनिर्मितप्रदर्शकमिति भावेन तथोक्तम् । यद्यपि निसोरुत्वस्यासिद्धत्वाल्लत्वं न सिद्ध्यति तथापि निरःकुष इति वदता सूत्रकृता रेफान्तस्याप्युपसर्गस्य ज्ञापितत्वात् । न किञ्चिदत्रानुपपन्नम् । एतेन लत्वविधायके उपसर्गस्यायताविति सूत्रे सति अविद्यमानयोगविभागाश्रयणमनुपपन्नमिति परास्तम् ।

**विट्ठल०**— **ड्यत्प्रत्यय इति** । डित्वाट्टिलोपे त्यदिति रूपमिति भावः । अशक्यत इति मूलपदं भावप्रधानमित्याशयेन व्याख्याति **अशक्यत्वत इति** । नन्विति शङ्कां प्रतिषेधति **नेति** । तत्र हेतुः **प्रकृतेति** । प्रकृतत्वमुपपादयति **वेदेनेति** । वेदेतरप्रमाणेनानिरुक्तमित्यपि वक्तुं न शक्यत इत्याह **किञ्चेति** । ननूक्तिर्यद्यपि प्रत्यक्षानुमानयोः न सम्भवति तथापि स्मृतीनां शब्दरूपत्वात् तत्र सम्भविष्यति ततश्च वेदेतरप्रमाणेन स्मृत्या निरुक्तमिति कुतो न व्याख्यातमित्यत आह **स्मृतीनामपीति** । इतिहासपुराणः पञ्चमो वेदानां वेद इत्युक्तत्वादिति भावः । **विरोधतादवस्थ्यमिति** । वेदेन निरुक्तं वेदेनानिरुक्तमित्युक्तविरोधतादवस्थ्यमित्यर्थः । **महिमाधिक्यं चेति** । अत्र वेदेन निरुक्तमिति प्रथमपक्षे वेदशब्देन स्मृतेश्च ग्रहणे पौरुषेयापौरुषेयसकलवेदप्रतिपाद्यत्वलक्षणमहिमाधिक्यम् । अत्र वेदेनानिरुक्तमिति द्वितीयेऽपि सर्ववेदैरपि





साकल्येन वक्तुमशक्यत्वलक्षणमहिमाधिक्यं चात्र लभ्यत इत्यर्थः । नन्वेवं चेन्निरयनमिति स्यादित्यत आह **रो ल इतीति** । कृपे रो ल इत्यत्र रो ल इति योगविभागान्निरो रेफस्य लत्वमित्यर्थः । **ल्युटि कृत इति** । युवोरनाकाविति योरनादेशो धात्वीकारस्य गुणे अयादेशे च सति नितरां लीयन्ते श्लिष्यन्तेऽस्मिन्निति निलयनमिति रूपमिति भावः । दुर्वितत्त्वत इत्येतदविज्ञानशब्दारूढं करोति **न विद्यत इति** । जीवशब्दोऽत्रास्वतन्त्रचेतनपरः सकलविशेषावगाहिजीवज्ञानं यद्विषये न विद्यत इत्यनेन रमादिचेतना यद्विषये सकलविशेषान्न जानन्तीत्युक्तं भवति । **तनोतेरिति** । तनु विस्तार इत्यस्माद्भावे ड्विप्रत्यये क्विप्रत्ययस्यापि लोपे त् इति रूपम् । तेन च सत् समीचीना तु व्याप्तिर्यस्येति बहुव्रीहिरित्यर्थः । **यती प्रयत्न इत्यस्येति** । अत्र ईकारोऽनुबन्धार्थः । ततश्च डप्रत्यये टिलोपे यमिति रूपमित्यर्थः । ननु तर्हि झलां जशोऽन्त इति तकारस्य जस्त्वे सद्यमिति स्यादित्यत आह **अयस्मयादीनीति** । पदसंज्ञायामेव जस्त्वविधानादिति भावः । अनृतशब्दस्य मिथ्यात्वे प्रसिद्धत्वादनृतं मिथ्याभूतमित्येवार्थः । किं न स्यादित्यतस्तत्परिहारकत्वेन हिशब्दं योजयति **हिशब्द इति** । **वक्ष्यमाणत्वादिति** । 'सदातनं सत्यमिति नित्यमेवोच्यते बुधैरि'त्यत्रेति शेषः । यम उपरम इति धातूनामनेकार्थत्वाद्विवक्षितार्थसिद्धिः । **अभवदिति वचनादिति** । श्रुतौ सच्च त्यच्चाभवदित्युपक्रमे सत्यमभवदित्युपसंहारे चेति ज्ञातव्यम् । **प्रत्येकं चेति** । यदा सत्त्वात् सदाततेरित्यादिरूपेणेत्यर्थः । सृष्टौ सत्यामिति दोषोक्तिः ।

**चषकः— वेदात्मकत्वेनेति** । 'इतिहासपुराणः पञ्चमो वेदानां वेद' इत्युक्तेरिति भावः । **विरोधतादवस्थ्यमिति** । वेदेन निरुक्तं तेनैवानिरुक्तमित्युक्तौ विरोधतादवस्थ्यमित्यर्थः । **वक्ष्यमाणत्वादिति** । 'सनातनं सत्यमिति नित्यमेवोच्यते बुधैः' इत्यत्रेत्यादिः ।

१०१ **सु०— तर्हि कथमभवदिति प्रयोग इत्यत आह व्यक्तिरिति ।**

**अनु०— व्यक्तिरुक्तगुणानां हि पुरुषापेक्षया नृणाम् ॥**
**भवेदभवदि(त्याद्यः प्र)त्यस्मात्प्रयोगश्चात्र युज्यते ।**

**उक्तगुणानां** सदादिशब्दोक्त(नां)धर्माणाम् । **व्यक्तिः** प्रतीतिः । **नृणाम्** उपदेष्टृ**पुरुषापेक्षया** सृष्टौ सत्यामेव **भवेत् हि** यस्मात् (**अस्मात्**) कारणात् ।

अत्र च नित्यगुणेऽपि ब्रह्मणि सदादिकमभवदिति प्रयोगो युज्यते । ततश्चायं श्रुत्यर्थः सम्पद्यते । **तत्** ब्रह्म, मूर्तामूर्तात्मकं विश्वं सृष्ट्वा, तत्प्रेरकत्वेन नानारूपैः **तदेव** विश्वं **प्रविश्य**, प्राक् सृष्टेरुपदेष्टॄणामुपदेश्यानां च शरीरेन्द्रियवतामभावादप्रतीतगुणकं सत्,





**अथेदानीमुपदेष्टृणामुपदेश्यानां च शरीरेन्द्रियवत्त्वे सति प्रतीतसत्त्वादिगुणम् अभवदिति ॥ तदनेन पारमेश्वरी सृष्टिर्योग्यानां स्वगुणज्ञानार्थेत्युक्तं भवति । यथोक्तम्— 'सोऽयं विहार इह मे तनुभृत्स्वभावसम्भूतये भवति भूतिकृदेव भूत्याः' इति ।**

**परि०— सृष्टौ सत्यामिति** शेषोक्तिः । 'ही'त्यनुवादः, 'यस्मादि'ति व्याख्या । 'अत्र चे'त्यनुवादः, 'नित्ये'त्यादि व्याख्या । **यथोक्तमिति** । भारततात्पर्यनिर्णयाऽऽद्यभागे । तनुभृतां ये स्वभावास्तेषामभिव्यक्तये । यदा तनुभृतां साधूनां स्वस्य भगवतः भावानां गुणानां सम्भूतये ज्ञानायेत्यर्थः । **भूत्याः** श्रियः ।

**वं०प०— सत्त्वादिगुणमिति** । सत्त्वात्ततेरित्यादिनोक्तरीत्या सत्त्वादिगुणकमित्यर्थः । **तनुभृदिति** । तनुभृतां योग्यानां पुंसां स्वस्य स्वतन्त्रस्य मम ये भावाः गुणाः तेषां सम्भूतये ज्ञानायेति योजना ।

**आनन्दः—** नन्वेतदनुप्रवेशस्य पूर्वकालीनत्वं कथं समर्थितमित्यत आह **ततश्चेति** ।

**श्रीनिधि०— तनुभृत्स्वभावसम्भूतय इति** । तनुभृतां प्राणिनां स्वभावः ज्ञानादिः । तस्य सम्भूतये । अभिव्यक्ते इत्यर्थः ।

**शे०वा०—** ननु सदादिशब्दोक्तधर्माणां व्यक्तिरपि स्वं प्रति सर्वदाऽस्तीति न व्यक्त्यपेक्षयाऽप्यभवदित्यादिप्रयोगनिर्वाह इत्यत उक्तं **नृणामिति** । उपदेश्यानामित्यर्थः । उपदेश्यपरनृशब्दसमभिव्याहारात् पुरुषमात्रपरोऽपि पुरुषशब्द उपदेश्यपुरुषप्रतिसम्बन्ध्युपदेष्टृपर इत्याह **उपदेष्टृपुरुष इति** । **सृष्टौ सत्यामिति** । मूर्तामूर्तात्मकविश्वसृष्टौ सत्यामित्यर्थः । ननु सृष्टेः पूर्वं नृणामुपदेष्टृपुरुषापेक्षया भगवद्गुणानां कुतो न व्यक्तिः, सृष्टौ सत्यां च कुतो व्यक्तिः । उपदेश्योपदेशकपुरुषयोः पश्चादिव पूर्वमपि सत्त्वात् । भगवद्गुणानां चानादित्वेन सर्वदा सत्त्वादित्यतः सृष्टेः प्रतीत्युपयोगं दर्शयन्नेव श्रुतितात्पर्यार्थमाह **ततश्चेति** । **शरीरेन्द्रियवतामभावादिति** । ततश्च न सृष्टेः पूर्वं तेषामुपदेश्योपदेष्टृभाव इति भावः । उक्तः सर्वोऽप्यर्थ आचार्यवाक्यार्थतयाऽनुसन्धेय इति भावेन भारततात्पर्यनिर्णयवाक्यं प्रमाणयति **यथोक्तमिति** । प्रथमेऽध्याय इति शेषः । तद्वाक्यं पठति **स इति** । अनेन तनुभृच्छब्दो योग्यजनपरः, स्वभावशब्दश्च स्वस्य भावो धर्म इति स्वगुणपरः, सम्भूतिशब्दश्च ज्ञानार्थम् इत्याचार्यवाक्ययोजना सूचिता भवति ।

**वा०र०— इत्यत उक्तमिति** । मूल इति शेषः । **उपदेश्यानामिति** । वक्ष्यमाणानुसारेण व्याचष्टे **उपदेश्यानामिति** । **उपदेश्यपरेति** । उपदेश्यतात्पर्यकेत्यर्थः ।

**विठ्ठल०**— ननु तदर्थमसृजज्जगदित्यत्र अनेकप्रादुर्भावैस्तत्तत्पदार्थेषु प्रविश्य तन्नियामकतया क्रीडितुं नियम्यापेक्षत्वान्नियामकत्वस्य नियम्यं जगदसृजतेति वक्ष्यते । तत्परमात्मनि व्यापकत्वरूपव्यापारस्य नियम्य जगत्सापेक्षत्वे पराधीनता स्यादिति शङ्कापि उक्तगुणानां नृणां व्यक्तिः प्रतीतिः उपदेष्टृपुरुषापेक्षया जगत्सृष्टौ सत्यामेव भवेदित्यनेनैव परिहृता भवतीत्याशयेनाह **तदनेनेति** । तथा च भगवतो जगन्नियामकत्वं यत्तदज्ञानार्थमेवेतरेषां जगतोऽपेक्ष्यत्वात् तदर्थमेव च जगत्सर्जनमिति नोक्तदोष इति भावः । योग्यानां ज्ञानजननायैव जगत्सर्जनमित्यत्र महाभारततात्पर्यनिर्णयं संवादयति **सोऽयमिति** । न तु भृतां ये स्वभावाः ज्ञानादयः तेषामभिव्यक्तय इत्यर्थः ।

**॥ इति भास्करादिव्याख्याननिराकरणे**
**ब्रह्मणो जगदुपादानत्वे परोपन्यस्तानां प्रमाणानां निराकरणम् ॥**

* * *

**॥ अथ भास्करादिव्याख्याननिराकरणे ब्रह्मपरिणामनिराकरणोपसंहारः ॥**
**—॥ तत्रादौ उपसंहारः ॥**

१०२ **सु०— ब्रह्मपरिणामनिराकरणमुपसंहरति तस्मादिति ।**

## अनु०— तस्मादशेषकर्तैको निर्विकारो रमापतिः ॥

**निर्विकार एव अशेषकर्ता** इति सम्बन्धः । द्विभागं ब्रह्मेति यन्निराकृतं तस्योपसंहार **एक इति** । परिणामानुपपत्तावुक्तयुक्तेरनुवादो वा । अतो न ब्रह्मोपादानत्वं प्रकृत्यधिकरणार्थ इति (सम्बन्धः) शेषः ।

कस्तर्हि तदर्थ इत्यत आह **शब्दैरिति** ।

## शब्दैः प्रकृतिरित्याद्यैः स्त्रीलिङ्गैरभिधीयते ।

इत्यर्थोऽस्येति शेषः । अनेनापव्याख्याननिराकरणस्य स्वव्याख्यानदार्ढ्यार्थत्वात् नासङ्गतिरित्यपि सूचितम् ।

**परि०**— परैरुपादाननिमित्तयोरैक्योपगमेन विकारिण एव कर्तृत्वाङ्गीकारात् तस्य चात्र निरासात् तदुपसंहारत्वस्फोरणाय उद्देश्यविधेयव्यत्यासेनान्वयमाह **इति सम्बन्ध इति** । परि-





**णामेति** । ब्रह्मणः परिणामानुपपत्तौ नैव स स्यादित्यत्रोक्ता या युक्तिः विकारमात्रस्य पराधीनत्वादस्य चापराधीनत्वादिति युक्तिः, एकः = अद्वितीयः स्वतन्त्र इति यावदित्युक्त्या अनूद्यत इत्यर्थः । एतच्च 'यच्चाविकृतमेवैकमि'त्यग्रेतनैकपदोक्ताभिप्रायविवरणेन व्यक्तम् । अभिधीयत इत्यनन्तरं शेषमाह **इत्यर्थोऽस्येति शेष इति** । **अस्य** अधिकरणस्येत्यर्थः । **अनेनैवेति** । बहु स्यामिति बहुवचनस्य स्वरूपबहुभावरूपव्याख्यानेनैव प्रकृतिपरवाक्यमपि नियामकस्वरूपबाहुल्यकरणाभिप्रायेण व्याख्यातमित्यर्थः ।

**यादु०— उक्तयुक्तेरनुवाद इति** । अपराधीनत्वयुक्तेरित्यर्थः । एकशब्दस्यासहायवाचित्वादिति भावः ।

**वं०प०— उक्तेति** । सर्वपरिणामानां पराधीनत्वोक्तेर्भगवतश्चैकत्वादपराधीनत्वान्न परिणामो युक्त इत्यर्थः ।

**आनन्दः— परिणामेति** । नन्विकार इत्ययं परिणामानुपपत्तौ या निर्विकारत्वरूपा उक्ता युक्तिः तस्या अनुवाद इत्यर्थः । नन्वेतत्परमतनिराकरणभाष्यमसूत्रार्थत्वादसङ्गतमत्राह **अनेनेति** ।

**श्रीनिधि०— परिणामानुपपत्तावुक्तेति** । तत्रोक्तयुक्तिर्भगभागिनोर्भेदादिविकल्पेन द्विभागत्वानुपपत्तिः । तदेक इत्यनेनानूद्यते । द्विभागो नेत्यर्थः ।

**शे०वा०—** अशेषकर्तृत्वस्य परिणामवादिनोऽप्यभिमतत्वात् कथमयं तन्निराकरणोपसंहार इत्यतो योजनामाह **निर्विकार इति** । **निराकृतमिति** । भागेन परिणामश्चेदित्यादिनेति शेषः । **उक्तयुक्तेरिति** । अपराधीनत्वरूपयुक्तेरित्यर्थः । 'न च प्रकृतिशब्देन ब्रह्मोपादानमुच्यते' इत्युपक्रमानुसारेण अनुगुणं शेषं पूरयति **अत इति** ।

**स०व्र०— उक्तयुक्तेरनुवाद इति** । अपराधीनत्वयुक्तेरित्यर्थः । एकशब्दस्यासहायवाचित्वादिति भावः ।

**विट्ठल०—** परैरुपादाननिमित्तयोरैक्याङ्गीकारेण विकारिण एव कर्तृत्वाङ्गीकारात् तस्य चात्र निरासात् तदुपसंहारत्वस्फुरणायोद्देश्यविधेयव्यत्यासेनान्वयमाह **इति सम्बन्ध इति** । **परिणामानुपपत्ताविति** । ब्रह्मणः परिणामानुपपत्तौ सर्वोऽपि विकारो निमित्ताधीनो दृष्टः । न हि ब्रह्मणो निमित्तत्वमस्तीति या सहायाभावलक्षणायुक्तिः नैव स स्याद्धरावित्यत्राभिहिता तदनुवादो वेत्यर्थः ।

**॥ इति उपसंहारः ॥**

* * *

॥ तत्र उक्तोपसंहारस्योपपादनम् ॥

१०३ **सु०—** ननु वक्तव्यार्थस्यावशिष्टत्वात् कथमुपसंहारः क्रियते । तथा हि । प्रतिज्ञा-दृष्टान्तानुपरोधादित्युक्तं तावद्दूषणीयम् । सत्यम् । विवर्तनिराकरणेन निराकरिष्यते ॥ तर्हि अभिध्योपदेशाच्चेत्यत्रोक्तं 'बहु स्यां प्रजायेये'ति वाक्यं दूषणीयमिति चेन्न । अस्यापि 'सच्च त्यच्चे'ति वाक्यव्याख्यानन्यायेनैव व्याख्यातत्वादित्याह **बहु स्यामिति** ।

**अनु०— बहु स्यामिति तस्यैव ह्युक्तमार्गेण युज्यते ॥**

**तस्यैव** निर्विकारस्यैव । उक्तमार्गेणेत्यस्य (एव) विवरणं **तत्तद्गतेन रूपेणेति** ।

**तत्तद्गतेन रूपेण**

तत्तदनन्तपदार्थप्रेरकानन्तरूपैः 'बहु स्यामि'ति, 'सोऽकामयते'त्यस्याः श्रुतेरर्थ इत्यर्थः ।

एवं तर्हि 'स इदं सर्वमसृजते'त्युत्तरवाक्यमसङ्गतं स्यात्, न ह्यन्यार्थं सङ्कल्प-मभिधायान्यक्रियाभिधानं सङ्गच्छते । न हि ईश्वरः अस्वतन्त्रः अपत्यकामो वेत्यत आह **तदर्थमिति** ।

**तदर्थं ह्यसृजज्जगत् ॥**

तत्तत्पदार्थनियामकबहुस्वरूपत्वकामनानन्तरं, नियम्यापेक्षत्वात् नियामकत्वस्य, **तदर्थं** नियामकबहुस्वरूपत्वार्थं, नियम्यं **जगत्** तावत् **असृजत्**, ततो नियामकबहुस्वरूपो भूत्वा, तदेवानुप्राविशदिति, वाक्ययोजनोपपत्तेः कात्रासङ्गतिरित्यर्थः ।

अनेनैव 'तदात्मानं स्वयमकुरुतेति' श्रुतिर्व्याख्याता वेदितव्या । न ह्यत्रात्मानं प्रपञ्चात्मनाऽकुरुतेति श्रूयते । उभयाम्नानं च ऊर्णनाभिदृष्टान्तोक्त्यैव निरस्तम् । न ह्यूर्णनाभेरुत्पद्यमानस्य, तस्मिन्नेव लीयमानस्य च, तन्तोरूर्णनाभिरुपादानम्, किन्तु तदुपभुक्तमन्नमेवेत्युक्तम् ।

योनिश्चेत्येतत्प्रागेव निरस्तमिति युक्त एवोपसंहार इति ॥





**परि०**— साक्षाच्चोभयाम्नानादिति सूत्रे कर्तृत्वोपादानत्वयोरुभयोराम्नानमुच्यत इति परोक्तार्थं निराह **उभयाम्नानं चेति** । 'न चोर्णनाभिजनितृमातॄणामि'त्यत्रोक्तेत्यर्थः । **योनिश्चेत्येतदिति** । 'योनिश्च हि गीयत' इति सूत्रार्थवर्णनमपि प्रागुक्त 'न चोर्णनाभिजनित्रि'त्यत्र ऊर्णनाभिदृष्टान्तोक्त्या निरस्तमित्यर्थः । तत्प्रकारस्तत्रैव सुधायां व्यक्तः ।

**यादु०**— **निराकरिष्यत इति** । 'वाचारम्भणमित्युक्ते मिथ्येत्यश्रुतकल्पनम् । पुनरुक्तिर्नामधेय-मितीत्यस्य निरर्थते'त्यत्रेति शेषः । **काऽत्रासङ्गतिरिति** । उक्तं हि 'बहु स्यामिति सङ्कल्प्य तेजःप्रभृति-सर्जनम् । गुरुः स्यामिति सङ्कल्प्य शिष्यसम्पादनादिवदि'ति । **प्रागेव निरस्तमिति** । 'न चोर्णनाभिजनितृ-मातॄणां च विकारिते'त्येतद्व्याख्यानावसर इत्यर्थः ।

**वं०प०**— **न हीश्वर इति** । येनान्यार्थं सङ्कल्प्यान्यक्रियां करिष्यतीत्यर्थः । **अनेनैवेति** । बहु स्यामिति वाक्यस्य स्वरूपबहुभावरूपत्वव्याख्यानेनैवात्मकृतिपरवाक्यमपि नियामकस्वरूपबहुकारणाभिप्रायेण व्याख्यातमित्यर्थः । साक्षाच्चोभयाम्नानादिति सूत्रे कर्तृत्वोपादानत्वयोरुभयोराम्नानमुच्यत इति परोक्तार्थं निराकरोति **उभयाम्नानं चेति** । 'न चोर्णनाभिजनितृमातॄणामि'त्यत्रोक्तेत्यर्थः ।

**आनन्दः**— **एवं तर्हीति** । स्वस्यैवानन्तरूपत्वभवनसङ्कल्पो यदि तर्हीत्यर्थः । ननु देवदत्तादि-वदन्यसङ्कल्पेऽपि अन्यक्रिया किं न स्यादत्राह **न हीति** । ननु तथाऽप्युपसंहरणमयुक्तम् । **तदात्मानमिति** । परोदाहृतोपादानत्वश्रुतेरव्याख्यातत्वादित्यत आह **अनेनैवेति** । अतिदेशार्थमाह **न ह्यत्रेति** । निरासप्रकारमेव विशदयति **न ह्यूर्णनाभेरिति** ।

**श्रीनिधि०**— **प्रागेवेति** । 'न चोर्णनाभिजनितृमातॄणां च विकारिते'त्यत्र ऊर्णनाभिमात्रग्रहणेति भावः ।

**शे०वा०**— **निराकरिष्यत इति** । 'वाचारम्भणमित्युक्ते मिथ्येत्यश्रुतकल्पनमि'त्यादिना पराभिमतार्थे बाधकव्युत्पादनेन 'वाचाऽरब्धं तु साङ्केतनाम स्यादि'त्यादिना अबाधितार्थव्युत्पादनेन चात्रैव पादे उत्तरत्रेति शेषः । **दूषणीयमिति** । तत्र बहुभवनस्य प्रतिपादितत्वान्निर्विकारस्य च ब्रह्मणस्तदयोगादिति भावः । **विव-रणमिति** । अतो न तद्वैयर्थ्यमिति भावः । तथापि कथं बहु स्यामिति श्रुत्यविरोध इत्यतः स्यादेवं यद्यत्र तेजआदिबहुभावः सङ्कल्पितः स्यात् । न चैतदस्ति । किन्तु स्वरूपबहुभाव एव । स च भगवतोऽपि सम्भवति । गुहां प्रविष्टावित्यत्रैकस्मिन्नपि बहुत्वस्य, द्युभ्वादीत्यत्राजेऽपि जनेरुक्तत्वादित्यभिप्रेत्य श्रुत्यर्थमाह **तत्तदिति** ।

बहु स्यामिति तेजआत्मना बहुभाव एव सङ्कल्पितः । तेजआदिभावश्च न ब्रह्मणि युक्त इत्यभिप्रेत्य स्वरूपबहुभावस्यैव सङ्कल्पितत्वेऽनिष्टमाह **एवं तर्हीति** । तत्तत्पदार्थनियामकस्वरूपबहुभावस्यैव सङ्कल्पितत्वे





इत्यर्थः । **असङ्गतं स्यादिति** । तस्य प्रपञ्चसर्जनाभिधायकत्वादिति भावः । **क्वासङ्गतिरिति** । गुरुः स्यामिति राजा स्यामिति गुरुत्वराजत्वादिसङ्कल्पानन्तरमपि गुरुत्वराजत्वादेः शिष्यभृत्यादिसापेक्षत्वेन तेन विनाऽसम्भवाद्गुरुत्वाद्यर्थं शिष्यादिसम्पादनदर्शनादिति भावः । तथापि 'आत्मकृतेः परिणामादि'त्यत्रोक्तं 'तदात्मानं स्वयमकुरुते'त्येतद्दूषणीयमेवेति कथं तद्दूषयित्वैवोपसंहार इत्यत आह **अनेनैवेति** । अस्तु तर्हि 'सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते आकाशं प्रत्यस्तं यन्ती'ति ब्रह्मण्येव प्रभवप्रलयाम्नानं तत्र मानम् । निमित्ते कार्यस्य लयाभावादित्यतो निमित्तेऽप्यूर्णनाभौ तन्तोर्लयदर्शनान्न तेनोपादानत्वसिद्धिरित्याह **उभयाम्नानं चेति** । नन्वूर्णनाभौ न तन्तोर्लयः किन्तु बहिष्ठस्यान्तःप्रवेशमात्रमित्यत उक्तम् **ऊर्णनाभिदृष्टान्तोक्त्येति** । ब्रह्मण ऊर्णनाभिवदेव संहर्तृत्वस्य यथोर्णनाभिरिति श्रुत्यादिसिद्धत्वेनेत्यर्थः । ऊर्णनाभेरपि तन्तुकेशादीन्प्रत्युपादानत्वात् कथं तद्दृष्टान्तोक्तिमात्रेण उपादानत्वनिरास इत्यत ऊर्णनाभिनाशेऽपि तन्त्वाद्युपलम्भान्न तत्र तस्योपादानत्वमित्याशयेनाह **न ह्यूर्णनाभेरिति** । तर्ह्युपादानान्तराभावान्निरुपादानैव तन्त्वाद्युत्पत्तिः प्रसज्यत इत्यभिप्रायेण पृच्छति **किन्त्विति** । ऊर्णनाभ्युपभुक्तान्नपरिणतानां तच्छरीरधातूनामुपादानत्वान्नोपादानान्तराभाव इत्याशयेन परिहरति **तदिति** । **उक्तमिति** । 'तदन्नं हि कार्यरूपतया भवेदि'त्यनेनेति शेषः । **प्रागेवेति** । 'न चोर्णनाभिजनितृमातॄणां च विकारिते'त्यादिनेति शेषः । यथोर्णनाभिरिति वक्ष्यमाणोर्णनाभ्यादिदृष्टान्तबलादेव 'यद्भूतयोनिमिति' योनिशब्दस्योपादानवाचितायाः पराभिप्रेतत्वादूर्णनाभ्यादीनां तन्त्वादिकं प्रति उपादानत्वाभाववर्णनेन दृष्टान्तस्यान्यथासिद्धौ च योनिशब्दस्य तद्बलेनोपादानवाचित्वं न कल्पयितुं युक्तमिति भावः । **उपसंहार इति** । ब्रह्मोपादानत्वं न प्रकृत्यधिकरणार्थम् इत्युपसंहार इत्यर्थः ।

**वा०र०**— तेज आद्यात्मनेति पाठः । **न ब्रह्मणियुक्त इति** । निर्विकारस्येति शेषः । अनेनैवं तर्हीति शङ्काग्रन्थस्य ततस्तेज आद्यात्मना बहुभाव एव सङ्कल्पितः । तेज आदिभावश्च न ब्रह्मणि युक्त इत्याशय इति द्योतितं भवति । अत्र प्रकरणे **स इदं सर्वमसृजतेति** मूले व्यवहृतम् । तैत्तरीये इदमित्येव पाठेऽपि शाखान्तरमाश्रित्य स इत्यधिकमुक्तम् । एवमसदधिकरणेऽपि बोध्यम् ।

**स०व्र०**— **प्रागेव निरस्तमितीति** । 'न चोर्णनाभिजनितृमातॄणां च विकारिते'त्येतद्व्याख्यानावसरे इत्यर्थः ।

**चषकः**— **प्रागेव निरस्तमिति** । 'न चोर्णनाभी'ति प्रतीकव्याख्यावसर इत्यर्थः ।

**॥ इति उक्तोपसंहारस्योपपादनम् ॥**

**॥ इति भास्करादिव्याख्याननिराकरणे ब्रह्मपरिणामनिराकरणोपसंहारः ॥**

**॥ इति 'षष्ठं प्रकृत्यधिकरणं ब्रह्मणो जगदुपादानताप्रतिपादनार्थमि'ति भास्करादिव्याख्यानस्य निराकरणम् ॥**

* * *





**॥ अथ षष्ठाधिकरणव्याख्यानिराकरणे**
**मायावाद्येकदेशिनां 'ब्रह्म प्रपञ्चारोपाधिष्ठानम्' इति व्याख्याया निराकरणम् ॥**
**॥ तत्रादौ तद्व्याख्या ॥**

१०४ **सु०—** अपव्याख्यानान्तरं दूषयितुमनुवदति **यच्चेति** ।

**अनु०—** यच्चाविकृतमेवैकं ब्रह्म विश्वात्मना मृषा ॥
दृश्यते मन्ददृष्ट्यैव स सर्ग इति कथ्यते ।

**ब्रह्म विश्वात्मना दृश्यत इति यत्, स सर्ग इति कथ्यत** इत्येतावत्परिणामवादेऽपि समम्, अत उक्तम् **अविकृतमेवेति** । अविकृतत्वं कुत इत्यत उक्तम् **एकमिति** । अद्वितीयम्, निरवयवं चेत्यर्थः ।

तथा हि । किं ब्रह्मणः स्वत एव विश्वाकारपरिणामः, किं वा परतः ॥ नाद्यः, क्वाप्यदर्शनात् । यदपि क्षीरवद्धीत्युदाहृतम्, तत् कालादेर्विद्यमानत्वादयुक्तम् । स्वेच्छयैवेति चेन्न, प्रयोजनाभावात् । स्वभावोऽयमिति चेन्न, प्रेक्षावत्त्वहानेः ॥ न द्वितीयः, अद्वितीयत्वात् । न च निरवयवं क्वापि परिणतं दृष्टम् । आकाशं संयोगादिमदुपलब्धमिति चेन्न, द्रव्याकारणपरिणामस्य प्रकृतत्वात् । परमाण्वादयस्तु स्वरूपेणैव न सिद्धा इति ।

**परि०—** **अपव्याख्यानान्तरमिति** । प्रपञ्चो ब्रह्मपरिणाम इत्येतत्प्रकृत्यधिकरणार्थ इति यद्भास्करादिव्याख्यानं तत्प्राङ्निरस्तम् । ब्रह्म प्रपञ्चारोपाधिष्ठानमित्येतदत्रोच्यत इति यदपव्याख्यानं तन्निरसितुमित्यर्थः । अधिकृतत्वे एकमित्यनेनोक्तार्थद्वयस्य हेतुत्वं व्यनक्ति **तथाहि** इत्यादिना **न सिद्धा** इत्यन्तेन । **तदिति** । कालादेरविकारत्वादिति भावः । ननु परमाणुप्रधानशून्यतत्त्वादयस्तादृशा दृष्टा इत्यत आह **परमाण्वादयस्त्विति** ।

**यादु०—** ननु वैशेषिकादिमते निरवयवानां परमाणूनां शून्यवादिमते निरवयवस्य शून्यस्यैव परिणाम इत्यङ्गीकारात् कथमेतदित्यत आह **परमाण्वादय इति** ।

**वं०प०—** **क्वापीति** । स्वत एव परिणामस्येति शेषः । नन्वदर्शनमसिद्धम् । गवाद्युपभुक्तस्य तृणादेः स्वत एव क्षीराकारेण परिणामदर्शनादित्याशङ्क्याह **यदपीति** । कालादेरित्यादिपदेन अग्न्यादिग्रहणम् । तथा च





तत्रापि परिणामः कालाद्यधीन एवेत्यर्थः । **स्वेच्छयेति** । विश्वाकारपरिणाम इति वर्तते । अतो न परापेक्षेत्यर्थः । नानाप्रकारेणानर्थीभवनस्वभावस्य ब्रह्मणो भग्नं प्रेक्षावत्त्वमित्याह **प्रेक्षावत्त्वेति** । निरवयवेऽप्याकाशे संयोगादिमत्त्वरूपावस्थान्तरप्राप्तिरूपः परिणामोऽस्त्येवेति शङ्कते **आकाशमिति** । नन्वथाऽपि निरवयवानां परमाणूनां द्व्यणुकादिद्रव्याकारेण परिणामो दृष्ट एवेत्यत आह **परमाण्वादय इति** ।

**आनन्दः**— ननु ब्रह्मोपादानत्वस्याधुनैव निराकृतत्वात् पुनः तन्निराकरणं पुनरुक्ततामापादयतीत्यत आह **अपव्याख्यानेति** । ननु ब्रह्मणः स्वयमेकत्वेऽपि अन्येन सहानेकत्वाद्विकृतं भविष्यति । अस्तु वा सर्वथा एकत्वं तथापि सावयवत्वाद्विकृतता स्यादेवेत्यत एकपदं द्वेधा व्याख्याति **अद्वितीयमिति** । ननु कथमेकत्वेन तदुपपाद्यत इत्यत आह **तथा हीति** । **यदपीति** । तथा च यथा क्षीरस्य स्वत एव दध्याकारपरिणामः तथा ब्रह्मणोऽपीति भावः । **कालादेरिति** । परिणामाकारस्येति शेषः । ननु न प्रयोजनाभावेऽपि स्वेच्छया परिणाम इत्यन्तस्य भाव इत्याशङ्कते **स्वभाव इति** । किञ्च निरवयवत्वाच्च न तस्य परिणामो युज्यते । कुत इत्यत आह **न चेति** । ननु निरवयवस्याप्याकाशस्य संयोगोपादानत्वमिव प्रकृतेऽपि स्यादित्याशङ्कते **आकाशमिति** । तथापि निरवयवपरमाण्वादीनां द्व्यणुकाकारपरिणामवत्स्यादित्यत आह **परमाण्वादयस्त्विति** ।

**शे०वा०**— नन्वेकत्वेऽपि विकृतत्वे बाधकाभावेनाप्रयोजकत्वान्नैकत्वस्याविकृतत्वे हेतुत्वं युक्तम् । एकस्यापि मृत्पिण्डादेर्घटाद्यात्मना विकृतत्वदर्शनेन व्यभिचारश्चेत्यतोऽविकृतत्वोपपादकतया द्वेधा व्याचष्टे **अद्वितीयमित्यादिना** ।

एवं व्याख्यानद्वयेन कथमुक्तदूषणद्वयपरिहार इत्यतस्तं दर्शयितुमत्र सम्भावितपक्षद्वयं विकल्प्याद्यपक्षं बहिरेव प्रदूष्य द्वितीयपक्षदूषणपरतया मूलं योजयितुं विकल्पयति **तथा हीति** । मृदादेर्घटाद्यात्मना परिणामस्य कारणान्तरसापेक्षत्वस्यैव दर्शनेनानपेक्षपरिणामादृष्ट्या परिणाममात्रस्य कारणान्तराधीनत्वनियमस्थितेरसहायस्य ब्रह्मणो न प्रपञ्चात्मना परिणामः सम्भवतीत्याशयेनाह **नाद्यः क्वाप्यदर्शनादिति** । ननु यः परिणामः स परिणामिभिन्नकारणान्तरसापेक्ष एवेति नायमस्ति नियमः । असहायस्यैव क्षीरस्य दध्यात्मना परिणामदर्शनेन तत्र व्यभिचारात् । तथा चासहायस्यापि ब्रह्मणो विश्वात्मना परिणामो भविष्यतीत्याशङ्कते **यदपीति** । **उदाहृतमिति** । 'उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धी'त्यत्र मृदादेर्घटादिपरिणामस्य कुलालदण्डादिसापेक्षत्वदर्शनादसहायस्य ब्रह्मणः कथं परिणाम इत्याशङ्क्य यथा क्षीरजलयोरसहाययोरेव दधिहिमभावेन परिणामस्तथाऽसहायस्यैव ब्रह्मणो विश्वात्मना परिणाम इत्यसहायस्यैव ब्रह्मणः परिणामे क्षीरं निदर्शनतयोदाहृतमित्यर्थः । स्यादेवं ब्रह्मणोऽसहायस्यापि परिणामो यदि क्षीरादेरसहायस्यापि दध्याद्यात्मना परिणामः सिद्धः स्यान्न चैतदस्ति । त्वत्पक्षेऽपि क्षीरादेर्दध्यादि परिणामे कालप्रकृतिकर्मादिः सहकारिणः सत्त्वेन तदनपेक्षत्वव्युत्पादनस्य सिद्धान्तविरुद्धत्वादित्याह **तत् कालादेरिति** । यद्यपि क्षीरादेर्दध्यादिपरिणामस्यातञ्चनादिकारणत्वस्य अन्वयव्यतिरेकसिद्धत्वात् तथैव वक्तुमुचितम्, अत एव चन्द्रिकायामपि तदेव प्रथममुद्भाव्य किञ्चेति दूषणान्तरपरतयैवेदं





दूषणमुपवर्णितम्; तथाऽपीह टीकायां 'पराधीनविशेषाप्तिरनिवर्त्योऽन्यथाभाव' इति विकारविभागपरवाक्य-व्याख्यानावसरे दध्यात्मना परिणामस्यातञ्चनादिकारणान्तरसापेक्षत्वस्योपवर्णितत्वेन तत एव ज्ञातुं शक्यत्वा-दत्रानुद्भावनम् । चन्द्रिकायां तु तत्रोक्तमत्रोक्तं च दूषणं सङ्कलय्य परपक्षनिरासकतया व्यापारितमिति ध्येयम् । अस्तु जडेषु पराधीन एव विकारः । अचेतनत्वेनेच्छाऽसम्भवेन स्वेच्छया विकारासम्भवात् । ब्रह्मणस्तु चेतनत्वात्स्वेच्छयैव विकारो नानुपपन्नः 'तदात्मानं स्वयमकुरुते'ति श्रुतेरिति भावेन शङ्कते **स्वेच्छयैवेति चेदिति** । **प्रयोजनाभावादिति** । स्यादेवं कथञ्चिद्यदि ब्रह्मणः प्रपञ्चभवनेच्छोपपन्ना स्यान्न चेयमुपपद्यते । तथा हि । स्वर्गादेरिव प्रपञ्चभवनस्य स्वतः पुरुषार्थत्वाद्ब्रह्मणस्तदिच्छा अभिप्रेयते । यागादेरिव पुरुषार्थसाधन-त्वाद्वा । नाद्यः । नानाविधानर्थरूपप्रपञ्चभवनस्यापुरुषार्थतया ब्रह्मणस्तदिच्छाऽयोगात् । नान्त्यः । तस्य प्रयोजनान्तरशून्यत्वादिति भावः । स्वभावत्वात्प्रपञ्चभवनेच्छाया न प्रयोजनापेक्षत्वमिति शङ्कते **स्वभावो-ऽयमिति चेदिति** । **प्रेक्षावत्त्वहानेरिति** । न ह्युन्मत्तोऽप्यात्मनोऽनर्थरूपतामिच्छति दूरे प्रेक्षावानिति न प्रेक्षा-वतो ब्रह्मणो नानाविधानर्थप्रपञ्चभवनेच्छास्वभावत्वं युक्तम् । न च प्रपञ्चस्यानर्थरूपत्वाज्ञानात् तद्भवनेच्छा प्रेक्षावतोऽपि ब्रह्मणो युक्तेति वाच्यम् । असर्वज्ञत्वापातात् । न च सर्वज्ञस्य तदाश्रयितुं युक्तमिति भावः ।

अस्तु तर्हि द्वितीयो निरवद्यत्वादित्यत आह **नेति** । **अद्वितीयत्वादिति** । 'सदेव सोम्येदमग्र आसीदि'ति प्राक् सृष्टेर्वस्त्वन्तरनिषेधान्न ब्रह्मणो विश्वाकारपरिणामः असहाय इति भावः । ब्रह्म न परिणामि निरवयवत्वाद्व्यतिरेकेण मृदादिवदित्यनुमानमभिप्रेत्य तन्मूलभूतव्याप्तिमुपपादयति **न चेति** । यदि हि क्वापि देशे काले वा किञ्चिदपि निरवयवं परिणामि दृष्टं स्यात् तदेयं व्याप्तिर्भज्येत, न चैवमित्यर्थः । गगनादेर्निरव-यवस्यापि गुणक्रियाद्यात्मना परिणामदर्शनादनैकान्त्यमित्याशङ्कते **आकाशमिति** । स्यादाकाशादावुक्तरीत्या व्यभिचारो यदि परिणामित्वाभावमात्रं साध्येत । न चैवम् । किं नाम द्रव्याकारेणापरिणतत्वेन । तच्च निरव-यवस्य गगनादेरस्त्येवेति कथमनैकान्त्यमित्याह **द्रव्येति** । ननु वैशेषिकादिमते निरवयवानामपि परमाणूनां द्व्यणुकादिद्रव्यात्मना परिणतत्वात् तत्र व्यभिचारः । तथा साङ्ख्यमते निरवयवस्यापि प्रधानस्य महदाद्यात्मना परिणामात् प्रधानेऽपि व्यभिचारः । न च नैव तैर्निरवयवं प्रधानमभ्युपगम्यते । सत्त्वरजस्तमांसि त्रयो गुणाः तेषां साम्यावस्थैव प्रधानम् । तच्च तैरेवावयवैः सावयवमिति परसिद्धान्तादिति वाच्यम् । सत्त्वरजस्तमसा-मप्येकैकस्य समानं निरवयवत्वमेकैकमेव चेतरद्वयानुगृहीतं स्वसजातीयस्य प्रपञ्चस्योपादानमित्युपादानस्य निरवयवत्वापरिहारादित्यतः स्यादेतदेवं यदि निरवयवत्वादिरूपेण परमाण्वादि सिद्धं स्यान्न चैतदस्तीति न तत्रानैकान्त्योद्भावनाऽवसर इति भावेनाह **परमाण्वादयस्त्विति** ।

**वा०र०— द्वेधेति** । एकपदमिति शेषः । तथापाठस्तु स्पष्ट एव । ऊर्णनाभ्युपभुक्तेति पाठः । उपयुक्तेत्यपि मूलानुसारी पाठश्चेन्न दोषः । **इति नायमिति** । इत्ययं नियमो नास्तीति सम्बन्धः । 'नैव स स्याद्धरेः क्वचिदि'ति प्राचीनानुव्याख्यानरूपमूलानुसारेण अवतारयति **अस्तु जडेष्विति** । स्वर्गादेरिवेत्यतः प्राक् किंशब्दयुक्तः पाठः । उक्तस्थलीयमूलानुसारेणाह **न ह्युन्मत्तोऽपीति** । **गगनादेरिति** । अत्रादिपदेन मन





आत्मनोर्ग्रहणेनाकाशमिति मूलं उपलक्षणमिति सूचितम् । गुणक्रियादीत्यादिपदेन अभावग्रहणम् । संयोगादिमदिति मूले संयोगसमकक्षविभागशब्दयोरिव तदसमकक्षकर्मादिरपि ग्रहणम् । तथा च गुणत्वेन संयोगादीन् विवक्षित्वा कर्मादींश्च तद्रूपं विवक्षित्वा मूलं व्याख्यातं **गुणक्रियाद्यात्मनेति** । तत्र गगने क्रियाया अभावेऽपि गुणाभावयोः सत्त्वान्मनसि गुणादेस्त्रितयस्यापि भावात् आत्मन्यपि गुणाभावयोः सत्त्वात् तेषां तत्तदात्मना परिणामो दृश्यत इत्यर्थः । एतेन गगनस्य क्रियाभावादादिशब्दसङ्ग्राह्या प्रतीतिश्चेति निरस्तम् । अत्र च गुणाद्यात्मना परिणामो नाम विशिष्टान्तरोत्पत्तिः । विशिष्टं च विशेष्यात्मकमिति विशेष्यस्यैव पूर्वसिद्धस्य परिमाण इति विवक्षितः । परिमाणोऽभिप्रेतो मूलटीकयोः । उत्तरत्रापि द्व्यणुकादि द्रव्यात्मनेति परिणामप्रतिपादनं च वैवक्षिकपरिणामाभिप्रेत्य एवंविध एव परिणामे अयमारम्भ इति वैशेषिकादयः । परिणाम इति परिणामवादिन इत्येवं नाममात्र एव विवादः । तेन वैशेषिकादिमते परमाणूनां परिणामाभावात् असदनुवाद इति शङ्का निरस्ता भवति । वैशेषिका ह्येतद्गुणसंविज्ञानबहुव्रीहिणा परिणामवादिनामेव ग्रहणमिति वा । वैशेषिकादीत्यादिपदोक्तपरिणामिवादिसहकारेण समुदाये छत्रिन्यायेन लक्षणयाऽत्र प्रवृत्तिरित्यप्याहुः । तत्रोक्तसाङ्ख्यप्रक्रियानुसारेण शङ्कते **न च नैव तैरिति** । निरवयवत्वादिरूपेणेति परमाण्वादेः स्वं यद्रूपं निरवयवत्वादि तेन रूपेणेति मूलं योजितं भवति **न चैतदिति** ।

**विट्ठल०— अपव्याख्यानमिति** । मायिव्याख्यानमित्यर्थः । तत्र तावदद्वितीयत्वस्याविकृतत्वोपपादकत्वं दर्शयति **किं ब्रह्मण इति** । स्वत एवेत्यत्रापि स्वयमेवेति वा स्वेच्छयैवेति विकल्पं मनसि निधायाद्यं दूषयति **नाद्यः काप्यदर्शनादिति** । निमित्तान्तरमनपेक्ष्य स्वयमेवान्यात्मना विकारित्वस्य क्वाप्यदर्शनादित्यर्थः । **कालादेरिति** । कालोत्तञ्चनादेः क्षीरस्य दध्याकारपरिणामे कारणत्वादिति भावः । द्वितीयमाशङ्क्य निराकरोति **स्वेच्छयैवेति** । प्रेक्षावत्वेऽपि प्रयोजनं विनानर्थात्मकप्रपञ्चविकारस्वभावत्वाङ्गीकारे प्रेक्षावत्वहानेरित्यर्थः । किं वा परत इति पक्षं दूषयति **न द्वितीय इति** । निरवयवत्वस्यापि अविकृततायां हेतुत्वमुपपादयति **न चेति** । ननु निरवयवत्वस्याप्याकाशस्य संयोगविभागाद्याकारेण परिणामादित्याशङ्क्य निराह **आकाशमिति** । ननु वैशेषिकादिमते निरवयवानां परमाणूनामिव शून्यवादिमते शून्यस्येव परिणामो भवत्वित्यत आह **परमाण्वादय इति** ।

**चषकः**— ननु न्यायनये निरवयवानां परमाणूनां शून्यवादिनये च तादृशशून्यस्य परिणामदर्शनान्निरवयवं न परिणमतीति कथमित्यत आह **परमाण्वादय इति** ।

**१०५ सु०— अविकृतमेवान्यदन्यात्मना दृश्यत इत्यसम्भवि इत्यत उक्तम् मृषेति । मृषाशब्देन विश्वस्य ब्रह्मतादात्म्यस्य तद्दर्शनस्य चानिर्वचनीयतोच्यते । यथा रज्जुरविकृतैव मृषा भुजङ्गाद्याकारेणाभासते तथैवेति । तर्हि विश्वोपादानमन्यद्वक्तव्यमित्यत उक्तम् मन्ददृष्ट्यैवेति । मन्दा भवति दृष्टिः यया सा मन्ददृष्टिः तया माययेत्यर्थः ।**





**अथवाऽसम्भवपरिहारार्थमुक्तम् मन्दद्दष्ट्यैवेति । मन्दा चासौ दृष्टिश्च मन्ददृष्टि- र्भ्रान्तिस्तयेत्यर्थः । भ्रान्तेरपि याथार्थ्याद्विश्व(स्य)सत्यतापत्तिरित्यत उक्तम् मृषेति । तदेतन्मिथ्याप्रपञ्चारोपाधिष्ठानत्वमेव ब्रह्मणः प्रकृतिश्चेत्यादिना कथ्यत इति ।**

**परि०—** **असम्भवेति** । अनिर्वचनीयेनापि प्रमारूपज्ञानेनान्यदन्यात्मना दृश्यत इत्य- स्यासम्भवात् तत्परिहारायेत्यर्थः । **भ्रान्तेरपि याथार्थ्यादिति** । भ्रमरूपज्ञानस्य सत्यत्वात् तद्विषय- तत्कारणादेरपि सत्यत्व(स्य)ावश्यम्भावात् । अन्यथा अर्थसन्निकर्षादिसामग्र्यभावे तदुत्पत्तेरेवा- योगादिति भावः । **मृषेतीति** । भ्रान्तिरप्यसत्येत्यर्थः । 'स सर्ग इति कथ्यत' इत्यस्यार्थान्तरमाह **तदेतदित्यादिना** । इतिपदपरामृष्टं दर्शयति **प्रकृतिश्चेत्यादिना** । यद्वा प्रकृतिरिति पदं इतिशब्दा- त्पूर्वमनुवर्त्य अस्यार्थोक्तिः **प्रकृतिश्चेत्यादिनेति** ।

**यादु०—** नन्वस्मिन् व्याख्याने मृषेति व्यर्थमित्यत आह **भ्रान्तेरपि याथार्थ्यादिति** । भ्रान्तिरूप- ज्ञानस्य सत्यत्वात् तद्विषयस्य विश्वस्यापि सत्यतापत्तिरित्यर्थः ।

**वं०प०—** **असम्भवीति** । अन्यस्यान्यात्मतया विकृतत्वं विनाऽसम्भवादित्याशयः । **असम्भ- वेति** । अविकृतमेवान्यदन्यात्मना दृश्यत इत्यसम्भवीति पूर्वोक्तासम्भवेत्यर्थः ।

**आनन्दः—** ननु मृषाशब्दस्यासत्त्वरूपमिथ्यापरत्वात्प्रपञ्चो मृषेत्युक्ते तस्यासत्त्वप्राप्त्यार्थं क्रियाकारित्वं न स्यादित्यत्राह **मृषेति** । विश्वपदस्यावृत्त्या एकस्यानिर्वचनीयतेत्यनेन सम्बन्धः । द्वितीयस्य ब्रह्मतादात्म्य- स्येत्यनेन सम्बन्धः । **तर्हीति** । यद्यसद्विलक्षणं तर्हीत्यर्थः । ननु यदि परिणामित्वं नार्थस्तर्हि कोऽस्यार्थ इत्यत आह **तदेतन्मिथ्येति** ।

**श्रीनिधि०—** **भ्रान्तेरपि याथार्थ्याद्विश्वसत्यतापत्तिरिति** । भ्रान्तितत्कार्यरूपविश्वस्येत्यर्थः । विश्वविवर्ततया तदुपादानतयेति व्याख्यानद्वयानुसारेण ।

**शे०वा०—** भाष्ये मृषात्वादिवर्णनस्यानर्थक्यमाशङ्क्य परिहरति **अविकृतमेवेति** । मृदाद्यात्मना अविकृतस्यापि मृदादेर्मृदाद्यात्मताऽवभासदर्शनात् न तदात्मना विकृतत्वमेव तदात्मत्वाऽवभासे हेतुः । अतद्रूपस्यापि मृदादेर्घटाद्यात्मताऽवभासदर्शनात् । न तद्रूपत्वमात्रमपि तत्र हेतुः, किन्तु तदात्मना विकृतत्व- तद्रूपत्वान्यतरत्वमेवेति भावेनात्रोभयोपादानम् । ब्रह्मणश्च न प्रपञ्चरूपत्वं न वा प्रपञ्चात्मना विकृतत्वमिति न तदात्मताऽवभासः सम्भवतीत्यर्थः । मृषा दृश्यत इति सन्निधानाद्दर्शनमात्रस्यैवानिर्वचनीयता मृषाशब्देन उच्यत इति भ्रान्तिनिरासायाह **मृषेति** । ननु नैतावताऽपि ब्रह्मणः प्रपञ्चात्मताऽवभाससमर्थनं सम्भवति





तत्प्रयोजकतया क्लृप्तयोस्तद्रूपत्वतदात्मनाविकृतत्वयोः प्रकृते अनुपपादनादित्यतः स्यादेवं यदि तदात्मताऽवभासे उक्तरीत्या द्वयमेव प्रयोजकं स्यान्न चैतदस्ति । तथा सति रज्वादेर्भुजङ्गाद्यात्मनाऽनवभासप्रसङ्गात् । रज्वादेर्भुजङ्गादिरूपत्वस्य भुजङ्गाद्यात्मना विकृतत्वस्य वा तदात्मतावभासप्रयोजकस्य तत्राभावात्किन्त्वन्यदपि । तथा च रज्वादेर्भुजङ्गाद्यात्मताऽवभासे उक्तप्रयोजकद्वयाभावेऽपि तदारोपाधिष्ठानत्वेन तदात्मताऽवभासवत् ब्रह्मणो विश्वात्मताऽवभासस्याप्युक्तनिमित्तद्वयाभावेऽपि निमित्तान्तरेण विश्वात्मताऽवभाससम्भवान्नासम्भव इत्याशयेनानुरूपं दृष्टान्तमाह **यथेति** । तथाऽपि मन्ददृष्टैवेति मायोपादानकत्ववर्णनमनर्थकमित्यतो ब्रह्मण उपादानत्वाभावे निरुपादानोत्पत्तिप्रसङ्गरूपबाधकपरिहारार्थं तदिति भावेन तां शङ्कामुत्थापयति **तर्हीति** । **अन्यद्वक्तव्यमिति** । निरुपादानभावसृष्टेरयोगात् ब्रह्मणश्चोक्तरीत्याऽनुपादानत्वात् रज्वारोपितभुजङ्गाद्युपादानाज्ञानोपादानकत्वे तद्वदेव प्रातिभासिकत्वापत्त्याऽर्थक्रियाकारित्वाभावप्रसक्तेः तद्विलक्षणमेवोपादानं वाच्यमित्यर्थः । नन्वविकृतस्यापि प्रपञ्चात्मताया भ्रान्त्याऽवभास इत्येवोक्त्या, उपादानानुक्तेर्नोक्तशङ्कापरिहार इत्यत प्रकृतोपयोगितया व्याचष्टे **मन्देति** । तथा च आविद्यकत्वमायिकत्वाभ्यामर्थक्रियानर्हत्वतदर्हत्वव्यवस्था युक्तेति भावः । मृषेत्यस्यासम्भवपरिहारकत्वं न श्लिष्टमित्याशयेन पक्षान्तरमाह **अथवेति** । **असम्भवेति** । अविकृतस्यैवान्यस्यान्यात्मतादर्शनासम्भवेत्यर्थः । उक्तरीत्या व्याख्यानस्य शङ्कितासम्भवपरिहारानुपयोगितया असम्भवात् प्रकारान्तरेण व्याचष्टे **मन्दा चेति** । तर्ह्यनेनैव असम्भवशङ्कापरिहारात् भाष्ये मृषेत्यंशानर्थक्यमित्यतः तत्प्रयोजनमाह **भ्रान्तेरपि याथार्थ्यादिति** । सत्यत्वादित्यर्थः । घटः सन्नित्यादिना घटादेरिव भ्रम आसीदित्यादिलौकिकप्रतीतिप्रयोगाभ्यां तत्सत्यत्वसिद्धेरित्यर्थः । **विश्वसत्यत्वेति** । परमते भ्रमस्यार्थज्ञानात्मकत्वेन, तस्य सत्यत्वे, तद्विषयस्य विश्वस्यापि सत्यत्वस्यावश्यकत्वादित्यर्थः । यद्वा विश्वसत्यत्वापत्तिः भ्रान्तिरूपस्य विश्वस्य सत्यत्वापत्त्या, सदद्वैतभङ्ग इति भावः । अत उक्तं **मृषेतीति** । तथा च भ्रान्तेरप्यसत्यत्वान्न सदद्वैतभङ्ग इत्युक्तं भवति । नन्वस्त्वेवं प्रपञ्चारोपाधिष्ठानत्वं ब्रह्मणः, तथाऽपि न प्रकृतिरिति प्रतिज्ञातोपादानत्वसिद्धिरित्यतः, सूत्रे प्रकृतिशब्देन प्रपञ्चारोपाधिष्ठानत्वस्यैव विवक्षितत्वं मूलारूढं कर्तुं, तदनुगुणमेव शेषं पूरयति **प्रकृतिश्चेत्यादिनेति** ।

**वा०र०**— कार्यद्रव्यं स्वपरिणामादनुतरपरिमाणारब्धं कार्यद्रव्यत्वात् पटवदित्यनुमानं तावन्न युक्तम् । दीर्घविस्तीर्णैर्दुकूलैः क्रियमाणरज्जुद्रव्यस्य कार्यत्वदर्शनेनानैकान्त्यात् न किञ्चिदपि कार्यद्रव्यं निरवयवद्रव्यसंयोगपुरस्सरं प्रचयात्मकत्वात् घटवदिति प्रत्यनुमानपराहतेश्च । एवमन्येषामपि दूषणेन परमाणूनां निरवयवत्वेन सिद्धिर्नास्ति तथा सर्वे विकारा अविभक्तैकप्रकृतिकाः परिमितानेकविकारत्वात् तथा मृत्पिण्डप्रकृतिकाः शरावादय इति साङ्ख्यानुमानमप्ययुक्तम् । अत्र परिमितत्वं किं वस्तुतः उत देशतः अथ कालतः । नाद्यः, गुणपुरुषाणामपि वस्तुतः सकाशात्परिमितत्वेन व्यभिचारात् न द्वितीयतृतीयौ । घटादि हि मकरादिषु देशकालपरिमितत्वे विद्यमानेऽपि मृदुदकरूपप्रत्यक्षदृष्टभिन्नप्रकृतिकत्वसद्भावेन व्यभिचारात् । एवमनुमानान्तरमपि दूष्यम् । ततश्च प्रमाणाभावात् प्रधानस्य निरवयवत्वेन तेषां सिद्धिः नास्तीत्यर्थः । अत्र च आदिपदेन शून्यवाद्याद्युक्तशून्य-





पशुपत्यादिकं विवरणोक्तं बोध्यम् । तन्निरवयवत्वस्यापि तत्र निरासात् उक्तनिमित्तद्वयाभावेऽपि निमित्तान्तरेण सम्भवादिति पाठः सुगम एव । विश्वात्मतावभाससम्भवादिति पाठे तु पूर्वस्य षष्ठ्यन्तस्याभावेऽपीत्यनेन अन्वयमात्रम्, न तु सम्भवादित्यनेनापि इति न वैय्यर्थ्यमिति ज्ञेयम् । अस्तु प्रातिभासिकत्वमपीत्यत आह **अर्थक्रियेति** । अज्ञानोपादानकत्वपक्षे अर्थक्रियाकारित्वाभावप्रसङ्गमुद्धरति **तथा च अविद्यकत्वेति** । अज्ञान-सामान्योपादानकत्वेऽपि तदवान्तरविशेषाभ्यां व्यवस्थेत्यर्थः । **न श्लिष्टमिति** । यद्यप्यत्र मन्ददृष्टिपदेन मायाया भ्रान्तेश्च ग्रहणायैवोभयथा योजनायाः कृतत्वम् । अत एव वक्ष्यति मूलकारः **विवर्ततया तदुपादानतया चेत्यर्थ इति** । तथा च नाश्लिष्टत्ववचनोपपत्तिः । प्रकारान्तरलाभार्थं व्याख्यानान्तरमित्येव वर्णनीयत्वात् तथापि प्रकारान्तरलाभाय कृतयोजनायामिवाद्ययोजनायां मृषेत्यस्य न स्वारस्यं वस्तुतोऽस्तीति दर्शयितुमेवमुक्तम् । अन्यस्यान्यात्मना दर्शनमसम्भावितमित्याशङ्कायाः भ्रान्तेत्यर्थकमन्ददृष्टेत्यनेनेव मृषापदार्थात्मनेत्यनेन परिहारस्य स्पष्टमभावात् । एकेनैव परिहारसम्भवे विशेषणद्वयं व्यापाराश्रयणवैय्यर्थ्यं च पूर्वपक्षे । अत एव वक्ष्यति **तर्ह्यनेनैवेति** । तथा न दृश्यत इति शङ्कायां भ्रान्तिरूपं दर्शनमस्तीत्युक्ते परिहारो भवति । तद्दर्शनं मिथ्येत्युक्ते दर्शनाभावशङ्काया न परिहारः । दर्शनसद्भावप्रतिपादनोत्तरं तत्सत्यत्वशङ्कापरिहाराय तन्मिथ्यात्वप्रतिपादनस्य सङ्गतत्वात् ।

न हि मिथ्येत्येतद्यथार्थभूतार्थविषयकत्वरूपप्रमात्वविपरीतभ्रान्तित्वप्रतिपादकतया योजयितुं शक्यं येनोक्तशङ्कापरिहारः स्यात् । तथात्वे प्रमाविपरीतत्वप्राप्त्या विषयीकृतार्थस्य सत्यत्वालाभेऽपि घटादितुल्य-सत्यत्वप्रयुक्ता विश्वसत्यतापत्तिः स्यादेवेति तत्परिहाराभावप्रसङ्गः । योजनान्तरे तु तत्परिहारोऽस्तीति वैषम्य-मिति ज्ञेयम् । याथार्थ्यादित्यस्य यथास्थितार्थविषयकत्वादिति प्रतीयते । तथात्वे च व्याघातः भ्रान्तिपदेन अयथावस्थितार्थविषयकत्वस्यैवोक्तेरित्यतो व्याचष्टे **सत्यत्वादित्यर्थ इति** । ननु यथार्थपदस्य यथाव-स्थितार्थज्ञेयविषयकत्वार्थत्वेन सत्यत्वार्थत्वाभावादुक्तव्याख्यानायोग इति चेन्न । किं यथार्थशब्दो न कुत्रापि सत्यत्ववाचीत्यभिमतम्, उतात्रैव । नाद्यः याथातथ्यतोऽर्थानित्यादि व्याख्याने यथार्थनिव महदादीनीत्यादि शास्त्रे लोके च घटादौ यथार्थ इति आरोपिते च अयथार्थ इत्यभियुक्तानभियुक्तसाधारण्येन प्रयोगस्य सद्भावेन कुत्रापि तदर्थत्वाभावायोगात् । नान्त्यः भ्रान्तेर्यथात्वस्य यथावस्थितार्थविषयकत्वरूपस्य व्याघातेनासम्भवेन सत्यत्वार्थत्वे बाधकाभावेनात्रापि तदर्थत्वानङ्गीकारायोगादिति द्रष्टव्यम् । **घटः सन्नित्यादिनेति** । ननु घटादेः घटः सन्नित्यादि प्रत्ययाश्रयणेन सत्यत्वानङ्गीकारात् कथं तद्दृष्टान्तेन भ्रान्तेः भ्रम आसीदित्यादि प्रयोगादिना सत्यत्वापादनं दृष्टान्तस्य साध्यवैकल्यप्रसङ्गात् । तत्र तत्प्रत्ययबलेन सत्त्वाङ्गीकारे च भ्रान्तिसत्यत्वेन विश्वसत्यत्वापादनायोगः । घटादिवत्सर्वस्यापि सत्यतायाः सिद्धत्वेनेष्टापादनत्वप्रसङ्गात् सदिति प्रतीतिमात्रेण सत्यत्वसिद्ध्यङ्गीकारे इदं रजतमिहास्तीति प्रतीत्या शुक्तिरजतस्यापि सत्यत्वप्रसङ्गाच्चेति चेन्न । अत्र हि मायिरीत्या तत्प्रक्रियाव्युत्पादनं क्रियते । तत्र भ्रान्त्या ब्रह्म विश्वात्मना प्रतीयत इत्युक्ते भ्रम आसीदिति भ्रान्तिसत्यत्वव्यवहारात् सा परमार्थसतीति परीत्या प्राप्तम् । विश्वसत्यत्ववादिभिः घटादेः सत्त्वप्रतीत्या





परमार्थसत्त्वाभ्युपगमात् । अतो भ्रान्तेर्मिथ्यात्वं वाच्यम् । सत्त्वप्रतीतिस्तु व्यावहारिकसत्त्वविषया । अतो न भ्रान्त्या घटादेः पारमार्थिकसत्त्वापत्तिरित्याशयेन मृषेत्युक्तमिति वाक्यार्थः प्रतीयते । तत्र कुतो दृष्टान्ते साध्यवैकल्यम् । न ह्यत्रापादनं मायिनं प्रति सत्यत्ववादिना क्रियते । येन घटादौ दृष्टान्ते साध्यवैकल्यं शङ्क्येत । अत एव सर्पभ्रमादावपि हीत्यनुपदमेव वक्ष्यमाणानुव्याख्यानमूले नाभूदत्र सर्प इतिवन्न सर्पज्ञानं ममाभूदिति बाधकानुदयात् अभूदित्येतावाननुवृत्तेश्च भ्रमत्वस्य विषयवैपरीत्यमात्रेणोपपत्तेरित्यादि वक्ष्यते । एकजीवाज्ञानवादनिराकरणस्थलीयतद्विषयस्यैवान्यथात्वं भ्रान्ताविति तत्त्वनिर्णयटीकायाम् । ननु यद्यारोपितार्थज्ञानं सत्यं स्यात् तदा कथं मिथ्याज्ञानमिति व्यपदेश इत्यादिकमुक्तं तथा जिज्ञासाधिकरणे अज्ञाननिराकरणस्थले तथात्वे याथार्थ्यमपि स्यादिति चेन्न । स्वरूपसतोऽपि विषयसत्त्वेनायथार्थत्वोपपत्तेः । न हि स्वरूपसतोऽपि विषयसत्तया भाव्यमिति नियमोऽस्ति । साक्षिचैतन्ये व्यभिचारादित्यादि मूलोक्तिः । किञ्च स्वात्यन्ताभावसमानाधिकरणत्वं मिथ्यात्वमित्यादिपक्षेषु संयोगविभागशब्दात्मविशेषणाख्यप्रदेशवर्तिनामिव वियदादीनां सत्यत्वेऽपि स्वात्यन्ताभावसमानाधिकरणत्वोपपत्त्या मिथ्यात्वं नायातीत्यादिकं सत्यत्ववादिदूषणं परं प्रति न प्रसज्येत ।

न हि संयोगादेः सत्यता परेणाङ्गीकृता । तथा तद्दोषपरिहाराय परोऽपि दृष्टान्तासङ्गतिं ब्रूयात् । ननु संयोगादिव्यावर्तनाय । व्याप्यवृत्तित्वानाधिकरणत्वादिना विशिष्यात् तत्त्वप्रदीपिकादौ मिथ्यात्वादिनिर्वचनाद्यवसरे ज्ञाननिवर्त्यत्वादिपक्षेषु पूर्वपूर्वज्ञानसुखादिषु उत्तरोत्तरज्ञानादिनाश्यत्वस्य सत्त्वेऽप्युपपत्तेरित्यादेः पररीत्या प्रतिपादनाच्च । न ह्यत्रापि स्वरीत्या मायी वदतीत्यङ्गीकृतम् । पररीत्यैवेत्युक्तत्वात् । तस्मादत्र सत्यत्ववादिना मायिनं प्रत्यापादानाकरणेन तद्दृष्टान्ते आपाद्यवैकल्यस्य मायिनोद्भावयितुमशक्यत्वात् विश्वसत्यत्वापादने इष्टापत्तेरपि वक्तुमशक्यत्वात् युक्तं सत्यत्वोपपादनम् । अत एव शुक्त्यादौ सत्यतामिश्रित्यारोपितस्य मिथ्यात्वं सिद्धवत्कृत्य आरोपितं दृष्टान्तीक्रियते । ततश्चायं निष्कर्षः मायिना मिथ्यात्वसाधनावसरे सत्यत्ववादिनः सत्यत्वेन सम्मतं मध्यस्थीकृत्य यन्मिथ्यात्वेन सम्मतं तदेव दृष्टान्तीकार्यम् । तदवसरेऽपि मया सर्वस्य मिथ्यात्वाङ्गीकारात् संयोगादिवदुपपत्तेरित्ययुक्तमिति मायिना न वाच्यम्, किन्तु तत्परिहाराय विशेषणप्रक्षेपादिकं कार्यम्, तद्वदेव प्रकृतेऽपि भ्रान्त्या प्रतीयते इत्युक्त्यनन्तरं यदि भ्रान्तिरपि घटादिवत् सत्या तर्हि न मन्मते तया विश्वस्य कल्पितत्वं सिद्ध्येत् । अतः सत्त्वानुवेधस्याधिष्ठाननिमित्तकत्वे भ्रान्तौ सत्यत्वाभावान्न विश्वसत्यताप्रसङ्ग इत्यादिकमेव परेणोपपादनीयम् । अत एव घटादावपि स्वातन्त्र्येण सत्त्वप्रसङ्गे अधिष्ठानानुवेध एव तु घटगता सत्तेत्यादिकमुपपाद्यते परैः । सर्वमेतत्परग्रन्थे तदनुवादरूपस्वग्रन्थे च तत्र तत्र स्पष्टमित्युपरम्यते । सदिति प्रतीतिमात्रेण सत्यत्वसिद्ध्यङ्गीकारे इदं रजतमिहास्तीति प्रतीत्या शुक्तिरजतस्यापि सत्यत्वापातादिति तु दूषणमात्रम् । न हि कोऽपि बाधितप्रतीत्या अर्थसत्त्वमङ्गीकरोति येन तादृशप्रतीत्या तदापादानं सङ्गच्छेत । न च विश्वभ्रमसत्त्वप्रत्ययस्यापि बाधितत्वान्न सत्त्वप्रतीत्या सत्त्वसिद्धिरिति वाच्यम् । ब्रह्मप्रमया व्यावहारिकत्वाभिमतस्य बाध्यत्वेऽपि तदतिरिक्तप्रमाबाध्यत्वाभावेन सत्यत्वप्रसक्तिसम्भवात् । अत एव सत्यत्व-





परिहाराय ब्रह्मप्रमाबाध्यत्वरूपमनिर्वचनीयत्वोच्यते । तेन पारमार्थिकसत्यत्वस्यैव निषेधो न व्यावहारिकस्येति स्पष्टं तन्मतप्रतीतेः । अत एव व्यावहारिकसद्भ्रान्त्या विषयस्य व्यावहारिकसत्त्वमालम्ब्य पारमार्थिकसत्यत्वमेव परैर्नेत्युपपादितम् । स्वमते च पराङ्गीकृतपारमार्थिकसत्त्वसमर्थनमेव तत्र तत्र क्रियत इत्यलम् । **परमते भ्रमस्येति** । अत्र च भ्रमस्य सत्यत्वे विषयस्यापि सत्यत्वमावश्यकमित्येव वक्तुं न युक्तम् । स्वमते भ्रमस्य सत्यत्वेऽपि तद्विषयस्य सत्यत्वाभावेन अस्मद्रीत्या प्राप्तवत् सत्यत्ववारणाय मृषात्ववर्णनायोगप्रसङ्गादित्यतो मतान्तरे भ्रमस्य सत्यत्वेऽपि तद्विषयस्य सत्यत्वानापत्तावपि मतान्तरसिद्धभ्रमसत्यत्वमात्रमालम्ब्य मायिमते भ्रमस्यार्थज्ञानात्मकत्वेन ज्ञानतदर्थस्यापि सत्यत्वापत्तिरिति शङ्कोदयेन तत्परिहाराय मृषात्वप्रतिपादनासार्थक्या-दित्याशयेनोक्तम् **परमते भ्रमस्यार्थज्ञानात्मकत्वेनेति** ।

अत्र च अर्थज्ञानात्मकभ्रमस्य सत्यत्वे समुदायसत्यत्वेन समुदायान्तर्गतविश्वस्यापि सत्यत्वापत्ति-रित्यभिप्रेतमिति । अर्थज्ञानातिरिक्तविषयाभावात् तद्विषयविश्वसत्यत्वापादनानुपपत्तिरिति चोद्यानवकाशः । यद्वा तस्येत्यनेन ज्ञानमात्रं परामृश्यते तथा च ज्ञानस्य सत्यत्वेन तद्विषयस्यापि सत्यत्वं स्यादिति यथाश्रुत एवार्थः । तद्विषयस्येत्यपि षष्ठीतत्पुरुषरूपं यथाश्रुतमेव न तु पूर्वत्रेव तत्र विषयस्येति सप्तमीतत्पुरुषरूपम् । न चैवं ज्ञानसत्यत्वेन विषयसत्यत्वप्रसक्तिप्रतिपादनायोगः । सत्यत्ववादिमतेऽपि तथात्वाभावेन प्रयोजकत्व-प्रसङ्गादिति वाच्यम् । सत्यत्ववादिरीत्या सत्यतामालम्ब्य विषयावच्छिन्नस्य ज्ञानस्य सत्यत्वेऽवच्छेदकी-भूतविषयस्यापि सत्यताया यद्विशिष्टस्य यस्य तद्भवति तद्विशेषणस्यापि अतीन्द्रियसन्निकर्षादौ क्लृप्तया स्वयमप्यङ्गीकृतया व्याप्त्या प्राप्तिः सम्भवतीति उक्तप्रसक्तिप्रतिपादनोपपत्तेः । न चैवं सति परमते भ्रमस्ये-त्युपपादनं व्यर्थं प्रसज्यत इति वाच्यम् । न केवलमुक्तप्रक्रियया विषयसत्यत्वापत्तिः किन्तु भ्रमसत्त्वेनाभि-मतज्ञानसमकक्षविषयस्य भ्रमैकदेशज्ञानसत्यत्वप्रसञ्जकमेव तदेकदेशविषयस्यापि सत्यत्वप्रसञ्जम् । भ्रमः सत्य इत्युक्ते ज्ञानार्थयोरविशेषेण सत्यत्वप्रतिभासादिति युक्त्यापि विषयसत्यत्वप्रसक्तिरित्याशयेन भवेदेवं यदि भ्रमस्योभयात्मता स्यान्न चेयमस्तीत्यतः मतान्तरे तदभावेऽपि परमते भ्रमस्योभयरूपता अस्तीति नानुप-पत्तिरिति प्रतिपादनार्थत्वेन सार्थक्योपपत्तेः । यद्वैतदस्वरसादेवाह **यद्वा विश्वेति** । अत्र पक्षे विश्वसत्यता-पत्तिरिति न यथाश्रुतं पूर्णं प्रसञ्जकविशेषप्रसङ्गात् किन्तु विश्वसत्यताप्यनुवादेन अनिष्टान्तरदानाभिप्रायकमेव असदनिष्टान्तरपर्यवसन्नं ततो न कश्चिद्दोष इति सूचयत् विश्वसत्यतापत्तिप्राप्तमनिष्टान्तरं दर्शयति **सदद्वैतेति** । न च यथा प्रमा प्रमैव न तथा भ्रमो भ्रम एव किन्तु नृसिंहाकारं विज्ञानम् । तथा चेदं रजतमिति ज्ञानस्य सम्बन्धांशेऽप्रमात्वेऽपि धर्म्यंशारोप्यांशयोः प्रमात्वेनारोप्यांशस्य सत्यताया दृष्टत्वात् प्रकृतेऽपि भ्रान्तेर्यथार्थत्वे आरोप्यांशस्य विश्वस्य सत्यत्वापत्तिरिति प्राचीनटीकोक्तरीत्या कुतो न व्याख्यातमिति वाच्यम् । तद्व्याख्यानेऽपि अन्यथाख्यातिमतोपजीवनेन सत्यताप्रसक्तेर्वक्तव्यतया रीत्यन्तराश्रयणेन प्रसक्तिप्रतिपादन-स्योभयत्र साम्ये विशेषमपर्यालोच्य व्याख्येयताशङ्कामात्रस्याकर्तव्यत्वात् । किञ्च अस्मद्रीत्या प्रसक्तिप्रतिपादने मृषापदकृत्यमायाति । अन्यत्र तु न । अन्यत्र विषयसत्त्वस्य मायिनेवास्माभिरप्यनभ्युपगमेनास्मद्रीत्या





ज्ञानसत्यत्वेऽपि विषयसत्त्वानवकाश इति सत्यत्वप्रसक्तिनिवारणस्य कर्तुं शक्यतया मृषापदवैय्यर्थ्यमेव स्यात् । भ्रम आसीदिति प्रतीतिसिद्धभ्रमसत्यत्वमालम्ब्य अन्यथाख्यातिवादिपरिकल्पितारोप्यांशे भ्रमत्वालम्बनायोगाच्च । तन्मतेऽपि संसर्गतादात्म्ययोरारोप्यतया रजतस्याप्यारोप्यत्वाभावेनारोप्यसत्यत्वोक्त्ययोगाच्चेत्यादिदूषणप्रसङ्गेन तत्त्यागोपपत्तिः ।

श्रीसत्यनाथस्वामिभिस्तु सर्वथा प्रकारान्तरेणैतद्वाक्यव्याख्यानमशक्यमिति वदन्तं शिक्षयितुं प्रकारान्तरसम्भवो दर्शितः । न तु स एवार्थ इति तेषामभिप्राय इति ज्ञेयम् ।

**स०व्र०— अथवाऽसम्भवेति** । पूर्वमविकृतमेवान्यदन्यात्मना दृश्यत इत्यसम्भवीत्यपरिहाराय मन्ददृष्टचेत्युक्तमित्युक्तम् । इदानीं तु तत्परिहाराय मन्ददृष्टचेत्युच्यत इत्यर्थः । **भ्रान्तेरपि याथार्थ्यादिति** । भ्रान्तिरूपज्ञानस्य सत्यत्वात् तद्विषयस्य विश्वस्यापि सत्यतापत्तिरित्यर्थः ।

**स०ना०— यच्चाविकृतमेवैकं ब्रह्मविश्वात्मना मृषा** इति मूलसुधायां **भ्रान्तेरपि याथार्थ्यादिति** । यथा प्रमा प्रमैव न भ्रम इति नियमः न तथा भ्रमो भ्रम एव किन्तु नृसिंहाकारं विज्ञानम् । इदं रजतमित्यस्य धर्म्यंशे आरोप्यांशे च प्रमात्वं सम्बधांश एवाप्रमात्वमिति दर्शनात् । एवं च ज्ञानस्य भ्रमत्वेन विश्वब्रह्मसम्बन्धस्य मिथ्यात्वेऽपि आरोप्यस्य विश्वस्य सत्यत्वं दुर्वारमित्यर्थः ।

**विठ्ठल०—** ननु विश्वस्यानिर्वाच्यत्वेऽपि व्यावहारिकसत्त्वाङ्गीकारेणोपादानसापेक्षत्वादुपादानं किमिति पृच्छति **तर्हीति** । **असम्भवेति** । अन्यदन्यात्मना दृश्यत इत्यस्यासम्भवपरिहारार्थमित्यर्थः । **भ्रान्तेरपीति** । भ्रान्तिरूपज्ञानस्य सत्यत्वात् तद्विषयस्य विश्वस्यापि कथञ्चित्सत्यतापत्तिरित्यर्थः । **मृषेतीति** । भ्रान्तिरूपज्ञानमप्यसत्यमिति भावः ।

**चषकः—** अथैवं कर्मधारयाश्रयणेनैवासम्भवशङ्काव्युदासात् मृषेति पदमनर्थकमित्यतः तदर्थवत्तामेतद्योजनायामपि सम्पादयति **भ्रान्तेरपीति** । **याथार्थ्यात्** स्वरूपतः सत्यत्वात् । सन् घट इत्यादिप्रतीतिव्यवहाराभ्यां घटादेरिव भ्रान्तिरस्तीत्यादिप्रतीतिव्यवहाराभ्यां तस्या अपि सत्यत्वं सेत्स्यतीति भावः । **विश्वसत्यत्वेति** । मतान्तरे विषयिताप्रत्यासत्त्याऽर्थविशेषितज्ञानस्यैव भ्रमरूपरूपतया विश्वविशेषितभ्रान्तेः सत्यत्वे तद्विशेषणीभूतविश्वस्यापि तस्यावश्यकत्वादित्यर्थः । **अत उक्तं मृषेतीति** । तथा च भ्रान्तेरप्यसत्यत्वान्न तद्विषयसत्यत्वापत्तिरिति भावः । इति स्थितम् ।

**१०६ सु०— एतदुक्तं भवति । प्रकृतिश्चेत्यादिसूत्रैरुक्तरीत्या ब्रह्मणो जगदुपादानत्वमुच्यते । उपादानत्वं च न परिणामितया । अपि तर्हि अविद्यापरिणाममृषाविश्वभ्रमाधिष्ठानत्वेनैव । अतो नोक्तदोष इति ।**





**परि०**— नन्वयमर्थः सूत्राक्षरैः न लभ्यते । न हि प्रकृतिपदमधिष्ठानार्थमित्यत आह **एतदुक्तमिति** ।

**आनन्दः**— ननु परिणामित्वस्य त्वयाऽनङ्गीकारादारोपाधिष्ठानत्वस्य च प्रकृत्यादिशब्दार्थत्वाभावादयुक्तमेतत् इत्यत आह **एतदुक्तमिति** ।

**श्रे०वा०**— ननु न ब्रह्मणः प्रपञ्चारोपाधिष्ठानत्वस्य प्रकृतिश्चेत्यादिसूत्रार्थतया वर्णनं भाष्यकारीयं युक्तम् । प्रकृतिश्चेत्यादिसूत्राणां ब्रह्मणो जगदुपादानत्वप्रतिपादकत्वस्यैव स्पष्टप्रतिभासत्वादित्यतो नेदं भाष्यं ब्रह्मणो जगदारोपाधिष्ठानत्वस्य साक्षात्सूत्रार्थताऽभिप्रायं येनोक्तदोषः स्यात् किन्तु पर्यवसन्नसूत्रार्थताभिप्रायमतो नानुपपत्तिरितिभावेन साक्षात्सूत्रार्थप्रदर्शनपूर्वकं पर्यवसानगत्या तल्लाभं दर्शयति **एतदुक्तं भवतीति** । कुतः प्रकृतिश्चेत्यादिसूत्राणां ब्रह्मणो जगदुपादानत्वप्रतिपादकत्वम् । तस्याप्यप्रतिभासादित्यतः प्रागुपन्यस्तपरिणामवादिव्याख्यानरीत्या तदिति भावेनोक्तम् **उक्तरीत्येति** । मतद्वयस्य तात्पर्यभेदे विद्यमानेऽपि योजनाप्रकारोऽविशिष्ट एवेति ज्ञापयितुमुक्तरीत्येत्युक्तम् । नन्वस्त्वेवं जगदुपादानत्वस्य सूत्रार्थत्वम् । तथाऽप्यारोपाधिष्ठानत्वस्य कथं तत्पर्यवसन्नार्थत्वमित्यतो लोके उपादानत्वस्य परिणामित्वेनेव तदारोपाधिष्ठानत्वेनापि दर्शनात् ब्रह्मणोऽप्युपादानत्वस्यान्यतराकाराश्रयणेनैव निर्वाह्यत्वात् परिणामित्वस्योक्तदोषत्वेन तेन निर्वाहप्रतिषेधे तदारोपाधिष्ठानत्वेनैव तन्निर्वाहसिद्धिरिति भवत्येवायमर्थः पर्यवसानलब्ध इत्याशयेनाह **उपादानत्वं चेति** । **न परिणामितयेति** । निर्विकारत्वादिश्रुतिविरोधादिति भावः । **उक्तदोष इति** । निर्विकारत्वबोधकश्रुत्यादिविरोधरूप इत्यर्थः ।

**वा०र०**— **योजनाप्रकारोऽविशिष्ट एवेति** । यद्यप्येवं विवर्तपरतया भाष्यादौ न सूत्रयोजनास्ति तथापि जन्माधिकरणेऽन्यत्र च तत्र तत्र विवर्तोपपादनमेतन्मूलकं परेषामिति तैरेतत्सूत्राणां तथा योजना कृतप्रायेति भावेन अपव्याख्यानान्तरमिति मूले उक्तम् । अत्रापि योजनाप्रकार इत्याद्युक्तमिति प्रतिभाति ।

**विट्ठल०**— ननु प्रकृतिरित्यादिसूत्रैर्ब्रह्मणो जगदुपादानत्वप्रतिपादनात् कथं प्रपञ्चारोपाधिष्ठानत्वं सूत्रार्थ इत्यत आह **एतदुक्तं भवतीति** ।

**॥ इति तद्व्याख्या ॥**

* * *





॥ तत्र तद्व्याख्यानिराकरणम् ॥

१०७ **सु०—** दूषयितुमुपक्रमते **कथ्यत इति । यद् ब्रह्म** विवर्तवादिना **कथ्यते,** तस्य दूषणं **कथ्यत,** इत्यावृत्त्या योजनीयम् । **तच्च नेति** नञनुवृत्तिर्वा कर्तव्या । कुतो नेत्यतो विकल्पेन पृच्छति **सेति** ।

## अनु०— सा मन्ददृष्टिस्तस्यैव ब्रह्मणः किं ततोऽन्यगा ॥

**विश्वस्य ब्रह्मविवर्तत्वे निराकर्तव्ये मन्ददृष्ट्याश्रयप्रश्नोऽनुपपन्न इत्यत उक्तम् सेति । एकस्य तत्त्वाप्रच्युतस्य पूर्वविपरीतासत्यानेकरूपावभासलक्षणविवर्ततया, तदुपादानतया, चोक्तेत्यर्थः । मन्ददृष्टावाश्रयानिरूपणादिना निराकृतायां सर्वमिदं निराकृतं भवतीति भावः । तस्यैव, यदवष्टम्भो विश्वो विवर्त इत्यर्थः । ततोऽन्यगा जीवगतेत्यर्थः । किंशब्दस्योभयतः सम्बन्धः ।**

**परि०— तच्च नेति नञोऽनुवृत्तिर्वेति** । यच्चेति श्रवणात् तच्चेति लभ्यते । 'न च प्रकृतिशब्देने'त्यतो नञनुवृत्तिर्वेत्यर्थः । अनुवृत्तिज्ञापकश्च यच्चेति चशब्द एवेति भावः । मन्ददृष्टिपदस्य भ्रमतदुपादानभूताज्ञानरूपार्थद्वयस्योक्तत्वात् तदनुरोधेन सेत्यस्याप्यर्थद्वयमाह **एकस्येति** । **असत्यानेकरूपेति** । असत्यानेकपदार्थात्मनेत्यर्थः । **तदुपादानतयेति** । असत्यानेकपदार्थतदवभासयोरुपादानतयेत्यर्थः । **यदवष्टम्भ इति** । यदधिष्ठानक इत्यर्थः ॥

**गु०दी०— यदवष्टम्भो विश्वो विवर्त** इति विश्वरूपो विवर्तः **यदवष्टम्भो** यदाश्रयस्तस्यैव ब्रह्मण इति सम्बन्धः ।

**यादु०— नञनुवृत्तिर्वेति** । 'न च प्रकृतिशब्देन ब्रह्मोपादानमुच्यते' इत्यत्रत्यस्य 'सच्च त्यच्चाभवदिति नास्य विश्वत्वमुच्यते' इत्यत्रत्यस्य वा नञोऽनुवृत्तिरित्यर्थः । परिणामव्यावृत्तं विवर्तस्वरूपं दर्शयति **एकस्येति** । एकस्यैव ब्रह्मणो यत्तत्त्वं ज्ञानानन्दादिरूपं तेनाप्रच्युतस्य पूर्वविपरीतानि यथास्थितरूपापेक्षया विपरीतान्यसत्यानि यान्यनेकानि रूपाणि तेजोऽबन्नादीनि तेषामवभासो विवर्तः । यथैकस्यैव शुक्तिकादेः शुक्तित्वादिनाऽप्रच्युतस्य पूर्वविपरीतान्यसत्यानि यान्यनेकानि रजतरङ्गादीनि तेषामवभासः । परिणामस्त्वेकस्य पूर्वरूपपरित्यागेन सत्यरूपान्तरापत्तिरूपः । अतो न विवर्ताङ्गीकारे निर्विकारत्वश्रुतिविरोध इति भावः । **यदवष्टम्भो** यदधिष्ठानकः ।





**वं०प०— नञनुवृत्तिरिति** । 'नास्य विश्वत्वमुच्यते' इत्यत्रस्थितस्य नञ इत्यर्थः । तथा च 'इति यत्कथ्यते तच्च ने'ति योजना द्रष्टव्या । **विवर्ततया** भ्रान्तिरूपतयेत्यर्थः । मन्ददृष्टिशब्देन भ्रान्तेरुक्तत्वाद् भ्रान्तिरित्यर्थः । **तदुपादानतयेति** । असत्यानेकरूपविश्वोपादानतया चोक्ता या मन्ददृष्टिरविद्या सेत्यर्थः । उभयतः किं ब्रह्मणः किं वाऽन्यगेत्युभयत्रेत्यर्थः ।

**आनन्दः— तत्त्वेति** । अप्रच्युतैकरूपस्येत्यर्थः ।

**शे०वा०—** एवं योजनायां कथ्यत इत्यस्यावृत्तिराश्रयणीया भवतीत्यरुच्या पक्षान्तरमाह **तच्चेति** । यच्चेति श्रवणात् तच्चेत्यस्य लाभेऽपि नञोऽश्रवणात् कथं तच्च नेति योजनेत्यत उक्तं **नञनुवृत्तिरिति** । 'सच्च त्यच्चाभवदिति नास्य विश्वत्वमुच्यते' इत्यत्रत्यस्य नञोऽनुवृत्तिरित्यर्थः । सेत्यस्य मन्ददृष्ट्याश्रयप्रश्नानुपपत्ति-परिहारकत्वं दर्शयितुं विवरणोक्तविवर्तलक्षणसूचनपूर्वकं प्रकृतोपयुक्तमर्थमाह **एकस्येत्यादि** । यथैकस्यैव शुक्तिकादेरप्रच्युतशक्तित्वादितत्त्वस्य शुक्तित्वादिविपरीतसत्यानेकरजतरङ्गादिरूपावभासो विवर्तस्तथाऽप्रच्युत-ज्ञानानन्दादितत्त्वस्यैव ब्रह्मणः पूर्वरूपविपरीतासत्यानेकतेजोऽबन्नादिरूपावभासो विवर्त इत्यर्थः । परिणाम-स्त्वेकस्य पूर्वरूपपरित्यागेन सत्यरूपान्तरापत्तिरूप इति तत्रैवोक्तम् । अत्र पूर्वस्वभावे स्थिते कथं तद्विपरीत-रूपप्रतिभास इत्यत उक्तम् **असत्येति** । मन्ददृष्ट्येत्यस्य द्वितीयव्याख्यानमनुसृत्योक्तं **विवर्ततयेति** । आद्यं व्याख्यानमनुसृत्योक्तं **तदुपादानतया चोक्तेति** । तावताऽपि कथमसङ्गतिशङ्कापरिहार इत्यत आह **मन्द-दृष्टाविति** । **सर्वमिदमिति** । मन्ददृष्टेरेव विवर्तत्वात् तन्निराकरणमेव विवर्तनिराकरणमिति निराकरणीयस्यैव निराकरणान्नासङ्गतिः । तथा विवर्तस्य मन्ददृष्ट्युपादानकत्वात् तन्निराकरणे तदुपादेयविवर्तस्यापि निराकृत-प्रायत्वेन विवर्तनिराकरणौपयिकतया मन्ददृष्टिनिराकरणस्य सङ्गतत्वान्नासङ्गतिरिति भावः । भाष्ये तस्यैवेति तच्छब्देन परामृष्टव्यं दर्शयति **यदवष्टम्भ इति** । यदधिष्ठानक इत्यर्थः । जडस्यापि ब्रह्मान्यत्वात् तद्गत्वं विकल्प्यत इति भ्रान्तिनिरासायाह **जीवेति** । **उभयत्रेति** । अन्यथा विकल्परूपत्वं न ज्ञायेतेति भावः ।

**वा०र०—** अतो यदवष्टम्भो विश्वो निवर्तते पञ्चमः तदेव मूलकारणं ब्रह्मेति सूत्रार्थ इत्येतज्जन्माधि-करणीयपञ्चपादिकावाक्यव्याख्यानावसरे विवर्तपदार्थकथनमेकस्येत्यादीति मनसि निधायाह **विवरणोक्तेति** । दृष्टान्तमुखेन विवर्तलक्षणं सङ्गमयितुं दृष्टान्तदार्ष्टान्तिकयोस्तदुपपादयति **यथैकस्यैवेति** । **तत्रैवेति** । एकस्य तत्त्वादित्येतद्विवरणवाक्योत्तरविवरणवाक्य एवोक्तमित्यर्थः । तत्त्वदीपनोक्तरीत्या पदकृत्यमाह **अत्र पूर्वेति** । **द्वितीयेति** । अयमिति च अनेन प्राचीनं व्याख्यानद्वयमपि ग्रन्थकृदभिप्रेतमिति । अथवेत्युक्तविकल्पो व्यवस्थया व्याख्येयः । न तु पूर्वापरितोषेण योजनाकरणात्पूर्वपरित्यागो ग्रन्थकृदभिप्रेत इति सूचयति । प्रागस्वारस्यप्रदर्शनं तु योजनान्तरे विशेषमात्रप्रदर्शनायेति न दोष इति ज्ञेयम् । तदुपादानतयेत्येतद्व्याकुर्वन्नेव प्रतीकतयोपादत्ते **तदुपादानतयेति** । मन्ददृष्ट्यामिति क्वचित्पाठेऽपि मन्ददृष्टावित्यपि बहुस्थले पाठ इत्यभिप्रायेण मन्ददृष्टाविततीति प्रतीकोपादानम् ।

**स०व्र०— तच्च नेति नञनुवृत्तिर्वा कर्तव्येति** । 'न च प्रकृतिशब्देन ब्रह्मोपादानमुच्यते' इत्यस्मात् नञनुवृत्तिः कर्तव्येत्यर्थः । **एकस्य तत्त्वाप्रच्युतस्येति** । यथा एकस्य शुक्तिकाशकलादेः शुक्तित्वादिना अप्रच्युतस्य पूर्वविपरीतानि यथास्थितरूपापेक्षया विपरीतानि असत्यानि यानि रूपाणि रजतादीनि तेषामवभासो विवर्तपदवाच्यः परिणामतया विवक्षितः तथा विवर्तवादिनां ब्रह्मपरिणामतया विश्वावभासः न तु क्षीरादिवत् तत्त्वप्रच्युत्या विकारविशेष इति दर्शयितुमिदमित्युक्तमिति ज्ञातव्यम् । **यदवष्टम्भः** यदधिष्ठानकः ।

**विट्ठल०— तच्च नेति नञनुवृत्तिरिति** । यथेत्युक्तत्वात्तथेत्यध्याहारः । प्रकृते शब्देनेत्यत्र नञोऽनुवृत्तिरित्यर्थः । यच्चेति चशब्द एवानुवृत्तिज्ञापकः न च व्यवहितत्वम् । न च प्रकृतिरित्येकव्याख्यानं निराकृत्य यच्चेत्यपव्याख्यानान्तरानुवादेन स्खलितं इति भाति । ङो बुद्धिसन्निहितत्वात् । यथोक्तं यस्य येनार्थसम्बन्धो दूरस्थेनापि तेन सः अर्थता ह्यसमर्थानामानन्तर्यमकारणमिति मन्ददृष्टिपदस्य भ्रमत उपादानार्थभूतार्थद्वयस्योक्तत्वात् तदनुरोधेन सेत्यस्यार्थद्वयमाह **एकस्येति** । एकस्यैव ब्रह्मणो यत्तत्वं ज्ञानानन्दादिरूपं तेनाप्रच्युतस्य पूर्वविपरीतानि यथास्थितरूपापेक्षया विपरीतान्यनेकानि रूपाणि तेजोबन्नादीनि तेषामवभासलक्षणविवर्ततया तदुपादानतया असत्यानेकपदार्थतदवभासयोरुपादानतया चेत्यर्थः । **आश्रयानिरूपणादिना** इत्यादिपदेन विशेषानवभासलक्षणनिमित्ताभावव्युत्पादनं गृह्यते । **यदवष्टम्भो** यदधिष्ठानकः ।

**चषकः— नञनुवृत्तिर्वेति** । 'सच्च त्यच्चाभवदिति नास्य विश्वत्वमुच्यते' इत्यत्रत्यस्य नञोऽनुवृत्तिर्वेत्यर्थः । 'न च प्रकृतिशब्देन ब्रह्मोपादानमुच्यते' इत्यत्रत्यस्य वा नञोऽनुवृत्तिरित्यर्थ इत्यप्यर्थापयन्ति । **यदवष्टम्भो** यदधिष्ठानकः ।

**॥ इति तद्व्याख्यानिराकरणम् ॥**

**॥ इति षष्ठाधिकरणव्याख्यानिराकरणे**
**मायावाद्येकदेशिनां 'ब्रह्म प्रपञ्चारोपाधिष्ठानम्' इति व्याख्याया निराकरणम् ॥**

* * *

**॥ अथ षष्ठाधिकरणव्याख्यानिराकरणे मायावाद्येकदेशिनां 'विवर्तमत'स्य निरासः ॥**

**॥ तत्रादौ विश्वस्य ब्रह्मविवर्तत्वनिरसनम् ॥**

**॥ तत्राप्यादौ विश्वस्य ब्रह्मविवर्तत्वनिरासः ॥**

**१०८ सु०—** मायावादिनो हि केचित् 'ब्रह्मैव स्वाविद्यया जगदाकारेण विवर्तते स्वप्नादिवदि'ति मन्यन्ते । 'बिम्बस्थानीयं ब्रह्म मायाशक्तिमत् कारणं, जीवाश्च प्रत्येकमविद्याऽनुबद्धाः', इत्यपरे । 'मायाऽविद्याप्रतिबिम्बितं ब्रह्म जगत्कारणम्, विशुद्धं च





ब्रह्मामृतत्वालम्बनं, जीवाश्चाविद्याऽनुबद्धा' इत्यन्ये । 'जीवा एव स्वविद्यया प्रत्येकं प्रपञ्चाकारेण ब्रह्म विभ्राम्यन्ति, सादृश्याच्च प्रपञ्चैकतावभासः, अनेकावगतद्वितीयचन्द्रवत्, स्वरूपापेक्षया च ब्रह्म जगत्कारणमि'त्येके ।

तत्र अवान्तरभेदमविवक्षित्वा द्वेधैव विकल्पितम् । 'इह जीवगे'ति अनुक्त्वा 'ततोऽन्यगे'ति वदता स जीवः किं ब्रह्मणोऽन्यो(ऽनन्यो वा) न वा इत्यपि विकल्पः सूचितः । तत्र द्वितीयः प्रथमे प्रविशतीति तं दूषयति **ब्रह्मणश्चेदिति** ।

## अनु०— ब्रह्मणश्चेत्क्व सार्वज्ञम्

यदि ब्रह्मणो वि(श्व)भ्रमस्तदा, भ्रमस्य विशेषाज्ञानपूर्वकत्वात् तदपि ब्रह्मणोऽङ्गीकरणीयम्; तथा च तस्य सार्वज्ञ्यं न स्यात् ।

यदि च न ब्रह्मणि सार्वज्ञ्यं, तर्हि क्व तत्स्यात् । न तावज्जीवे, अनुभवविरोधात् । नापि जडे, ज्ञानमात्रासम्भवात् । तथा च 'यः सर्वज्ञः' इत्यादिश्रुतिवैयर्थ्यं स्यात् ।

ननु सार्वज्ञ्यमपि ब्रह्मणो भ्रान्त्यैवेति चेन्न, यादृशतादृशस्यापि विशेषाज्ञानविरोधित्वात्; अन्यथा शुक्तिज्ञानवतोऽपि तदज्ञानं न विरुद्ध्येतेति भ्रमानुच्छेदप्रसङ्गः ।

उपलक्षणं चैतत् । ब्रह्मणो विशेषाभावात् तदनवभासनिमित्तो भ्रमो नोपपद्यते । स्वरूपं तु स्वप्रकाशतया सिद्धम् । असिद्धत्वे वा (च) सुतरां विभ्रमानुपपत्तिः, अधिष्ठानानुपलम्भादित्यपि द्रष्टव्यम् ।

द्वितीयस्याद्यं दूषयति **अन्यगा चेदिति** ।

## अन्यगा चेत्स्वतोऽन्यता ।

यदि ब्रह्मव्यतिरिक्तजीवाश्रया विश्वभ्रान्तिरङ्गीक्रियते तदा भ्रान्त्याश्रयस्य भ्रान्तिकल्पितत्वायोगात् जीवब्रह्मणोः **अन्यता** स्वाभाविकीत्यापन्नम् । ततश्चापसिद्धान्त इति ।





**परि०— विवर्तत इति** । स्वभ्रान्तिविषयो भवतीत्यर्थः । **इत्यपर इति** । अज्ञानं मायाऽविद्याभेदेन द्विविधमिति मन्वानाः । परव्यामोहनकरी माया । स्वाश्रयव्यामोहनकरी अविद्या । **मायाऽविद्येति** । मायारूपाज्ञाने प्रतिबिम्बितमित्यर्थः । प्राचीनस्तु न प्रतिबिम्बपक्षः । **विशुद्धं** अप्रतिबिम्बितम् । दृष्टिसृष्टिमतमाह **जीवा एवेति** । **प्रपञ्चैकतेति** । प्राचीन एव घटः, त्वया दृष्ट एव मया दृष्टः, इत्याद्येकत्वाभास इत्यर्थः । **स्वरूपेति** । सर्वजीवानुगतं यत् ब्रह्मचैतन्यं स्वरूपं तदपेक्षयेत्यर्थः । **तत्रावान्तरभेदमिति** । ब्रह्मण इत्यत्र किं विवर्ताधिष्ठानभूतचिद्रूपशुद्धब्रह्मणः, अथ सार्वज्ञादिविशिष्टबिम्बभूतब्रह्मणः । तथा मन्ददृष्टिरित्यत्र किं माया वा अविद्या वा इत्याद्यवान्तर-भेदमित्यर्थः । **द्वितीयः प्रथमे प्रविशतीति** । इतिशब्दो हेतौ । सेत्यस्य भ्रमतदुपादान-रूपार्थद्वयस्योक्तत्वात् तथैव व्याचष्टे **यदि ब्रह्मणो विश्वभ्रम इत्यादिना** । **विशेषाज्ञानेति** । विशेषविषयकाज्ञानेत्यर्थः । ननु माऽस्तु ब्रह्मणो विशेषाभावात् तदनवभासनिमित्तको भ्रमः । तथापि स्वस्वरूपानवभासनिमित्तोऽस्तु भ्रम इत्यत आह **स्वरूपं त्विति** । **द्वितीयस्याद्यमिति** । द्वितीयस्तु प्रथमपक्षदोषेणैव निरस्त इति भावः । भ्रान्तिरूपैकार्थपरत्वं 'सा' इत्यस्योपेत्य तावद्व्याचष्टे **यदि ब्रह्मव्यतिरिक्तेति** ।

**गु०दी०— सादृश्याच्च प्रपञ्चैकतावभास** इत्यत्रानन्तजीवभ्रान्तिविषयानन्तजगत्सद्भावात् कथमेकं विश्वमिति प्रतीतिरित्यत उक्तं **सादृश्यादिति** ।

**वं०प०—** जीवा एव ब्रह्म, स्वाविद्यया प्रत्येकं प्रपञ्चाकारेण विभ्राम्यन्तीत्यन्वयः । **तत्रेति** । जीवो ब्रह्मणोऽन्यस्तत्राज्ञानमिति द्वितीयः पक्षः । ब्रह्मण एवाज्ञानमिति प्रथमे प्रविशतीत्यर्थः । **विशेषेति** । अधिष्ठानगतासाधारणधर्मेत्यर्थः । **ज्ञानमात्रेति** । ततश्च सर्वविषयकज्ञानं दूरोत्सारितमित्यर्थः । **वैयर्थ्यमिति** । सार्वज्ञोपेतवस्तुन एवाभावेन निर्विषयत्वादित्यर्थः । **भ्रान्त्यैवेति** । तथा च भ्रान्त्यैव सर्वं जानातीत्यर्थः । यादृशतादृशस्य सार्वज्ञ्यस्य । तथा च विशेषदर्शनं प्राप्तमिति हृदयम् । **विरोधित्वादिति** । तथा च विशेषा-दर्शननिमित्ता भ्रान्तिः न सम्भवतीति भ्रान्त्या सर्वं जानातीत्ययुक्तमिति । **अन्यथेति** । यादृशतादृश-विशेषज्ञानस्यापि विशेषादर्शनाविरोधित्व इत्यर्थः ।

**आनन्दः—** नन्वत्र मतभेदसद्भावाद्विकल्पद्वैविध्यमयुक्तमित्यत आह **मायावादिन इति** । जीवा एव ब्रह्मान्वयः । तर्हि ब्रह्म जगत्कारणमिति वादस्य का गतिरत्राह **स्वरूपेति** । जीवस्य ब्रह्मस्वरूपत्वादित्यर्थः । न द्वितीयः । तवेति द्वितीयः । **अन्यथेति** । विशेषज्ञानेऽपि भ्रमो यदीत्यर्थः । **असिद्धत्व इति** । अधि-ष्ठानज्ञानस्य भ्रमकारणत्वादित्याशयः । ब्रह्मव्यतिरिक्तो जीव इत्यत्र जीवः कल्पितो न वा । नाद्यः । तथा सति पूर्वोक्तदोषापातात् । न द्वितीय इत्याह **जीवेति** ।





**श्रीनिधि०— द्वेधैवेति** । आद्यन्तपक्षावेव विकल्पिताविति भावः । मध्ययोर्ध(?)योस्समान-न्यायत्वाद्दूषणेन विकल्पितौ ।

**शे०वा०—** ननु वक्ष्यमाणरीत्या मायावादिनामवान्तरानेकभेदभिन्नत्वात् तदुपवर्णितस्य ब्रह्मणो जगदुपादानत्वस्य निराकरणार्थं प्रवृत्तेन भाष्यकृता तैरुपवर्णितानामुपादानत्वे विशेषाणामप्यवश्यं निराकरणीयतया ब्रह्मैव जगदाकारेण विवर्तते स्वाप्नादिवदित्याद्यमतानुसारेण मन्ददृष्टिर्ब्रह्मण इति विकल्पवज्जीवा एव स्वाविद्यया प्रत्येकं प्रपञ्चाकारेण ब्रह्म विभ्राम्यन्तीति अन्त्यपक्षानुसारेण जीवगा वेति विकल्पवच्च बिम्बस्थानीयं ब्रह्म मायाशक्तिमत्, कारणं जीवाश्च प्रत्येकमविद्यानुबद्धाः, मायाऽविद्याप्रतिबिम्बितं ब्रह्म जगत्कारणं जीवाश्चा-विद्यानुबद्धा इति द्वितीयतृतीयमतानुसारेण माया बिम्बस्थानीयब्रह्मगताऽविद्या च जीवगतेति वा जीवस्यैव मायाऽविद्याश्रयत्वं ब्रह्मणस्तु तत्प्रतिबिम्बितत्वमिति वेत्यपि विकल्पनीयत्वान्न 'सा मन्ददृष्टिस्तस्यैव ब्रह्मणः किं ततोऽन्यगा' इति द्वेधैव विकल्पकरणमुचितमित्याशङ्क्य परिहरति **मायावादिनो हीति** । **केचिद्** एकजीववादिनः । मायाशक्तिमन्मायासहकृतं मायोपसर्जनकमिति यावत् । प्रतिबिम्बितं ब्रह्म कारणमिति वक्ष्यमाणमताद्वैलक्षण्यज्ञापनाय बिम्बस्थानीयमित्युक्तम् । **मायाऽविद्येत्यत्र** मायारूपाविद्याप्रतिबिम्बितमित्यर्थः । पूर्वमते तु तयोर्भेद एवेति । **अविद्याऽनुबद्धा** मायारूपाविद्याऽनुबद्धाः । ननु यदि जीवाः स्वस्वाविद्यया प्रत्येकं प्रपञ्चाकारेण ब्रह्म विभ्राम्यन्ति कथं तर्हि देवदत्तेन ज्ञात एव घटो यज्ञदत्तेन ज्ञात इत्यादिप्रपञ्चैकत्वावभासः स्वस्वाविद्यानिमित्तकत्वेन प्रतिजीवं प्रपञ्चस्य भिन्नत्वादित्यत आह **सादृश्याच्चेति** । एतदेव दृष्टान्तप्रदर्शनेन स्पष्टयति **अनेकेति** । नन्वेवं जीवानां जगत्कारणत्वे जगत्कारणत्वं ब्रह्मलक्षणमिति सिद्धान्तभङ्गः स्यादित्यत आह **स्वरूपापेक्षयेति** । विशिष्टचैतन्यरूपजीवस्य कल्पकत्वरूपकारणत्वे विशेष्यचैतन्यस्यापि तदवश्य-म्भावादिति भावः । **अवान्तरभेदमविवक्षित्वेति** । मायाऽविद्यारूपेणाविद्यायामवान्तरभेदस्याविवक्षितत्वात् तादर्थ्येन ब्रह्मण्यपि बिम्बप्रतिबिम्बत्वादिरूपविशेषस्याविवक्षितत्वात् पक्षचतुष्टयेऽप्यविद्याया जीवब्रह्मगत-त्वानपायात् । तन्निराकरणेनाविद्यायां निराकृतायां कारणत्वेऽवान्तरविशेषाणामपि निराकृतप्रायत्वाच्च नावान्तर-भेदविवक्षेति भावः । ननु, न जीवो ब्रह्मणोऽन्यो न वेति विकल्पोऽभिप्रेतः, उत्तरत्र दूषणादर्शनादित्यत आह **अत्रेति** । तथा च तद्दूषणेनेव दूषितत्वान्न पृथग्दूषणापेक्षेति भावः ।

ननु ब्रह्मणो भ्रान्त्यङ्गीकारेऽपि नासर्वज्ञत्वमापद्यते भ्रान्तेरज्ञानत्वाभावात् । अस्तु वा कथञ्चिद् ब्रह्मणोऽसर्वज्ञत्वं तथाऽपि सार्वज्ञस्य निराश्रयत्वाक्षेपो युज्यते । ब्रह्मणः सार्वज्ञाभावेऽपि जीवादौ तत्सम्भवात् कुत्रापि सार्वज्ञं नास्तीत्यङ्गीकारेऽपि परस्यानिष्टाभावाच्चेत्यतः तदुपपादयति **यदीति** । **भ्रमस्येति** । शुक्त्यादौ रजतादिभ्रमस्य शुक्तित्वादिरूपाधिष्ठानगतविशेषाज्ञानपूर्वकत्वदर्शनेन भ्रमस्य स्वसमानाश्रयाज्ञानकार्यत्व-निश्चयादिति भावः । **तदपीति** । विशेषाज्ञानमपीत्यर्थः । अन्यथाऽकारणकार्योत्पत्तिप्रसक्तेरिति भावः । अस्तु तर्हि ब्रह्मणोऽज्ञानमपीत्यतो यो यद्विषयकाज्ञानवान्नासौ तज्ज्ञानवानिति व्याप्त्याऽधिष्ठानविशेषाज्ञानवत्त्वाद् ब्रह्मणस्तज्ज्ञत्वाभावान्न सर्वज्ञत्वं स्यादित्याशयेनाह **तथा चेति** । ननु शुद्धस्य ब्रह्मणो नासर्वज्ञत्वमनिष्टं





सविशेषस्यैव ब्रह्मणः सर्वज्ञत्वाङ्गीकारादिति चेत् नानङ्गीकृतत्वमेवानिष्टत्वं किन्तु प्रमाणविरुद्धत्वादिकं, शुद्धस्यासर्वज्ञत्वं च 'तुरीयं तत्सर्वदृक् सदे'ति शुद्धेऽपि सर्वज्ञत्वश्रवणाच्छ्रुतिविरुद्धमेवेति कथं नानिष्टमिति सत्येव दोषे दोषान्तरमाह **यदि चेति** । **अनुभवेति** । नाहं सर्वज्ञोऽहमज्ञो मामन्यं च न जानामी-त्याद्यनुभवेनासर्वज्ञत्वस्यैव सिद्धेरिति भावः । **ज्ञानमात्रेति** । तोयाभ्यवहारासमर्थस्य मुमूर्षोः शष्कुलीभक्षणस्येव ज्ञानमात्रासम्भववतो जडस्य सर्वज्ञताया असम्भावितत्वादित्यर्थः । ननु च सार्वज्ञस्य सर्वत्राभावोऽप्यस्तु किं बाधकमित्यत आह **तथा चेति** । **वैयर्थ्यमिति** । न च सविशेषस्यैव ब्रह्मणो 'यः सर्वज्ञः' इत्यादि-श्रुतिप्रतिपाद्यत्वान्न तद्वैयर्थ्यमिति वाच्यम्, तदतिरिक्तस्य ब्रह्मणोऽलीकत्वादित्यत्र तात्पर्यात् । ननु ब्रह्मणो निर्विशेषत्वेन विशेषाणामवास्तवतया तज्ज्ञानस्य प्रमात्वायोगात् तस्य विश्वभ्रमहेतुविशेषाज्ञानाविरोधाद्युक्तः सविशेषस्यैव विश्वभ्रम इत्याशङ्कते **नन्विति** । शुक्तौ रजतत्वभ्रमनिवर्तकस्य रङ्गत्वभ्रमस्य शुक्तित्वा-ज्ञानानिवर्तकत्वे तदुपादानकरजतत्वभ्रमानिवर्तकत्वप्रसङ्गेन प्रमाभ्रमसाधारणविशेषज्ञानमात्रस्यैव अधिष्ठान-विशेषाज्ञानविरोधित्वनिश्चयान्न भ्रमरूपविशेषज्ञानवतोऽपि ब्रह्मणो विश्वभ्रमहेतुविशेषाज्ञानं सम्भवतीति कथं विश्वभ्रमः स्यादित्याह **नेति** । यादृशतादृशस्यापीत्यतःपरं विशेषज्ञानस्येति शेषः । प्रमारूपस्यैव विशेष-ज्ञानस्याधिष्ठानविशेषाज्ञानविरोधित्वेऽनिष्टमाह **अन्यथेति** । रङ्गत्वेन शुक्तिज्ञानवतोऽपीत्यर्थः । **तदज्ञानं** रजतत्वभ्रमहेतुशुक्तित्वाज्ञानम् । **भ्रमेति** । रङ्गत्वभ्रमाद्रजतत्वभ्रमनिवृत्तिः न स्यादित्यर्थः । विश्वभ्रमः किं विशेषानवभासनिबन्धनोऽभिप्रेतः किंवा स्वरूपानवभासनिबन्धनः इति विकल्पं मनसि निधायाद्यं दूषयति **ब्रह्मण इति** । विशेषाभावान्निर्विशेषत्वेनाङ्गीकृतत्वादित्यर्थः । अधिष्ठानगतविशेषाज्ञानस्यैव भ्रमहेतुत्वात् ब्रह्मण एव च विश्वभ्रमाधिष्ठानत्वात् तन्निष्ठविशेषानवगम एव भ्रमहेतुर्वाच्यः । न चायमत्रास्तीति भावः । न च न सद्विशेषाज्ञानं तत्र तन्त्रम् । गौरवात् । किन्तु विशेषाज्ञानमेव । लाघवात् । तच्च निर्विशेषत्वादात्मन्यस्त्येवेति युक्तो विशेषानवभासनिमित्त एव भ्रम इति वाच्यम् । असद्विशेषाज्ञानस्य बाधकालेऽपि सत्त्वेन भ्रमप्रसक्त्या सद्विशेषाज्ञानस्यैव भ्रमहेतुत्वावधारणादिति भावः । स्वरूपाज्ञाननिमित्तको भ्रम इति द्वितीयं पक्षं दूषयति **स्वरूपं त्विति** । तथा च न स्वरूपानवभास इति भावः । ननु स्वप्रकाशत्वेऽपि न तत्स्वरूपस्य सिद्धत्वम् । तद्धि स्वविषयप्रकाशत्वं स्वप्रकाशत्वमिति पक्षे स्यात् । न चैतत्परस्य सम्मतम् । कर्तृकर्म-विरोधप्रसक्त्या परेण तदनङ्गीकारात् किन्त्ववेद्यत्वमेव । तथा च स्वप्रकाशत्वेऽपि स्वरूपस्यानवभाससम्भवाद्युक्त एव स्वरूपानवभासनिबन्धनो भ्रम इत्यत आह **असिद्धत्वे वेति** । त्वन्मतेऽपि भ्रान्तेः संस्कारादि-त्रयजन्यत्वादधिष्ठानस्यैव सर्वथाऽनुपलम्भे सामान्याकाराज्ञानात् संस्कारानुद्बोधेन भ्रान्तिकारणविरहान्न भ्रमावसर इति भावः ।

नन्वन्यगतत्वेऽपि कुतोऽन्यतायाः स्वाभाविकत्वम् । न चान्यस्यासत्त्वादन्यत्वस्याप्यसत्त्वे ब्रह्मगे-त्यर्थपर्यवसानान्न प्रथमपक्षाद्भेदः सिद्ध्येदिति वाच्यम् । अन्यस्य कल्पितत्वेन तद्भेदस्यापि कल्पितत्वे बाधकाभावादित्यतः पूर्ववाक्यान्मन्ददृष्टिरित्यस्य आवृत्तिम्, अन्यशब्दस्य ब्रह्मव्यतिरिक्तजीवपरत्वं चाश्रित्य





निरसनीयपक्षं मूलारूढं कुर्वन् व्याचष्टे **यदीति** । **भ्रान्त्याश्रयस्येति** । भ्रान्त्याश्रयस्यैव भ्रान्तिकल्पितत्वे भ्रान्तितदाश्रययोः परस्परापेक्षत्वादन्योन्याश्रयापत्तेरिति भावः । इष्टापत्तिं परिहरति **ततश्चेति** ।

**वा०र०— एकजीववादिन इति** । यद्यप्याद्यपक्षे जीवब्रह्मविभागो नास्ति ब्रह्मैव विवर्तत इत्युत्त्यनन्तरं जीवस्वरूपस्य पक्षान्तर इवाकथनात् । तथापि मोक्षाधिकारितया अविद्याकार्यसंसारानुभवितृतया च कश्चिज्जीवः प्रादुर्भूतं (प्रोद्भूतं) च ब्रह्मेति विभागानङ्गीकारे शास्त्रस्य निरधिकारिकत्वप्रसङ्ग इति । तन्निरासाय जीवाङ्गीकारोऽपि सिद्धः किन्तु स एक एवेति मतान्तराद्वैलक्षण्यमस्य मतस्यास्तीत्याशयेनैकजीवेत्युदितम् । वस्तुत एकजीववादिनां पक्षेऽप्येकमेव ब्रह्मजीवोऽपि कल्पित एवेति मतान्तरमस्ति तदाश्रित्यैकजीवेत्युक्तम् । ब्रह्मैव स्वाविद्ययेत्युक्त्या मायाविद्याभेदस्य तन्मते अभावेनाविद्यावच्छिन्नचैतन्यरूपजीवस्वरूपासिद्धेः । ततश्चात्र मूले एकस्कन्धचैतन्यपक्षविधानं केचिदित्यनेनेति प्रतिभाति । द्वितीयपक्षे द्विस्कन्धचैतन्यमतमभिप्रेतम् । तृतीयपक्षे त्रिस्कन्धचैतन्यमतमभिप्रेतम् । आद्यमतवन्मायाविद्याभेदशून्यं जीवाश्रिताविद्याकार्यत्वमवष्टभ्य प्रकृतमतं चतुर्थपक्षे इति च विवेकः प्रतिभाति । टीकाकृता तु आद्यमतस्यैकजीवाज्ञानवादिमतत्वोक्त्येतरेषां बहुजीववादिनां तत्त्वं स्पष्टमिति तेन रूपेण साम्यं रूपान्तरेण वैषम्यं च मूल एव स्पष्टमिति सूचितम् । त्रैविध्यमत्रेति विवरणोक्तपक्षाणामप्यत्रान्तर्भावः । किन्तु तत्राविवक्षितोन्त्यः पक्षोऽत्र मूलेऽधिक इति बोध्यम् ।

मूले **स्वाविद्ययेति** । रज्वाः सूत्रद्वयवत् अविद्या ब्रह्मणी विवर्तेते इत्यर्थः । मायोपसर्जनकमिति यावदिति मायोपरक्तमित्यर्थः । **मायाऽविद्येति** । तृतीये मायाद्वारा ब्रह्मोपादानं तन्तुद्वारा अंशः पटस्यैवेत्यभिप्रेतमिति बोध्यम् । मायारूपाविद्याप्रतिबिम्बितत्वमात्रं ब्रह्मणः न तु मायानुबद्धत्वं मतान्तर इवेति कथमविद्यानुबद्धा इवेत्येवोक्तं मूल इत्यतो व्याचष्टे **मायारूपाऽविद्यानुबद्धा इति** । **दूषणादर्शनादिति** । अन्यत्वपक्षदूषणदर्शनेऽप्यनन्यत्वपक्षदूषणस्य अदर्शनादित्यर्थः । दूषितत्वादित्यत्रानन्यत्वपक्षस्येति शेषः । .............अनुसारेणाह **ननु शुद्धस्येत्यादिना** । **तुरीयं तत्सर्वदृगिति** । ननु 'सर्वं तु दर्शनोन्मुक्तौ तुरीयः परमेश्वर' इति मण्डूकोपनिषद्भाष्ये व्याख्यानादन्यस्य ज्ञानप्राप्तत्वपरमिदं वाक्यं कथं शुद्धस्य सर्वज्ञत्वे प्रमाणतयोदाहृतमिति चेत् । सत्यम् । तथाप्यर्थान्तरविवक्षयेहोपात्तमिति दोषः । यथा परो मात्रयेत्यादेः मात्रायाः मितेरिति जन्माधिकरणादौ व्याख्यानेऽपि ज्योतिरधिकरणसुधायां मापयन्ती विषयानिति मात्रा इन्द्रियगण इति व्याख्यातम् । तथा न ते विष्णवित्यादेरपि व्याख्यानभेदो दृष्ट इति ज्ञेयम् । **रजतत्वभ्रमहेत्विविति** । न च रजतत्वभ्रमहेतुशक्तित्वाज्ञानमन्यत् अन्यच्च रङ्गत्वभ्रमहेत्वज्ञानमित्यत्र प्रमाणाभावेन शुक्तित्वाज्ञानस्य एकत्वसिद्ध्या रङ्गत्वभ्रमे जातेऽपि तदज्ञानस्य अनुवर्तमानतया तदविरोधापादानं इष्टमेवेति वाच्यम् । रङ्गत्वभ्रमोपादानाज्ञानस्य रजतत्वभ्रमोपादानाज्ञानात् भेदाभावे रङ्गत्वभ्रमस्योपादानशुक्तित्वाज्ञानानिवर्तकत्वप्राप्त्या तदुपादानकरजतत्वभ्रमनिवर्तकत्वप्रसङ्गेन अज्ञानभेदस्यैव अङ्गीकर्तव्यतायाः अन्यथानुपपत्तिप्रमाणसिद्धत्वात् । न च रजतवैलक्षण्यदर्शनरूपरङ्गत्वभ्रमसामग्र्यैव विरुद्धत्वेन अज्ञाननिवृत्त्यभावेऽपि रजतत्वभ्रमनिवृत्तिसम्भवान्नान्यथानुपपत्तिरिति वाच्यम् । रङ्गत्वभ्रमसामग्र्यापि रजतत्वभ्रमोपादानाज्ञानं निवृत्त्यैव तदुपादानकरजतत्व-





भ्रमस्य निवर्तनीयत्वात् । अन्यथा तत्तद्विशेषदर्शनसामग्र्यैव तत्तद्भ्रमनिवृत्तिसम्भवेन तत्तदुपादानज्ञानानिवृत्तिरेव स्यात् । वल्मीके स्थाणुत्वभ्रमनिवर्तकस्यापि पुंस्त्वभ्रमस्य वल्मीकत्वप्रमानिवर्त्यकत्वेनान्ततो भ्रमकालाज्ञातेत्यादिना न्यायामृतेऽपि भ्रमस्य भ्रमान्तरनिवर्तकत्वमभ्युपेत्यैवात्यन्तिकभ्रमनिवृत्तेः प्रमासाध्यत्वमुक्तमिति न तद्विरोधः । अत एव अनेकप्रतिपत्तृस्थत्वे अनेकाज्ञानसद्भावात् । किञ्चित्पुरुषीयाज्ञाननाशेऽपि पुरुषान्तरीयाज्ञानसद्भावात् तदनुपादानभ्रमो युक्तः । एवमेव अधिष्ठानयाथात्म्यज्ञानस्यापि अज्ञानमनिवर्त्यैव भ्रमनिवर्तकत्वापत्त्या ज्ञाननिवर्त्यत्वरूपमिथ्यात्वस्य तूक्तज्ञानरूपशुक्तिज्ञाने अभावप्रसङ्ग इत्येषा दिक् । प्रतिकूलतर्कपराहतिस्थलीयन्यायामृतानुसारेणाह **अधिष्ठानगतेत्यादिना** । **असद्विशेषाज्ञानस्येति** । उपलक्षणं चैतत् । वल्मीकस्थाणुत्वभ्रमनिवर्तकस्यापि पुंस्त्वभ्रमस्य वल्मीकत्वप्रमानिवर्त्यत्वेनात्यन्तिकभ्रमनिवृत्तिः भ्रमकालाज्ञानाधिष्ठानगतविशेषप्रमयैव निवर्तत इत्यात्यन्तिकतन्निवृत्त्यर्थं अधिष्ठानगतसद्विशेषज्ञानस्यावश्यकत्वं चेति ज्ञेयम् । **संस्कारादीति** । संस्कारसम्प्रयोगदोषरूपत्रयेत्यर्थः । **अन्यत्वस्याप्यसत्त्व इति** । ब्रह्मणोऽन्यस्यैवाभावे अन्यत्वरूपधर्मितावच्छेदकाभावेन तेन रूपेण ब्रह्मगेत्युक्तब्रह्मगतत्वपक्षव्यावर्तकत्वमन्यगतत्वपक्षस्य न सम्भवतीति ब्रह्मगेत्येव पक्षः पर्यवसन्न इत्यर्थः ।

**स०व्र०— साद्दश्याच्चेति** । त्वया दृष्टो मया दृष्टश्च घट एक एवेत्यादिरूप इत्यर्थः । नन्वेवमविद्यावच्छिन्नचैतन्यरूपस्य जीवस्य प्रपञ्चकल्पकत्वे ब्रह्मणः प्रपञ्चकारणता श्रुत्यादिसिद्धा कथमित्यत आह **स्वरूपापेक्षयेति** । अवच्छिन्नस्य कल्पकत्वरूपे कारणत्वे शुद्धस्वरूपस्यापि तद्व्यपदेशो युक्तः, कार्यगतधर्माणां कारणेऽपि व्यपदेशस्य बहुलमुपलम्भादिति भावः । **द्वेधैवेति** । 'तस्यैवे'त्यनेनाद्यपक्षस्येतरेषां च 'ततोऽन्यगा' इत्यनेन सङ्गृहीतत्वादिति भावः । ननु माऽस्तु विशेषाभावात् तदनवभासनिमित्तो भ्रमः तथापि स्वरूपानवभासनिमित्तो भविष्यतीत्यत आह **स्वरूपं त्विति** ।

**विट्ठल०— ब्रह्मैव स्वाविद्ययेति** । स्वाविद्यया स्वाश्रिताविद्यया विवर्तते प्रतिभासते । यथा स्वप्ने स्वयमेव जगतुरगाद्यात्मना विभ्राम्यन्ति एवं ब्रह्मैव प्रतिबिम्बभूता स्वयमेव जगदाकारेण विभ्राम्यन्तीति भावः । अयं पक्षो एकजीववादिनाम् । **बिम्बस्थानीयमिति** । बिम्बभूत **अमृतत्वालम्बनं** ...जकत्वपरिहारो द्रष्टव्यः ।

**चषकः— विवर्तते** आरोपविषयो भवति । **ब्रह्मैव स्वाविद्ययेति** । एकजीववादिनामयं पन्थाः । एतत्कल्पे च न बद्धमुक्तव्यवस्थेति ध्येयम् । **मायाशक्तिमत्** । उपसर्जनीभूतमायाख्यसहकारिविशेषितम् । ब्रिम्बस्थानीयमिति विशेषणोपादानं त्वभिधास्यमानमतान्तरवैलक्षण्यप्रदिदर्शयिषयेत्यवसेयम् । **मायाऽविद्याप्रतिबिम्बितमिति** । मायारूपाविद्याप्रतिबिम्बितमित्यर्थः । पूर्वमते तु तयोर्भेद एवेति ज्ञेयम् । **अविद्यानुबद्धाः** मायारूपाविद्यानुबद्धाः । ननु जीवाः प्रत्येकं स्वस्वाविद्यया ब्रह्मप्रपञ्चाकारेण विभ्राम्यन्तीत्युपगतौ जीवसमसङ्ख्यप्रपञ्चापत्त्या निखिलजीवाधिगतप्रपञ्चव्यक्तेरेकताऽध्यवसायो निर्निबन्धनः स्यादित्यत आह **साद्दश्यादिति** । प्रपञ्चैकतेत्यत्रोपमेयवाचकपदप्रकृतिकसप्तम्याः 'सुपो धात्वि'ति लुप्ततया चन्द्रवदिति वतिरपि सप्तम्यन्तादेव





'तत्रे'त्यनुशासनात् । ननूक्तदिशा जीवानां जगद्धेतुत्वोपगमे जगत्कारणत्वं ब्रह्मलक्षणमिति मतप्रच्युतिः प्रसज्येतेत्यत आह **स्वरूपापेक्षयेति** । उपहितस्य हेतुत्वेऽनुपहितस्यापि तदवश्यम्भावात् कार्यगतधर्माणां कारणेऽपि व्यपदेशोपलम्भादिति भावः । **अवान्तरभेदमविवक्षित्वेति** । मायात्वाविद्यात्वावच्छिन्नप्रति-योगिताकभेदं बिम्बत्वप्रतिबिम्बत्वावच्छिन्नप्रतियोगिताकभेदं च अविवक्षित्वेत्यर्थः । कल्पचतुष्टय्यामविद्याया जीवब्रह्माश्रितत्वानपायेन तत्प्रतिविधानेनाविद्यायां प्रतिविहितायां कारणत्वेऽवान्तरवैचित्र्यस्याप्यपहस्तितदेश्य-त्वादिति भावः । **द्वेधैवेति** । 'तस्यैवे'ति 'अन्यगे'ति च मौलप्रतीकखण्डाभ्यामाद्यस्येतरेषां च सङ्गृहीत-त्वादित्याशयः । ब्रह्मणि विशेषवैधुर्येण तदनवभासनिमित्ततां भ्रमस्यापास्य स्वरूपानवभासनिमित्ततामपि तस्यापहस्तयते **स्वरूपं त्विति** ।

**१०९ सु०— नन्वस्तु जीवब्रह्मभेदो वास्तवः, अनात्मप्रपञ्चोऽस्तु भ्रान्तिकल्पितो ब्रह्मणीत्यत आह नेति ।**

**अनु०— नादेहयोगिनो दृष्टिरिति तत्कारणं स्वतः ॥**

**यद्यपि नैवं मायावादिनो मन्यन्ते, तथाऽपि सूत्रार्थनिराकरणाय प्रवृत्तस्य तत्रैवा-नुपपत्तिव्युत्पादनं श्लाघ्यमित्यारम्भः ।**

**न केवलं ब्रह्मव्यतिरिक्तानां जीवानामकल्पितत्वम् । किन्तु देहयोगरहितस्ये-न्द्रियाभावात् पदार्थदर्शनं न सम्भवतीत्यतो हेतोः आरोपकारणमिन्द्रियं तदाश्रयो देहश्च कल्पनां विनैवास्तीत्यङ्गीकरणीयम् । न हि सुखादिवद्रजतादिवद्वाऽस्य प्रपञ्चस्य साक्षि-मात्रसिद्धत्वं परो मन्यते, देहेन्द्रियाणामप्युत्पत्तिमत्त्वात् । तत्कारणं च स्वत इत्यङ्गी-करणीयम् ।**

**परि०— तत्रैवेति** । चैतन्यादन्यत्सर्वं चैतन्ये कल्पितम् । चैतन्यमेकं सत्यमित्येवंरूप-सूत्रार्थ एव भ्रान्तिकल्पितं वस्तु किमस्तीति वक्ष्यमाणानुपपत्तिव्युत्पादनम् उत्तममिति 'नादेह' इत्यादिः 'कल्पितमि'त्यन्त आरम्भ इत्यर्थः । स्वत इत्यस्यार्थमाह **कल्पनां विनैवेति** । साक्षि-वेद्यत्वात् न देहाद्यपेक्षेत्यत आह **न हि सुखादिवद्रजतादिवद्वेति** । यथा अन्तःकरणवृत्त्युप-हितचैतन्यरूपेण वा शुद्धचिद्रूपेण वा साक्षिणा वेद्यं सुखदुःखादिकम्, शुक्त्याद्यवच्छिन्नचैतन्या-वरकाऽविद्यावृत्त्युपहितचैतन्यरूपसाक्षिवेद्यं रजतादिकं, तथा घटादि(प्रपञ्च इति)कं प्रपञ्चं परो मन्यत इत्यर्थः । तथात्वे तद्वदेव ज्ञातैकसत्त्वापातादिति भावः ।





**यादु०— तत्रैवेति** । सूत्रेष्वेव वक्ष्यमाणरीत्या निर्विषयत्वापत्तिरूपानुपपत्तिव्युत्पादनमित्यर्थः । ननु आरोपस्याविद्यावृत्तिप्रतिबिम्बितचैतन्यलक्षणसाक्षिरूपतया नेन्द्रियजन्यत्वमित्यत आह **न हि सुखादिवदिति** । **अस्य प्रपञ्चस्येति** । साधारणप्रपञ्चस्येत्यर्थः । तथा च असाधारणप्रपञ्चारोपस्योक्तसाक्षिरूपत्वेऽपि साधारण-प्रपञ्चारोपस्यान्तःकरणवृत्तिप्रतिबिम्बितचैतन्यरूपत्वमेव । अन्तःकरणवृत्तिश्च नेन्द्रियव्यापारं विना भवतीति भावः ।

**वं०प०— अनात्मप्रपञ्चः** भेदातिरिक्त इति शेषः । **तत्रैव** सूत्र एवेत्यर्थः । तथा च जीवब्रह्मभेदस्य वास्तवत्वमङ्गीकृत्य तदतिरिक्तानात्मप्रपञ्चस्यैव भ्रान्तिकल्पितत्वमेतत्सूत्रार्थ इति यः कोऽपि वा ब्रूयात् तं प्रति नायं सूत्रार्थोऽनुपपन्नत्वादिति वक्तुमयमारम्भ इत्यर्थः । **कल्पनां विनैवेति** । सत्यतयैवेत्यर्थः । नन्वनात्म-प्रपञ्चस्य सर्वस्यापि साक्षिसिद्धत्वाङ्गीकारात् तत्र का देहेन्द्रियाद्यपेक्षेत्यत आह **न हीत्यादि** ।

**आनन्दः—** अनात्मप्रपञ्चस्याकल्पितत्वमुपपादयितुं शङ्कामुत्थापयति **नन्वस्त्विति** । नन्विदमप-सिद्धान्तग्रस्तं मायिना कथं शङ्क्यत अत्राह **यद्यपीति** । **तत्रैव** सूत्रार्थ एव । अनात्मा प्रपञ्चारोपाधिष्ठानत्व-मादायापि सूत्रार्थभूतं तूपादानत्वमिति । वदिष्यतीति तेनापि प्रकारेणाशङ्क्य निराकरणमिति भावः । स्वत इत्यस्य व्याख्या **देहश्च कल्पनां विनैवेति** । ननु प्रपञ्चसुखादिवत्साक्षिमात्रत्वसिद्धत्वान्न देहाद्यपेक्षेत्यत्राह **न हीति** । **देहेन्द्रियाणामिति** । तत्कारणानां कल्पितत्वे इन्द्रियाणामपि कल्पितत्वं स्यादिति भावः ।

**श्रीनिधि०— तत्रैवानुपपत्तिर्व्युत्पादनमिति** । येनकेनापि प्रकारेण येनकेनापि समयानुसारेण स्वयुक्त्या वा सूत्रस्यापव्याख्याने कृते तन्निराकरणमावश्यकम् । अन्यथा स्वकृतसूत्रार्थदार्ढ्यं न स्यादिति भावः ।

**शे०वा०—** ननु 'नादेहयोगिनः' इत्यादिना देहेन्द्रियादीनां वास्तवत्ववर्णनमनर्थकम् । 'स्वतोऽन्यते'-त्यनेनैवापसिद्धान्तस्य वर्णितत्वादित्याशङ्क्य 'अन्यगा चेदि'त्यादित्यादिग्रन्थस्य 'नापसिद्धान्तमात्रे तात्पर्यं येन स्वतोऽन्यते'त्यनेनैव तत्सिद्धेरुत्तरवैयर्थ्यं स्यात् । किन्तु परमते प्रकृतिश्चेत्यादिसूत्राणां निर्विषयत्वेन अनारम्भणीयत्वेऽपि । ततश्च स्वतोऽन्यतेत्यनेनापसिद्धान्तवर्णनेऽपि अधिकरणानारम्भणीयत्वासिद्धेः तदर्थमुत्तरो ग्रन्थ इत्यभिप्रेत्योत्तरग्रन्थमवतारयति **नन्वस्त्विति** । देहेन्द्रियादिरित्यर्थः । ततश्चानात्मप्रपञ्चस्यैव भ्रान्ति-कल्पितत्वप्रतिपादनार्थमेवैतदधिकरणारम्भोऽस्त्विति भावः । **एवमिति** । जीवब्रह्मभेदस्य वास्तवत्वमङ्गीकृत्य अनात्मप्रपञ्चस्य कल्पितत्वमस्त्वित्येवमित्यर्थः । **तत्रैवेति** । प्रकृतिश्चेत्यादिसूत्रेष्वेव वक्ष्यमाणरीत्या निर्विषय-त्वेनानारम्भणीयत्वानुपपत्तिव्युत्पादनार्थमित्यर्थः । **देहयोगरहितस्येति** । प्रलये सत्यप्यज्ञानादौ देहादेरभावेन प्रमाया इव करणजन्यभ्रमस्याप्यदर्शनादिति भावः । **इत्यतो हेतोरिति** । अनेन मूले **इति**शब्दो हेत्वर्थ इत्युक्तं भवति । **कल्पनां विनैवेति** । भ्रान्तिकल्पितस्य देहादेर्भ्रान्तिहेतुत्वेऽन्योन्याश्रयप्रसङ्गादिति भावः । न च





रूप्याद्यध्यासे देहादेर्व्यावहारिकं कारणादिसमं वा सत्त्वं तन्त्रमिति जगदध्यासेऽपि तथैव स्यादिति न देहादेरकल्पितत्वसिद्धिरिति वाच्यम् । व्यावहारिकत्वस्य अद्याप्यसिद्धत्वेनान्योन्याश्रयप्रसङ्गात् । रूप्याद्यध्यासे कारणादेरप्यधिष्ठानसमसत्ताकत्वेन जगदारोपेऽपि कारणादेः पारमार्थिकत्वाच्चेत्यन्यत्र विस्तरः । नन्वारोपस्य अविद्यावृत्तिप्रतिबिम्बितचैतन्यलक्षणसाक्षिरूपतया नेन्द्रियजन्यत्वमित्यत आह **न हीति** । **अस्येति** । साधारणप्रपञ्चस्येत्यर्थः । तथा च असाधारणप्रपञ्चारोपस्य उक्तसाक्षिरूपत्वेऽपि साधारणप्रपञ्चारोपस्य अन्तःकरणवृत्तिप्रतिबिम्बितचैतन्यरूपत्वात् अन्तःकरणवृत्तेश्चेन्द्रियव्यापारं विनाऽनुपपत्तेः इन्द्रियजन्यत्वमेवेति भावः ।

**वा०र०**— 'अनात्मप्रपञ्च इती'ति प्रतीकोपादानानन्तरं देहेन्द्रियादिरित्यर्थ इति पाठः । उपरितनपङ्क्तौ मूलकोशे तथैव पाठात् उक्तस्थलीय 'न च रूप्याध्यासे दोषादीनां देहेन्द्रियान्तानां व्यावहारिकं वा करणादिसमं वा सत्त्वं तन्त्रमि'ति न्यायामृतानुसारेणाह **न च रूप्याद्यध्यास इत्यादिना** । **असिद्धत्वेनेति** । उपलक्षणं चैतत् । प्रपञ्चव्यावहारिकत्वस्योत्तरत्र निराकरिष्यमाणतया तदसिद्धयसम्भवाच्चेति ज्ञेयम् । किञ्च दोषादेरध्यस्तत्वे तदभावस्य तात्त्विकत्वापातेन अतात्त्विकेन तात्त्विककार्यप्रतिबन्धायोगेन दृष्टतया बौद्धकल्पितवेदजन्यज्ञानस्येव जगज्ज्ञानस्य प्रामाण्यापाताच्च । दोषाद्यध्यासस्यापि दोषान्तरापेक्षत्वेन अनवस्थाद्यापातश्चेत्यादिदूषणान्युक्तस्थलीयन्यायामृते ज्ञेयानीत्याह **इत्यन्यत्र विस्तर इति** ।

**स०व्र०**— **अनुपपत्तिव्युत्पादनमिति** । निर्विषयत्वापत्तिरूपानुपपत्तिव्युत्पादनमित्यर्थः ।

**चषकः**— **तत्रैव** सूत्रेष्वेव । **अनुपपत्तीति** । अभिधास्यमानदिशा निर्विषयत्वापत्तिव्युत्पादनमित्यर्थः । ननु नेन्द्रियकारणकतामारोपस्य परो मन्यते । अविद्यावृत्तिप्रतिबिम्बितचैतन्यलक्षणसाक्षिरूपत्वात् तस्येत्यत आह **न हि सुखादिवदिति** । **अस्य प्रपञ्चस्य** घटपटादिरूपचेतनमात्रज्ञेयप्रपञ्चस्य । एवं च असाधारणपदार्थारोपस्य साक्षिरूपत्वेऽपि साधारणप्रपञ्चस्यान्तःकरणवृत्तिप्रतिबिम्बितचैतन्यरूपत्वमेवेति इन्द्रियव्यापारमन्तरेणान्तःकरणवृत्तिर्नोदेतीति भावः ।

**११० सु०— अस्तु ब्रह्मव्यतिरिक्तानां जीवानां सकारणानां तदीयदेहेन्द्रियाणां च अभ्रान्तिकल्पितत्वम्, द्रष्टृत्वेन दर्शनकरणत्वेन तदाश्रयत्वेन तत्कारणत्वेन च भ्रान्तेः पूर्वभावित्वात्; तदतिरिक्तस्तु प्रपञ्चोऽस्तु भ्रान्तिकल्पित इत्यत आह देहिन इति ।**

**अनु०— देहिनः कारणयुता देहाश्च यदि न भ्रमात् ।**
**किं भ्रान्तिकल्पितं तत्र**

**कारणशब्देन ज्ञानकारणानामिन्द्रियाणां देहेन्द्रियकारणानां च ग्रहणम् । सिद्धा इति शेषः । किं आक्षेपे । तत्र तर्हि प्रपञ्चे ब्रह्मणीति वा । अनन्तजीवसकारणकदेहेन्द्रियातिरिक्तस्य प्रपञ्चस्याभावात् । विषयाणामपि देहेन्द्रियनिर्वाहार्थत्वादिति भावः ॥ तथा च न केवलमपसिद्धान्तः, प्रकृतिश्चेत्यादिसूत्राणां निर्विषयत्वापत्तिश्च स्यादिति शेषः ।**

**परि०**— जीवानां सकारणकदेहेन्द्रियाणां च कुतो न भ्रान्तिकल्पितत्वमित्यत आह **द्रष्टृत्वेनेति** । जीवानां द्रष्टृत्वेन, इन्द्रियाणां दर्शनकारणत्वेन, देहस्येन्द्रियाश्रयत्वेन, कारणानां च देहेन्द्रियकारणत्वेनेत्यर्थः । अन्यथाऽन्योन्याश्रयादिति भावः । **भ्रान्तेरिति** । जीवब्रह्मभेदहेतोर्भ्रान्तेरित्यर्थः ।

**यादु०**— **द्रष्टृत्वेनेत्यादि** । द्रष्टृत्वेन जीवानां, दर्शनकारणत्वेनेन्द्रियाणां, तदाश्रयत्वेन देहस्य, देहकारणत्वेन देहकारणानां च भ्रान्तेः पूर्वभावित्वादित्यर्थः ।

**वं०प०**— **भ्रान्तेः** भ्रान्त्यपेक्षया । **प्रपञ्चे** प्रपञ्चमध्ये । नन्वेतदतिरिक्तो विषयरूपः प्रपञ्चोऽस्तीत्यत आह **विषयाणामपीति** । **निर्विषयत्वेति** । मिथ्यात्वेन प्रतिपादनीयस्य वस्तुनोऽभावादिति भावः ।

**आनन्दः**— तथापि देहाद्यतिरिक्तविषयारोपमादाय सूत्रार्थ उपपत्स्यते इत्यत आह **विषयाणामिति** ।

**श्रीनिधि०**— **देहेन्द्रियनिर्वाहहेतुत्वादिति** । अन्नादिविषयाणां शरीरनिर्वाहहेतुत्वं इन्द्रियनिर्वाहहेतुत्वं च उपचयार्थत्वादिति भावः । देशकालादीनामाधारत्वादिना हेतुत्वं द्रष्टव्यम् । भावरूपाज्ञानकारणत्वादिति बहुव्रीहिः ।

**शे०वा०**— **द्रष्टृत्वेनेत्यादि** । द्रष्टृत्वेन जीवानां, दर्शनकरणत्वेनेन्द्रियाणां, तदाश्रयत्वेन देहस्य, तत्कारणत्वेन देहकारणानां च भ्रान्तेः पूर्वभावित्वादिति सम्बन्धः । भ्रान्तिपूर्वभावित्वात् तेषां न भ्रान्तिकल्पितत्वम् । अन्यथाऽन्योन्याश्रयत्वापत्तेरिति भावः । कारणयुता देहाश्चेति समभिव्याहारात् कारणशब्देन देहकारणमात्रपरामर्शभ्रान्तिं वारयति **कारणशब्देनेति** । 'यदि न भ्रमात्' इत्यत्र यदीत्युक्तत्वात् तदनुसारेण तत्रेत्यस्यार्थमाह **तत्र तर्हीति** । प्रकृतत्वात् प्रपञ्चस्य तत्परतयाऽपि तत्रेत्यस्यार्थमाह **प्रपञ्च इति** । प्रपञ्चमध्य इत्यर्थः । ब्रह्मणि कल्पित इति परोक्तदूषणार्थं ब्रह्मपरतयाऽपि तत्रेत्यस्यार्थमाह **ब्रह्मणीति** । ननु विषयप्रपञ्चस्यैव भ्रान्तिकल्पितत्वव्युत्पादनार्थमेवेदमधिकरणम् । तेषां देहेन्द्रियादिरूपभ्रमहेतुभिन्नतया भ्रान्तिकल्पितत्वे उक्तदोषाप्रसरादित्यत आह **विषयाणामपीति** । घटादिविषयाणां जलाहरणादिना तन्निर्वाहार्थत्वमवधेयम् । 'अन्यगा चेत्स्वतोऽन्यते'त्यादिग्रन्थस्य पर्यवसन्नमर्थमाह **तथा चेति** ।





**स०व्र०**— द्रष्टृत्वेन जीवानां, दर्शनकारणत्वेनेन्द्रियाणां, तदाश्रयत्वेन देहस्य, देहकारणानां च पूर्वभावित्वं ज्ञातव्यम् ।

**चषकः**— **द्रष्टृत्वेनेत्यादि** । दर्शनकर्तृत्वेन जीवानां, तत्साधनत्वेनेन्द्रियाणां, तदधिष्ठानत्वेन देहस्य, तद्धेतुत्वेन तत्साधनानां च भ्रान्त्यव्यवहितपूर्वक्षणावच्छेदेन सत्त्वस्यावश्यकत्वादित्यर्थः ।

**॥ इति विश्वस्य ब्रह्मविवर्तत्वनिरासः ॥**

* * *

**॥ अथ विश्वस्य ब्रह्मविवर्तत्वनिरसने उक्तार्थस्योपपादनम् ॥**
**॥ तत्रादौ 'अन्यगा चेत्स्वतोऽन्यता' इत्यनुव्याख्यानोक्तविषयस्योपपादनम् ॥**

१११ **सु०**— ननु 'अन्यगा चेत्स्वतोऽन्यता' इत्ययुक्तम् । जीवब्रह्मभेदस्यापि भ्रान्तिसिद्धत्वात् । भ्रान्त्या ब्रह्मणो भिन्नस्य जीवस्य बाह्याध्यात्मिकार्थभ्रम इति हि मन्यत इत्यत आह **भेदोऽपीति** ।

**अनु०**— भेदोऽपि भ्रमजो यदि ॥

न केवलं प्रपञ्चः, किन्तु जीवब्रह्मणोः **भेदोऽपि यदि भ्रमजः** भ्रमसिद्धः अङ्गीक्रियते । तदा अन्योन्याश्रयता स्यादिति सम्बन्धः ।

अत्र अन्योन्याश्रयताशब्देन चक्रकमुच्यते, तस्यापि बहुष्वन्योन्याश्रयत्वात् । कथमन्योन्याश्रयता इत्यत उक्तम् **भ्रान्तेरिति** ।

भ्रान्तेरज्ञानमूलत्वात्तस्य भेदव्यपेक्षया ।

भ्रान्तेः जीवब्रह्मभेदहेतोर्भावरूपाज्ञानकारणत्वात्, **तस्य** अज्ञानस्य च भेदसापेक्षत्वात् ।

अज्ञानम् अनादित्वात् कथं भेदव्यपेक्षया स्यादित्यत उक्तम् **नाज्ञानेति** ।

